ततो देवी सती नाम्नी पित्रा नाकारिता यदा ॥ तदा गता पुनस्तत्र नाहूतापि पितुर्गृहे । प्राप्यावज्ञां तु सा तत्र देहत्यागमथाकरोत् ॥ सतीदेहसमुत्पन्ना ज्वाला लोकभयावहा । पतिता पर्वते यत्र पूजिता सुखदायिनी ॥ ज्वालामुखीति सा प्रोक्ता सर्वकामफलप्रदा । इदानीं पूज्यते लोकैः सर्वकामफलाप्तये ॥ सा देवी शैलराजस्य पत्नी मेनेति विश्रुता । पितॄणां मानसी कन्या तस्यां जन्म समादधे ॥ ततश्च पार्वती नाम प्रसिद्धमभवत्तदा । सा पुनः शिवमाराध्य भर्तारं समुपाश्रिता ॥ ( अ० ५, ६ )

Canto II. ब्रह्मा सर्वं सुनिश्चित्य देवाज्ञापरिसाधकः । वरं दातुं तदा तत्राजगाम हंसवाहनः ॥ यत्रैष तारको नाम तपस्तप्यति दारुणम् । उवाच वचनं तस्मै वरं ब्रूहि यथेप्सितम् ॥ दैत्य उवाच—यदि प्रसन्नो देवेशो यदि देयो वरो मम । वरद्वयं तदा देयं श्रूयतां च पितामह ॥ त्वया च निर्मिते लोके मत्तुल्यो बलवान्न हि । शिववीर्यसमुत्पन्नः पुत्रः सेनापतिर्यदा । भूत्वा शस्त्रं क्षिपेन्मह्यं तदा मे मरणं भवेत् ॥ दैत्योऽपि (=तारकः) तपसस्तस्माद्विरराम महामुने । वरं लब्ध्वा शुभं तत्र शोणिताख्यं पुरं गतः ॥ सर्वे वै पीडितास्तेन तारकेण दुरात्मना । देवा वा दानवाश्चान्ये यक्षाः किंपुरुषास्तदा ॥ पीडिताः सर्व एवैते तेभ्यो रत्नान्युपाददे । इन्द्रादिभिश्च दिक्पालैः स्वीयं रत्नं समर्पितम् ॥ इन्द्रेणोच्चैःश्रवास्तस्मै धर्मेण दण्डरत्नकम् । कुबेरेण गदा तस्मै निधयो नव एव च ॥ वरुणेन हयाः शुद्धा ऋषिभिः कामधुक्तथा । यत्र यत्र शुभं दृष्टं तत्तदानीतवांस्तदा ॥ समुद्रश्च तथा रत्नान्यदात्तस्मै पुरा मुने । सूर्यश्च तप्यते तावद्यावद्दुःखं न जायते ॥ चन्द्रस्तत्र सदा दृश्यो वायुः सर्वानुकूलवान् । देवानां चैव यद्धव्यं पितॄणां कव्यमेव च ॥ त्रैलोक्यं चैव तत्सर्वं तारकाज्ञापरायणम् । ते देवाश्च सदा तत्र सेवामार्गपरायणाः ॥ देवोद्यानानि सर्वाणि तीर्थान्यपि महामुने । आनीतानि गृहे तेन न किंचिदवशेषितम् ॥ एवं वर्षाण्यनेकानि गतानि पीडितास्तदा । सर्वे देवा मिलित्वा च ब्रह्माणं शरणं गताः ॥ ते सर्वे च तदा गत्वा ब्रह्माणं जगतः प्रभुम् । नमस्कृत्य स्थितास्तत्र नम्रीभूता ऋषीश्वराः॥ तान्विषण्णांस्तदा तत्र दृष्ट्वोवाच पितामहः । यूयमत्र कथं प्राप्ताः किं दुःखं भवतां पुनः ॥ तदहं स्फोटयाम्यद्य साध्यं यदि भवेदिह । इत्येतद्वचनं श्रुत्वा तदीयं परमर्षयः ॥ देवाः सानुचराः सर्वे वचनं चेदमब्रुवन् । भवतः किमविज्ञातं दुःखं च यदुपस्थितम् ॥ तारकाच्चैव यद्दुःखं संभूतं परमेश्वर । इत्येवं वचनं श्रुत्वा ब्रह्मा वचनमाददे ॥ मत्तो नैव वधो योग्यो मत्तो वृद्धिमुपागतः । उपायं वो दिशाम्यद्य श्रूयतां ऋषिसत्तमाः ॥ शिववीर्यसमुत्पन्नः पुत्रश्चैनं हनिष्यति । हिमवच्छिखरे रम्ये शंभुस्तप्यति नित्यशः ॥ सखीभ्यां सहिता तत्र परिचर्यां शिवस्य ह । वचनान्नारदस्यैव उमा पित्रानुशासिता ॥ करोतीह ऋषिश्रेष्ठास्तस्याः संयोगतां व्रजेत् । शिववीर्यं समाधातुं क्षमा नान्या शिवां विना ॥ यथा वीर्यं मदीयं वै जलरूपधरः शिवः । समाधातुं समर्थोऽस्ति तस्मादन्यो न वै पुनः ॥ तथोपायं करिष्यध्वं तदा सिद्धिर्भविष्यति । इत्येवं वचनं तस्य श्रुत्वा ते सर्व एव हि ॥ नमस्कृत्य सुरास्तत्र विचार्य तु परस्परम् । जग्मुस्ते मुनयो देवाः स्वं स्वं स्थानं मुदान्विताः ॥ गतेषु तेषु देवेन्द्रः सस्मार मकरध्वजम् । आगतस्तत्क्षणादेव रत्या युक्तः स वै प्रभुः ॥ (अ. ९, १०)

Canto III. ( स्मरः ) प्रणामं च ततः कृत्वा स्थित्वा प्राञ्जलिरब्रवीत् । किं कार्यं ते समुत्पन्नं स्मृतोऽहं केन हेतुना ॥ तत्त्वं कथय देवेश तत्कर्तुं समुपागतः । इत्युक्त्वा तु महेन्द्राय स्थितस्तूष्णीं प्रियया सह ॥ इन्द्रोऽपि वचनं श्रुत्वा कंदर्पस्य महात्मनः । उवाच वचनं तं वै युक्तं युक्तमिति स्तुवन् ॥ त्वया साधु समारब्धं यत्ते कार्यमुपस्थितम् । तत्कर्तुमुद्यतोऽसि त्वं धन्यस्त्वं मकरध्वज ॥ जयार्थं मम देवेन निर्मितं वज्रमुत्तमम् । अन्यदस्त्रं भवानेव देवेन निर्मितः पुरा ॥ वज्रं हिंसात्मकं विद्धि भवान्सुखकरं मम । द्वयोरपि भवानद्य श्रेष्ठः सर्वेषु चोत्तमम् ॥ वज्रं च निष्फलं स्याद्वै त्वं तु नैव कदापि हि । यतः कार्यं प्रजायेत ततः किं नु प्रियः सदा ॥ तस्मान्मित्रवरस्त्वं च कार्यं कर्तुं समार्हसि ॥ ...न केवलं मदीयं च कार्यं देवसुखावहम् ॥ वयं च याचितारः स्मः कार्यं कार्यं त्वया शुभम् । इत्येवं मघवद्वाक्यं श्रुत्वा तु मकरध्वजः ॥ उवाच प्रेमगम्भीरं गद्गदं स्मितपूर्वकम् । किमर्थं भाषसे देव नान्तरं ह्यावयोरिह ॥ तथापि च महाराज कथयामि शृणुष्व तत् । मुक्तिमार्गं समापन्नं ते शत्रुं पातयाम्यहम्॥ ते पदं कर्षितुं यो वै तपस्तप्यति दारुणम्। क्षणेन पातयाम्यद्य कटाक्षेण स्त्रियास्तथा ॥ देवं वा दानवं वापि ऋषिं वा देवसत्तमान् ॥ मानुषाणां न वै मेऽद्य गणना पातने मता ॥ वज्रं तिष्ठतु दूरे वै शस्त्राण्यन्यान्यनेकशः ॥ किं ते कार्यं करिष्यन्ति मयि मित्रे स्थिते प्रभो । अन्येषां गणना नास्ति पातयामि हरं यदि ॥ एवं तु वचनं तस्य श्रुत्वा हर्षमुपागतः । उवाच प्रीणयन्वाचा कामं कामिसुखावहम् ॥ यत्कार्यं मनसोद्दिष्टं तत्कार्यं कथितं त्वया । शृणु काम प्रवक्ष्यामि यदर्थं स्मरणं तव ॥ तारकाख्यो महादैत्यो ब्रह्मणो वरमुत्तमम् । संप्राप्य पीड्यते लोकान्नष्टा धर्मा ह्यनेकशः ॥ दुःखिता देवताः सर्वा ऋषयश्च तथामलाः । देवानां चायुधान्यत्र विफलान्यभवन्प्रभो ॥ मरणं नैव तस्येत्थं भविष्यति कदाचन । एतस्य मरणं प्रोक्तं शंभुवीर्याद्दुरात्मनः ॥ एतत्कार्यं त्वया साध्यं देवानां परमं सुखम् । ममापि हि हितं लोके कर्तुमर्हसि सांप्रतम् ॥ शंभुश्च गिरिराजे वै तपः परममास्थितः । तत्समीपे च सेवार्थं पार्वती सखिसंयुता ॥ संतिष्ठति महाराज पित्राज्ञया मया श्रुतम् । यथा तस्यां रुचिस्तस्य शिवस्य परमात्मनः ॥ जायते नितरां काम तथा कार्यं त्वया ध्रुवम् । इत्युक्तो वचनं तस्मै तथेत्योमिति तद्वचः ॥ गृहीत्वा शिरसा कामः सदारः सवसन्तकः । यत्र चैव हरः साक्षात्तपते परमं तपः ॥ तत्र गत्वा मधुश्चादौ धर्मान्विस्तारयन्स्थितः । वसन्तस्य च ये धर्मास्ते धर्मास्तद्वने गताः ॥ वनानि च प्रफुल्लानि पलाशानां च तद्वने ॥ पुष्पाणि सहकारेषु अशोकवनिकासु च । बकुलेषु च पुष्पाणि भ्रमराकुलितानि च ॥ तिलकेषु तथैतेषु कोकिलाकलकूजितम् । भ्रमराणां तथा शब्दो ह्यनेकोऽभून्महामुने ॥ चन्द्रस्य विशदा ह्यासन्किरणा दूतिका इव । मानिनः प्रेरयामासुर्दीर्घकाले कामदर्पितान् ॥ मारुतश्च सुखश्चात्र ववौ विरहिणां प्रियः । कामो वनौकसां तत्र मुनीनां दुःसहो ह्यभूत् ॥ अचेतनानां तत्रैव कामशक्तिः सचेतसाम् । अकालिनीं प्रवृत्तिं च मधोर्वीक्ष्य हरस्तदा ॥ आश्चर्यं परमं गत्वा तपः परमदुष्करम् । तपयामास तत्रैव हरो दुःखहरः परः ॥ वसन्ते प्रसृते तत्र कामो रतिसमन्वितः । चूतबाणं समाकृष्य स्थितः पार्श्वे तु वामतः ॥ रत्या युक्तस्तदा कामं दृष्ट्वा को वा न मोहितः । एतस्मिन्नन्तरे देवी पुष्पाभरणभूषिता ॥ सखीभ्यां संयुता तत्र यत्रातिष्ठद्धरः स्वयम् । जगाम शिवपूजार्थं नीत्वा पुष्पा-

०यनेकशः ॥ पृथिव्यां यादृशं लोके सौन्दर्यं विविधं महत् । तत्सर्वं चैकतस्तस्यां पार्वत्यां समुपस्थितम् ॥ आर्तवाणि च पुष्पाणि धृतानि च तया यदा । तत्सौन्दर्यं कथं वर्ण्यमपि वर्षशतैरपि ॥ यदा शिवसमीपे तु गता सा पर्वतात्मजा । तदैवाकर्षयच्चापं रुच्यर्थं शूलपाणिनः ॥ तच्चापं पतितं हस्तात्पार्श्वे तस्य महात्मनः । तयागत्योत्पलाक्ष्या वै दृष्टः शंभुः स्वयं यदा ॥ नमस्कृत्य तदा पूजां कृत्वासीत्पुरतः स्थिता । सा दृष्ट प्रभुणा तत्र सुन्दराङ्गं विवृण्वती ॥ शिवोऽपि वर्णयामास तदङ्गं सुन्दरं तदा । इत्येवं वर्णयित्वा तु तपसो विरराम ह ॥ स्त्रीस्वभावात्तदा सा च लज्जिता सुन्दरी स्वयम् । विवृण्वती तथाङ्गानि पश्यन्ती च मुहुर्मुहुः ॥ एवं चेष्टां तदा दृष्ट्वा शंभुर्मोहमुपागमत् । यद्यालिङ्गनमेतस्याः करोमि किं पुनः सुखम् ॥ क्षणमात्रं विचिन्त्यैवं किमहं मोहमागतः । एवं विवेकमासाद्य पर्यङ्कबन्धनं दृढम् ॥ रचयामास सर्वात्मा ईश्वरः किं पतेदिह । धैर्यस्य च्यवनं दृष्ट्वा विचारे तत्परः शिवः ॥ कारणं किंचिदुत्पन्नं नान्यथेदं भवेदिति । दिशो विलोकयामास परितः शंकरस्तदा ॥ वामभागे स्थितं कामं ददर्श बाणकर्षिणम् । तं दृष्ट्वा क्रोधसंयुक्तः संजातस्तत्क्षणादपि ॥ तृतीयात्तस्य नेत्राद्वै निःससाराग्निरुच्छिखः । भस्मसात्कृतवांस्तेन मदनं तावदेव हि ॥ यावच्च मरुतां वाचः क्षम्यतां वै प्रभो त्वया । भवेन च ततः पूर्वं हतोऽसौ मकरध्वजः । शिवोऽपि तत्क्षणादेव विहायाश्रममुत्थितः ॥ वेगदीर्घीकृतात्मा च गिरिराजः सुतां तदा । समादाय सखीयुक्तां जगाम मन्दिरं स्वकम् ॥ क्षणमात्रं रतिस्तत्र विसंज्ञा ह्यभवत्तदा । भर्तृजन्यं च यद् दुःखं न ज्ञातमृषिसत्तमाः ॥ ( अ. १०,११ )

Canto IV. जातायां चैव संज्ञायां रतिर्दुःखसमन्विता । विललाप तदा तत्र वनमासीत्सुदुःखितम् ॥ मयूराश्चैव नृत्यं हि वृक्षाश्च चलनं जहुः । मृगाश्च भ्रमणं भ्रमरा भृङ्गा गुञ्जारवं पुनः ॥ पक्षिणश्च तदा विप्रा मूकाश्च मुनयो यथा । वायवश्चलनं हित्वा वान्ति नैव दिशो दश ॥ रतिरुवाच—किं करोमि क्व गच्छामि किं कृतं दैवतैरिह । स्वामिनं तु समाहूय हाहा प्रिय प्रियेति च ॥ हस्तौ पादौ तथास्फाल्य केशानत्रोटयत्तदा । ब्रह्मणा सदृशो योगो न सोढो मम कर्मणा ॥ तद्विलापं तदा श्रुत्वा देवाः शिवमुपाययुः । प्रसन्नं कृतवन्तस्ते शिवं लोकसुखावहम् ॥ प्रसन्नो भगवांस्तत्र वचनं चेदमब्रवीत् । अनङ्गस्तावदेव स्याद्यावच्च रुक्मिणीपतिः ॥ द्वारकायां स्वयं स्थित्वा पुत्रानुत्पादयिष्यति । इत्युक्त्वान्तर्दधे रुद्रो देवानां स्तुवतां तदा ॥ देवास्तां च समासाद्य रुद्रस्य वचनाद्रतिम् । उक्त्वा वचस्तदीयं च स्वं स्वं भुवनमाययुः ॥ ( अ. ११ )

Canto V. पितुर्गृहं तदा गत्वा मिलित्वा मातरं मुदा । पुनर्जातं तदात्मानं मेने सा पर्वतात्मजा ॥ निनिन्द च स्वकं रूपं हा हतास्मि तदाऽब्रवीत् । तिष्ठन्ती च सखीमध्ये धिग्रूपं च मदीयकम् ॥ इति सा दुःखिता तत्र स्मरन्ती हरचेष्टितम् । एतस्मिन्समये तत्र नारदो ह्यगमत्तदा ॥ पूजितः सुखमासीनः पृष्टः प्राह शिवस्य च । उक्तवान्वचनं ह्येतत्तपःसाध्यो हरः स्वयम् ॥ नान्यथा लभ्यते देवि देवैर्ब्रह्मादिकैरपि । पार्वती च तदा श्रुत्वा वचनं नारदस्य च ॥ तपःसाध्यं हरं मेने तपोर्थे मन आददे । मातरं पितरं

चैव सखीभ्यां पर्यपृच्छत ॥ सख्यावूचतुः—हिमवच्छ्रूयतां पुत्र्या वचनं बुध्यतेऽधुना । साफल्यं चैव देहस्य रूपस्य च तथा पुनः ॥ भवतश्च कुलस्यास्य साफल्यं कर्तुमिच्छति । इत्येवं च तदा पृष्टे गिरिराजोऽब्रवीदिदम् ॥ मह्यं च रोचते सख्यौ मेनायै रुच्यतां पुनः । जग्मतुर्मातरं सख्यौ तदाज्ञप्ते मुनीश्वराः ॥ गत्वा तु मातरं तस्या वचनं ह्यूचतुस्तदा । तप्तुकामास्ति ते पुत्री शिवार्थे परमं तपः ॥ प्राप्तानुज्ञा पितुश्चैव तुभ्यं च परिपृच्छति । समाकर्ण्य वचस्त्वेतन्मेना दुःखमुपागता ॥ समाहूय तदा पुत्रीमुवाच विह्वला सती । कुत्र यासि तपः कर्तुं देवाः सन्ति गृहे मम ॥ तीर्थानि च विचित्राणि सन्ति किं न पितुर्गृहे । शरीरं कोमलं वत्से तपस्तु कठिनं महत् ॥ इत्येवं बहुधा पुत्री मात्रापि वारिता सती । सुखं नैवात्र संपेदे ह्यनाराध्य शिवं तदा ॥ दुःखं ज्ञात्वा तदीयं सा मात्राज्ञप्ता जगाम ह । सखीभ्यां सहिता तत्र तपस्तप्तुमुपाययौ ॥ हित्वाभरणान्यनेकानि वस्त्राणि विविधानि च । वल्कलं च तदा धृत्वा मौञ्जीं बद्ध्वा सुशोभनाम् ॥ हित्वा हारं तदा चर्म मृगस्य परमं शुभम् । जगाम तपसे तत्र शृङ्गे स्यात्तीर्थमुत्तमम् ॥ गौरीशिखरनामासीत्तपसः करणादिह । सुन्दराश्च द्रुमास्तत्र पवित्राः फलभाजिनः ॥ भूमिशुद्धिं ततः कृत्वा विधाय वेदिकां शुभाम् । उपविश्यासने तत्र चकार परमं तपः ॥ तया तपः समारब्धं मुनीनामपि दुष्करम् । चाञ्चल्यं च तदा त्यक्त्वा शरीरस्य विशेषतः ॥ दीप्तानां च तथाग्नीनां मध्ये स्थित्वा तु घर्मके । वर्षासु स्थण्डिले स्थित्वा शीते जलसमीपगाः । एवं तपः प्रकुर्वाणा वृक्षानारोपयत्तदा । सिञ्चती प्रत्यहं तत्र ह्यातिथ्यं चाप्यकल्पयत् ॥ वातश्चैव तथा शीतो वृष्टिश्च विविधा तदा । दुःखं च विविधं तत्र गणितं न तया तदा ॥ तथा तपस्तया तप्तं मुनिभिश्च सुदुष्करम् । श्रुत्वा च ऋषयस्तत्र विस्मयं परमं गताः ॥ दर्शनार्थं समाजग्मुः कीदृक् तप्तं तपोऽनया । महतां धर्मवृद्धेषु गमनं श्रेष्ठमुच्यते ॥ प्रमाणं तपसो नास्ति मान्यो धर्मः सदा बुधैः । श्रुत्वा दृष्ट्वा तपस्तस्याः किमन्यैः क्रियते तपः ॥ जल्पन्तस्ते तदा तत्र कठिनाङ्गाश्च ये पुनः । तदाश्रमगता ये च विरोधरहितास्तदा ॥ सिंहा गावस्तथान्ये च रागादिदोषसंयुताः । तन्महिम्ना च ते तत्र न बाध्यन्ते परस्परम् ॥ वृक्षाश्च सफलास्तत्र तृणानि विविधानि च । पुष्पाणि च विचित्राणि तत्रासन् ऋषिसत्तमाः ॥ तद्वनं च तदा सर्वं कैलासेन समन्वितम् । जातं च तपसस्तस्याः सिद्धिरूपमभूत्तदा ॥ एतस्मिन्समये देवा ऋषयो नारदादयः । पार्वत्यास्तत्तपो दृष्ट्वा तेजसा व्यापितास्तथा । जग्मुस्ते च तदा तत्र यत्रास्ते वृषभध्वजः ॥ ( त ऊचुः )—पार्वत्या तु तपस्तप्तं दारुणं लोकशोषणम् । अपूर्वदृष्टं नो भावि देवदानवदुर्लभम् ॥ कुरु कार्यं तथा शीघ्रं शिव त्वं परिपालकः । इत्युक्ते नारदप्रख्यैः शंभुर्वचनमब्रवीत् ॥ तया पर्वतराजस्य सुतया तपसा ह्यहम् । क्रीतोऽस्मि वचनं तस्याः करिष्यामि भवत्प्रियम् ॥ इत्युक्त्वा च तदा देवान् विसृज्य शंकरस्तदा । जटिलं रूपमास्थाय जगाम पार्वतीवनम् ॥ तमागतं तदा दृष्ट्वा शिवाप्यपूजयत्तदा । पार्वती कुशलं तं वै पप्रच्छ त्वं कुतो गतः ॥ इति पृष्टे तया तत्र ह्युक्त्वा स्वीयं च तां पुनः । पृष्टवान् कपटेनैव गोपयन् रूपमुत्तमम् ॥ अयि देवि जलं ह्येतत् फलादि च निरन्तरम् । अविच्छिन्नं भवेदत्र यथाशक्ति तपस्यसि ॥ नवेऽपि देवि वयसि कृतं ते तप उत्तमम् । अतः किंचिद्धि पृच्छेयं कथनीयं त्वयाधुना ॥ पूजा

विधिस्त्वया देवि कृतो वै सर्वथात्मना । तस्मान्मैत्री च संजाता रहस्यं नैव गोप्यताम् ॥ किं वाञ्छसि वरं देवि प्रष्टुमिच्छाम्यतः परम् । वरार्थे च तपश्चेद्वै तिष्ठतु तप एव तत् ॥ रत्नं तु ग्रहीतारं वै न पृच्छति ग्रहीष्यति । ईदृशं चैव सौन्दर्यं तत्तु व्यर्थं कृतं त्वया ॥ हित्वाभरणान्यनेकानि चर्मादि च धृतं त्वया । तत्सर्वं कारणं ब्रूहि दृष्ट्वा ह्यमुपागमे ॥ इति पृष्टा तदा तेन सखीं प्रेरयती तदा । तन्मुखेनैव तत्सर्वं कथयामीति सुव्रता ॥ तया च प्रेरिता तत्र सखी जटिलमाह तत् । शृणु साधो प्रवक्ष्यामि यदि त्वं श्रोतुमिच्छसि ॥ यदर्थमेतया सख्या ह्यारब्धं तप उत्तमम् । हित्वेन्द्रप्रमुखान् देवानैश्वर्यसयुतानपि ॥ पतिं पिनाकपाणिं वै प्राप्तुमिच्छति सांप्रतम् । इयं सखी मदीया वै वृक्षानारोपयत् पुरा ॥ तेषु वृक्षेषु संजातं फलं पश्य पुरः प्रभो । मनोरथाङ्कुरं त्वस्याः पश्यामि न कथंचन ॥ रूपहार्यं शिवं देवं मदनस्यानुहारिणम् । तस्माच्च नारदादेशात्तपस्तप्यति दारुणम् ॥ यत्ते पृष्टं मयाख्यातं सख्याश्च समभीप्सितम् । इत्येवं वचनं श्रुत्वा जटिलो वाक्यमब्रवीत् ॥ सख्येदं कथितं सत्यं परिहास उतापि वा । यथार्थं न कथं देवि मुखेन परिभाषसे ॥ इत्युक्ते च तदा तेन जटिलेन महात्मना । उवाच पार्वती देवी तत्तथैव न चान्यथा ॥ मनसा वचसा साक्षाद्वृतो वै शंकरो मया । जानामि दुर्लभं वस्तु कथं प्राप्यं मया भवेत् ॥ तथापि मन-सौत्सुक्यात्तप्यते च मयाधुना । इत्युक्ते च तया तत्र स्थितवोवाच स दण्डधृक् ॥...हित्वा सुवर्णमुद्रां च काचं ग्रहीतुमिच्छसि । हित्वा च चन्दनं शुभ्रं कर्दमं लेप्तुमीहसे ॥ इन्द्रा-दिलोकपालांश्च हित्वा शिवमनुव्रता । नैतद्युक्तं हि लोकेषु विरुद्धं दृश्यतेऽधुना ॥ त्वं कमलपत्राक्षि क्व चासौ च त्रिलोचनः । शशाङ्कवदना त्वं च पञ्चवक्त्रः शिवः स्मृतः ॥ कबर्यांश्चैव ते रूपं वर्णितुं नैव शक्यते । जटाजूटं शिवस्यैव प्रसिद्धं परिचक्षते ॥ चन्दनं च त्वदीयाङ्गे चिताभस्म शिवस्य च । क्व दुकूलं त्वदीयं वै गजाजिनमथाशुभम् ॥ काङ्क-दादीनि दिव्यानि क्व सर्पाः शंकरस्य च । क्व वरा देवताः सर्वाः क्व च भूतावलिः प्रिये ॥ भवत्याश्च शिवस्यैव न युक्तं रूपमुत्तमम् । वपुश्चैव त्रिरूपाक्षं जन्म न ज्ञायते कदा ॥ यदि धनं भवेत्तस्य कथं दिगम्बरो भवेत् । वरेषु ये गुणाः प्रोक्ता नैकोऽपि च शिवे स्मृतः ॥ वाहनं च बलीवर्दो वसनं चर्म एव च । यदि गृही भवेत्सो वै कथं च मदनं दहेत् ॥ जातिर्न लभ्यते तस्य विद्या ज्ञानं न दृश्यते । क्व च हारस्त्वदीयो वै क्व च वै मुण्डमा-लिका ॥ सर्वं विरोधि रूपं च तव चैव शिवस्य च । मह्यं न रोचते देवि यदिच्छसि तथा कुरु ॥ स मया विदितो देवः श्मशाने वासमीहते । असद्वस्तु च यत्किंचित्तत्सर्वं सेवते स्वयम् ॥ निवर्तय मनस्तस्मान्नो चेद्गच्छेः समीपतः । इत्येतद्वचनं श्रुत्वा पार्वती क्रोधसंयुता ॥ उवाच क्रुध्यमानासौ शिवनिन्दापरं च तम् । त्वयोक्तं विदितो देवस्तदलीकं वचस्तव ॥ यदि च विदितः स्याद्वै विरुद्धं नोच्यते त्वया । कुतो जातिर्भवेत्तस्य निर्गु-णस्य गुणात्मनः ॥ सर्वासामपि विद्यानामधिष्ठानं सदाशिवः । किं तस्य विद्यया कार्यं पूर्णस्य परमात्मनः ॥ सर्वेषां चादिभूतस्य वयोमानं कुतः स्मृतम् । कल्याणरूपिणस्तस्य सेवया किं भवेदिह ॥ सप्तजन्म दरिद्रः स्यात्सेवते यदि शंकरम् । तस्यैव दुर्लभा लोके लक्ष्मीः स्यादनपायिनी ॥ यदग्रे सिद्धयोऽष्टौ च नृत्यन्ति प्रतिवासरम् । अवाङ्मुखाः सदा तत्र कुतो वित्तं सुदुर्लभम् ॥ यदप्यमङ्गलानीह सेवते शंकरः सदा । तथापि मङ्गलं

तस्य स्मरणादेव जायते ॥ यच्चपूतं भवेद्ब्रह्म चिताथाश्च त्वयोदितम् । नृत्यस्यापगमे देवैः शिरोभिर्धार्यते कथम् ॥ कथं तत्त्वं विजानन्ति त्वादृशा हि बहिर्मुखाः । शिवनिन्दां करोतीह तत्त्वमज्ञाय यः पुमान् ॥ आजन्म संचितं पुण्यं तस्य भस्मीभविष्यति । त्वत्पूजा च कृता यस्मात्तस्मात्पापं भजाम्यहम् ॥...यथा तथा भवेत्सो वै ममाभीष्टतमो मतः । पुनर्वचनमादातुं प्रक्रमे तावदेव हि ॥ उवाच गिरिजा देवी सखीं दुष्टमना ह्यसौ । वारणीयः प्रयत्नेन शिवनिन्दां करिष्यति ॥ न केवलं भजेत्पापं निन्दाकर्त्ता शिवस्य च । यो वै शृणोति तां निन्दां पापभाक् स भवेदिह ॥ स्थलमेतत्तथा हित्वा यास्यामोऽन्यत्र मा चिरम् । इत्युक्त्वा चलनायासौ पदमुत्क्षिपते यदा ॥ तदासौ च शिवः साक्षादाललम्बे प्रियां सतीम् । कृत्वा स्वीयं स्वरूपं च यथाध्यातं तया तथा ॥ दर्शयित्वा पुनस्तां च ह्युवाचावाङ्मुखीं शिवाम् । कुत्र यास्यसि मां हित्वा न त्वं त्याज्या मया पुनः ॥ अद्यप्रभृति ते दासस्तपोभिः प्रेमनिर्भरः । क्रीतोऽस्मि तव सौन्दर्यात्क्षणमेकं युगायते ॥ इत्युक्ते देवदेवेन जहौ दुःखं पुरातनम् । तपसश्चैव यज्जातं महद् दुःखं गतं तदा । फले जाते श्रमः पूर्वं जातो नाशमवाप्नुयात् ॥ (अ. १२,१४)

Canto VI. उवाच व्रीडिता देवी वचः स्मृत्वा पुरातनम् । सखीमुखेन सा तत्र शिवं सम्यग्व्यवस्थितम् ॥ एहि यामो गृहं देवि कथं चैवं विलम्बसे । एवं ब्रुवन्तं तं देवं पार्वतीवचनात्सखी ॥ यदि प्रसन्नो देवेश करोषि च कृपां यदि । तदेवं च त्वया कार्यं कृपां कृत्वा ममोपरि ॥ पितुर्गृहे मया सम्यग् गम्यते त्वदनुज्ञया । पितुर्मे सफलं जन्म कुरुष्वैव गृहाश्रमम् ॥ इत्येवं वचनं श्रुत्वा शिवोऽपि च शिवां तदा । उवाच वचनं त्वं च यदिच्छसि तथेति तत् ॥ इत्युक्त्वान्तर्दधे शंभुर्गत्वा काशीं विचारयन् । सस्मार च ऋषीन् सप्त विरहाविष्टमानसः ॥ पार्वत्यपि सखीयुक्ता रूपं कृत्वा तु सार्थकम् । जगाम च स्वकं धाम पितुर्विरहकातरा ॥ आश्रमं सफलं मेने कुपुत्रात्पुत्रिका वरा । हिमवान्नारदं तत्र प्रस्तुवन्साधु साध्विति ॥ ऋषयश्चैव ते सर्वे शंभुना च स्मृता यदा । तदाजग्मुश्च ऋषयः कल्पवृक्षा इवापरे ॥ परं ब्रह्म गृणन्तश्च हेमवल्कलधारिणः । मुक्ताफलैर्विचित्रैश्च भूषिता भूषणैः परैः ॥ अरुन्धत्या तथा युक्ताः साक्षात्सिद्धिरिवापरा । तान् दृष्ट्वा सूर्यसंकाशान् जहौ लज्जां हरः स्वयम् ॥ स्थित्वाग्रे ऋषयः श्रेष्ठा नमस्कृत्य शिवं मुदा । मेनिरे च तदात्मानं कृतार्थं ते तपस्विनः ॥ इति विस्मयमापन्ना नमस्कृत्य स्थिताः पुरः । प्रोचुः प्राञ्जलयस्ते वै शिवं लोकमलापहम् ॥ व्यापकाय नमस्तुभ्यं व्याप्यरूपाय ते नमः । पराय पररूपाय सर्वोत्कृष्टाय ते नमः ॥ इत्येवं च स्तुवन्तस्ते पुनरूचुः परात्मने । भाग्यं किं वर्ण्यतेऽस्माभिः स्वीयं किं तु पुनः पुनः ॥ तपस्तप्तं त्रिधा पूर्वं वेदाध्ययनमुत्तमम् । अग्नयश्च हुताः पूर्वं यज्ञाश्च विविधाः कृताः ॥ तपांसि च विचित्राणि सर्वाण्यपि विशेषतः । दानानि च तथा पूर्वं तीर्थानि विविधानि च ॥ वाङ्मनःकायजं किंचित्पुण्यं वा कर्मसंभवम् । यो वै भजति नित्यं त्वां कृतकृत्यो भवेन्नरः ॥ किं भाग्यं वर्ण्यतेऽस्माकं कृतं नः स्मरणं त्वया । सर्वोत्कृष्टास्तथा जाताः स्मरणान्ते सदाशिव ॥ दर्शनं भवतोऽद्यैव जातं तद्वत्सुदुर्लभम् । अद्यप्रभृति लोकेषु मान्याः पात्रतमा वयम् ॥ जातास्तेऽनुग्रहादेव उच्चैःपदमुपाश्रिताः । अत्र किं बहुनोक्तेन जन्म साफल्यतां गतम् ॥ पूर्णानां किं च कर्तव्यमस्ति चेत्परमा कृपा ।

सदृशं सेवकानां तु देयं कार्ये शुभं त्वया ॥ इत्येवं वचनं श्रुत्वा तेषां वचनमाददे । ऋष-
यश्च सदा पूज्याः कारणात्स्मरणं कृतम् ॥ ममावस्था भवद्भिश्च ज्ञायन्ते ह्युपकारकाः ।
देवानां दुःखमुत्पन्नं तारकात्सुदुरात्मनः॥ ब्रह्मणा च वरो दत्तः किं करोमि दुरासदः। मूर्ते-
योऽष्टौ च याः प्रोक्ता मदीयाः परमर्षयः ॥ ताः सर्वा उपकारार्थं न तु स्वार्थमिति स्फुटम् ।
तथात्र कर्तुकामोऽहं विवाहं शिवया सह ॥ तयापि च तपस्तप्तं दुष्करं परमर्षिभिः ।
तस्याः फलं वरं देयमभीष्टं तद्धितावहम् ॥ तस्माद्भवन्तो गच्छन्तु हिमाचलगृहं ध्रुवम् ।
तत्र गत्वा हितं चैतत्तत्पत्नीं तु पुनस्तथा ॥ कथनीयं प्रयत्नेन यथा स्यात्कार्यमुत्तमम् ।
हिमाचलगृहे पुत्री पार्वती च गुणान्विता ॥ अस्मदर्थे च तां तत्र प्रार्थनीयो हिमाचलः ।
तत्तथा च प्रवक्तव्यं देवानां च हितं भवेत् ॥ भवद्भिः कल्पितो यो वै विधिः स्यादविक-
ल्पकः । भवतां नैव कथ्येत भवन्तः कार्यभाजिनः ॥ इत्येवं वचनं श्रुत्वा मुनयस्तेऽमला-
शयाः । आनन्दं लेभिरे सर्वे प्रभुणानुग्रहीकृताः ॥ गताश्चाकाशमार्गेण यत्र स्याद्धिमवत्पु-
रम् । ततो दृष्ट्वा पुरं दिव्यमृषयस्तेऽतिविस्मिताः ॥ ऊचुः परस्परं सर्वे किमेतदिति संस्फु-
टम् । अलकायाश्च स्वर्याया भोगवत्यास्तथा पुनः ॥ विशेषोऽत्रामरावत्या दृश्यते ऋषि-
सत्तमाः । किं गृहाणि सुरम्याणि स्फाटिकैर्विविधैरिह ॥ मणिभिर्वा विचित्राणि रचितान्य-
ङ्गणानि च । गृहे गृहे विचित्राश्च वृक्षाः स्वर्गसमुद्भवाः ॥ तोरणानां तथा लक्ष्मीर्दृश्यते
च गृहे गृहे । वितानानि विचित्राणि चैलपल्लवतोरणैः ॥ उद्यानानि विचित्राणि पुष्पैश्च
भरितानि वै । नराश्च देवताः सर्वे स्त्रियश्चाप्सरसस्तथा ॥ कर्ममार्गपरा नित्यं सदा यौवन-
शालिनः । यावन्न दृष्टमेतच्च तावत्स्वर्गपरा नराः ॥ इत्येवमृषिवर्यास्ते वर्णयन्तस्तथा पुरम् ।
गता हिमालयस्याथ गृहं सर्वसमृद्धिमत् ॥ तान् दृष्ट्वा सूर्यसंकाशान् हिमवान्विस्मितस्तदा ।
सूर्याः सप्त कथं चात्र ह्यायान्तीमे गृहं प्रति ॥ एतस्मिन्नन्तरे ते वै ह्याकाशादपतंस्तदा ।
सन्मुखो हिमवान् दृष्ट्वा ययौ मानपुरःसरम् ॥ पूजां विधाय तेषां च दण्डवत्प्रपपात ह ।
...इत्युक्त्वासनमानीय ददौ भक्तिपुरःसरम् ॥ आसनेषूपविष्टेषु तदाज्ञप्तः स्वयं स्थितः ।
उवाच हिमवांस्तत्र ऋषीन् ज्योतिर्मयांस्तदा ॥ लोकेषु दर्शनीयोऽहं बहुतीर्थसमो मतः ।
यस्माद्भवन्तो मद्गेहं ह्यागता विष्णुरूपिणः ॥ पूर्णानां चैव किं कार्यं कृपणानां गृहेषु च ।
तेषां च दुःखनाशार्थं गृहेषु गमनं सताम् ॥ मद्गृहपावनार्थं च भवन्तः सुसमागताः । तथापि
किंचित्कार्यं हि सदृशं सेवकस्य च ॥ कथनीयं भवद्भिश्च सफलोऽस्तु ममाश्रमः । महता-
माज्ञया लोको मान्यतां गच्छति ध्रुवम् ॥ तस्माच्च कुत्रचित्कार्ये योज्योऽहमृषिसत्तमाः ।
एवं वचनमाकर्ण्य ऋषयस्ते प्रहर्षिताः ॥ ऊचुस्ते गिरिराजं वै स्मृत्वा स्मृत्वा शिवस्य च ।
शिवः परोपकारार्थं कर्तुकामः प्रजासुखम् ॥ अस्मन्मुखेन ते पुत्रीं याचते शंकरः स्वयम् ।
जगद्गुरोर्गुरुस्त्वं च भविष्यसि न संशयः ॥ जगन्माता तु ते पुत्री तस्यैवानुग्रहाद्भवेत् ।
जगत्पिता शिवः प्रोक्तो जगन्माता शिवा स्मृता ॥ तस्मै देया त्वया कन्या सार्थक्यं ते
भविष्यति । एवं वचनमाकर्ण्य गिरिराजोऽब्रवीदिदम् ॥ मदीयं च शरीरं वै पत्नी मेना च
या मता । ऋद्धिः सिद्धिर्निधिश्चान्यो श्रीर्मदीया न चान्यथा ॥ एवमुक्त्वा तदा पुत्रीं ज्ञात्वा
लोकस्य मातरम् । भूषयित्वा तदङ्गं च ऋष्युत्सङ्गे न्यवेशयत् । इदं भैक्ष्यमुमा नाम दत्तं
वै ऋषिसत्तमाः ॥ ऋषय ऊचुः—अस्मद्विधा भिक्षुकाश्च दाता चैव भवान् स्वयम् । भैक्ष्यं

च पार्वती प्रोक्तं किमतः परमुत्तमम् ॥ हिमवाच्छिखराणां ते मनसः सदृशी गतिः । एवमुक्त्वा तु तां कन्यामृषयो विमलाशयाः ॥ आशिषं दत्तवन्तस्ते शिवाय सुखदो भव । मिलित्वा च गृहं तेऽद्य वर्धयिष्यन्ति नित्यशः ॥ इत्युक्त्वा ऋषयः सर्वे गिरिराजं परस्परम् । पुष्पाणि फलयुक्तानि व्यत्ययं चक्रिरे तदा ॥ अरुन्धती तत्र दृष्ट्वा मेनां साश्रुमुखीं तदा । गुणैश्च लोभयामास शिवस्य परमा सती ॥ ततश्च ते चतुर्थेऽह्नि निर्धार्य लग्नमुत्तमम् । परस्परं च संहृष्य जग्मुस्ते शिवसंनिधिम् ॥ महाकोशीं प्रयातास्ते यत्रास्ते शंकरः स्वयम् । विवाहस्य विधिं सम्यगूचुस्ते ऋषिसत्तमाः ॥ तदाज्ञप्ताश्च ते तत्र गताश्चागमनाय वै । शिवोऽपि सगणस्तत्र प्रसन्नमुखपङ्कजः । कैलासमगमद्देवो विवाहरचनाय वै ॥ (अ. १५)

Canto VII. हिमवानपि तत्रैव स्वानाहूय सुहृद्व्रतः । विधिवत्कारयामास मण्डपादिविधिं क्रमात् ॥ विविधानि विचित्राणि तोरणानि तथा पुनः । ध्वजांश्चैव विचित्रांश्च चकार परया मुदा ॥ वस्त्रालंकारसंयुक्ताः सर्वे हर्षसमाकुलाः । कार्यं चक्रुश्च तत्रत्यं हिमवद्गृहसंभवम् ॥ कन्यां चैव तु दानार्थं सुस्नाप्यालंचकार सः । विवाहविधियोग्यं च वेषं संपाद्य संस्थितः ॥ देवतापूजनं कृत्वा नानोपकरणानि च । प्रतीक्षां वरवर्गस्य कृत्वा च हिमवान् स्थितः ॥ मातरः सप्त तास्तत्र शिवभूषाविधिं परम् । चक्रिरे च मुदा युक्ता यथायोग्यं तथा पुनः ॥ चन्द्रस्तु मुकुटस्थाने सांनिध्यमकरोत्तदा । तिलकं सुन्दरं ह्यासीन्नयनं तु तृतीयकम् ॥ भूतिश्च चन्दनं ह्यासीद् दुकूलं चर्म उच्यते । सर्पा ह्याभरणान्यासन्मणयो विविधाश्च ये ॥ एतस्मिन्समये देवा आजग्मुः प्रभुसेवया । ब्रह्मा तु हंसमारुह्य ऋषिभिः सहितस्तदा ॥ नमस्कृत्य स्थितस्तत्र तावद्विष्णुः समागतः । इन्द्रश्चैव यमश्चैव कुबेरो वरुणस्तथा ॥ अन्ये ते लोकपालाश्च स्वीयचिह्नसमन्विताः । नद्यो गङ्गादयः सर्वा नागाः सर्वे तथाविधाः ॥ सेवावसरमाज्ञाय समाजग्मुर्मुदान्विताः । निःससार ततस्तस्मात्कैलासात्पर्वतोत्तमात् ॥ शिवः परमसंतुष्टो देवान्कृत्वा पुरस्तदा । आजगाम महावीर्यः सर्वसिद्धिसमन्वितः ॥ तमागतं तदा श्रुत्वा हिमवान् बलसंयुतः । जगाम संमुखस्तत्र धन्योऽहमिति चिन्तयन् ॥ देवसेनां तथा दृष्ट्वा हिमवान् विस्मयं गतः । देवा हि तद्बलं दृष्ट्वा विस्मयं परमं गताः ॥ पर्वतानां तथा सेना देवानां च तथा पुनः । मिलित्वा तु तथा रेजे मन्यते सागरावुभौ ॥ रचित्वा शिबिरं सम्यक् संस्थाप्य देवताबलम् । जगाम पर्वतस्तत्र यत्र स्याद्वेदिवेदिका ॥ कारयित्वा विशेषेण चतुष्कं तोरणैर्युतम् । एतस्मिन्नन्तरे तावद्रुद्रेण रूपमुत्तमम् ॥ धृतं तु भक्तवात्सल्यात्कृपालुत्वं प्रदर्शितम् । सूर्यकोटिप्रतीकाशं सुनेत्रैर्भूषणैर्युतम् ॥ मुकुटेन विराजन्तं विचित्रवसनं शुभम् । सूर्येण छत्रितो योऽसौ चन्द्रेण वीजितस्तथा ॥ सिद्धयोऽष्टौ प्रनृत्यं च कुर्वन्ति स्म तदग्रतः । गङ्गा च यमुना चैव चामरे दधतुः शुभे ॥ शिवोऽपि च तथा द्वारि गतो देवगणैः सह । मेना तं पूजयामास ब्रह्मविष्णुसमन्वितम् ॥ तावत् स्त्रियः समाजग्मुर्हित्वा कामाननेकशः । मज्जनं कुर्वती काचिच्चूर्णेन संयुता ययौ ॥ काचित्तु बालकं हित्वा ह्यतृप्तं द्रष्टुमाययौ । रशनां बध्नती काचित्तयैव संयुता ययौ ॥ वस्त्रं च विपरीतं च धृत्वा काचिदुपाययौ । काचिद्धस्ते शलाकां च धृत्वाञ्जनसमन्विताम् ॥ आदर्शं च तथान्यस्मिन् नीत्वा नेत्रमुपाययौ । काचित्तु कामिनी पादं रञ्जयन्ती यदा तदा ॥

श्रुत्वोद्घोषं च तद्दिश्या दर्शनार्थमुपागता । इत्यादि विविधं कार्यं हित्वान्याः समुपागताः ॥ दृष्ट्वा च शांकरं रूपं मोहं प्राप्ताश्च पुत्रिकाः । सम्यक् कृतं तु पार्वत्या नान्यथा यद्भवेदिह ॥ अहो पश्यत किं रूपं वर्णनीयं कथं भवेत् । नेत्राणि सफलान्यासन हिमवत्पुरवासिनाम् ॥......... पार्वत्या साधितं सर्वं शिवार्थं तु तपः कृतम् । यदीदं युगलं ब्रह्मा संगमायाक्षमो भवेत ॥ तदा च सफलोऽप्यस्य श्रमो निष्फलतामियात् । सम्यक् कृतं तथा तेन मेलितं युग्ममुत्तमम् ॥ कथास्तथाविधाः शृण्वन् शिवो द्वारि समागतः । सर्वे देववरास्तत्र ह्यच्युताद्याः शिवं प्रति ॥ स्थितास्तत्र शिवस्यार्थे...॥ तावच्च हिमवान् स्नात्वा सपत्नीकः स्वयं गतः । ब्रह्मा सर्वं च तत्रत्यं कारयामास वै तदा ॥ आवाहनं तथा पाद्यं सर्वं च विधिपूर्वकम् । दुकूलं सुन्दरं तेन दत्तं तस्मै महात्मने ॥ तिलकं पुष्पहारं च काञ्चनस्य यथाविधि । संस्थाप्याग्निं पुनस्तत्र वैवाहमकरोद्विधिम् ॥ अक्षतारोपणं तत्र स्त्रियश्चक्रुस्तदाज्ञया । प्रदक्षिणं तथा चाग्नेश्चतुर्धा च कृतं तदा ॥ अनुज्ञां चैव दत्त्वा तु कन्यायै स पितामहः । ध्रुवस्य दर्शनं तत्र कारयामास वै तदा ॥.........गिरिराजोऽपि तत्रैवं संपाद्य विधिमुत्तमम् । मेने कृतार्थमात्मानं सफलं च गृहाश्रमम् ॥ तौ दंपती तदा तत्र संपूज्य कुलदेवताम् । वर्धाप्य मण्डपं तत्र सुत्रूह्य कौतुकौषधिम् ॥ ऋषीन्प्रणम्य सर्वांस्तांश्चकारानुग्रहं शिवः । हिमवानपि तत्रैव यथायोग्यमपूजयत् ॥ गिरिराजं तथैवात्र संप्रार्थ्य देवतागणाः । दत्त्वा च ह्याशिषस्तस्मै वन्दितास्ते ययुर्मुदा ॥ हिमवत्पुत्रिकाः सर्वे वाद्यगानपरायणाः । अन्वगच्छन्त ते तत्र गिरिराजादयश्च ये ॥ अच्युताद्याश्च ये देवा ऋषयो निर्मलाश्रयाः । समागत्य तु कैलासं संस्थाप्य मन्दिरे शिवम् । पत्न्या युक्तं च संप्रार्थ्य दत्तानुज्ञा ययुश्च ते ॥

[It is by no means certain, however, that Kâlidâsa followed this version of the legend when he composed the Kum. Most of the extant recensions of the Purâṇas are evidently modern compilations, probably based upon earlier ones. The language of the extracts given above seems to show that their author had our poem before him when writing his story. We should therefore hesitate to assert that Kálidâsa copied the very expressions of the Ś. P.; it is more likely that the compiler, or some reviser, of the Purāṇa copied Kâlidâsa. For the plot of the Kum. our author was most probably indebted to an earlier recension of the Ś. P.]

---

## (3) CRITICAL AND GENERAL REMARKS.

The Kumârasambhava or "the poem descriptive of the birth of Kumára," has all the requirements of a Mahákàvya and is classed as such by Sanskritists. The hero of this poem is a divine being, and one of the Dhîrodâtta class. The prevailing

sentiment is Sringâra, Karuṇa and Śànta, though not very prominent, being accessories to it. The 3rd and the 5th Cantos are a good illustration of Vipralambha, the 4th that of Karuṇa, the 7th of Vivâha, and the 8th of Sambhoga. The subject of each following canto is hinted at the end of each preceeding one. The description of cities, seasons &c. can be easily marked by the student. It must, however, be remarked here that the poet, in his zeal to describe a lover just married, has spoiled the character of Śiva, which he had well maintained in the first six Cantos.

The available recension of the Kâvya consists of 17 cantos or Sargas, though some believe that it has twenty-two in all. It has a commentary by Mallinâtha upto eight cantos only. It is now generally believed that only these eight are the work of the poet, and that the rest were written either by some later writer or by some disciple of Kálidása. The commentator Râmagovinda states that the Kumârasaṃbhava extends to eight cantos only. Again, it may be remarked that the title "the Birth of Kumâra" cannot very well apply to the whole of the poem. The eighth canto properly leads up to the संभव ( not actual but potential ) of the War-God, and the poem naturally ends there. If the poet goes on describing the war against the demon Târaka in Heaven, as is done in the succeeding cantos, it would be inconsistent with the scope and plan of the poem as suggested by its title. If the defeat and the death of Târaka were to be its subject-matter, it should have been called by some other name, such as तारकवध. The evidence of style also conclusively proves that cantos 9–17 are certainly not written by the author of the first eight.

Such is not the opinion of Dr. Ryder, however. He accepts the later cantos as genuine on what seem to us to be trifling and inconclusive arguments. The learned Doctor argues, for instance, that the last nine cantos are worse poetry than the first eight, because love, and not fighting, was Kâlidâsa's *forte*. Does Dr. Ryder forget the spirited fighting scenes in the Raghuvaṃśa?

As a matter of fact, scholars are now generally coming round to agree to treat the later cantos as interpolated.

In the Kumârasaṃbhava Kâlidâsa chooses a higher plane for the play of his genius. In the Raghuvaṃs'a his heroes are men; in the Meghadûta the story refers to the Yakshas who occupy in their semi-divine nature a position midway between men and gods. In the '*Birth of Kumâra*' the poet deals solely with gods

and beings of another world, thoug in so doing he does not fail to invest them with human sentiments, without which, indeed, the poem would have lost most of its charm. The scene is laid among the valleys and on the slopes of the Himâlaya, a mountain which is, as we are told in the very first verse, देवतात्मा ; and all subsequent actions that take place there are divine and super-human. Then follows a description of Pârvatî, and this is done so skilfully that the master-hand for a while makes us forget that we are reading about a goddess and not about a woman on earth. The scene of the second canto is laid in *Brahmaloka*, and here, as in the tenth canto of the Raghuvaṃśa, Kâlidâsa shows his intimate knowledge of the leading ideas of Hindu philosophy. The third Canto gives him an opportunity for a description of spring and he has wonderfully succeeded in drawing a picture true to Nature and at the same time of an unsurpassed poetic beauty. Very few descriptions by other poets would compare with this in the Kumâra, beginning with कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य । दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥ (III. 25). The fourth Canto shows Kâlidása to be a master of *Karuṇa rasa*, and the lament of Rati is so splendid that some timorous rhetoricians have considered that the excess and recurrence of emotion has here become a fault (रसगसो दोषः । पुनः पुनर्दीप्तिः । यथा कुमारसंभवे रतिविलापे । ). The student will find that this lament has its counterpart in the अजविलाप of the 8th canto of the *Raghuvaṃsa*. In the fifth canto Párvatî is described in the *rôle* of a *tapasvinî* where Śiva comes to visit her, disguised as a *Brahmachárin*. Their dialogue is one of the best-known passages in Kálidâsa's works, where his powers of repartee, humour and piquancy of style are seen at their best. The sixth Canto is rather a tame one, only enlivened by the fine description of Oshadhiprastha, the capital city of Himâlaya. The seventh Canto is devoted to a very detailed description of the marriage-ceremony and the processions, and he has given it a human touch again by the prevailing tone of domesticity throughout. The eight and the last canto is considered by many to be a crowning achieve-ment of Kálidása's poetic skill, and the quotations from this canto occurring in standard critical works like the Kávyálaṃká-rasûtras and the Sarasvatîkaṇṭhábharaṇa and others are more numerous than from any other canto. Indeed, it may be said without exaggeration that in the descriptions of the sunset, twilight and nightfall on the mountain, Kálidâsa has excelled

himself ; they abound with the finest similes and the grandest imagery.

One chief reason of Kálidása's superiority over other poets is his brilliantly-polished style; there is no other Sanskrit poet who possesses an equal command over language so simple and withal so graceful. In fact, all the works of Kâlidâsa are written in what the later rhetoricians have called the *Vaidarbhî* style, the ten chief excellences belonging to which are thus given by Daṇḍin :—
श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥ ( K. D. I. 41 ). Kâlidâsa abhors the looseness and laxity of the epics, the superfluous piling of epithets found in lesser poets, and the artificiality of diction which is observable even in writers like Báṇa and Mâgha. He studiously avoids all meretricious ornament and the cheap tinsel of verbal tricks. His strength lies in the music of his words and in the swift conveying of precise and beautiful ideas. He employs no figures of speech except the commonest ones, and in particular he delights in *Upamá*, of which he is a recognized master. He is a great lover of nature, and all his similes and illustrations are drawn from his close observation of natural phenomena ( *e. g.* Kum. III. 21, IV. 44, V. 5, VII. 26 &c. )

It is difficult to judge, owing to its shortness, whether the *Kumárasaṃbhava* is as great a poetic triumph as the *Raghuvaṃs'a*; in this difficulty itself lies, we think, the evidence of the greatness of Kálidâsa's genius. Dr. Ryder rightly prefers the *Raghuvaṃs'a*, but is constrained to remark that " there are passages in *The Birth of the War-God* of a piercing beauty which the world can never let die. "

---

## (4) MALLINA'THA.

There exist a large number of commentaries on this poem, but none of them is so well-known or so often studied as that of Mallinâtha, who enjoys a supreme position as the standard authority in the interpretation of Kàlidâsa's poems. While writing about Kálidása we had to remark above that he says absolutely nothing about himself in his writings, and the same is true of his great scholiast Mallinâtha. Pandit Vámanácharya Jhalkikar, the the editor of the Kávya-Prakás'a, wrote that Mallinátha was a Bráhmaṇa of the Kâsyapa *gotra*, and that his descendants were

still living at Gajendragad in the Satara District. But the learned Pandit was hasty in his identification; for Mr. M. S. Śâstrî (in his "Second Report on the Search of Sanskrit MSS.") has shown that Mallinâtha was a native of Tailaṅgaṇa (Ândhra), which fact is now accepted as established. He had a son named Kumârasvâmin, who was also an erudite scholar, and wrote a commentary on the Pratâparudrîya. In addition to his three commentaries on the three poems of Kâlidâsa, Mallinâtha is credited to have written (*a*) commentaries on अमरकोश, एकावली, काव्यादर्श, किरातार्जुनीय, तन्त्रवार्तिक, तार्किकरक्षा, नलोदय, नैषधीयचरित, प्रशस्तपादभाष्य, भट्टिकाव्य, लघुशब्देन्दुशेखर, शिशुपालवध, and सारमञ्जरी, and (*b*) independently, these works :—उदारकाव्य, रघुवीरचरितकाव्य, वैश्यकल्पतरु and वैश्यरत्नमाला. It is possible that some of these productions belong to some other Mallinâtha than our commentator; for there have been many Mallinâthas, just as there have been many Kâlidâsas.

The date of Mallinâtha can be fixed with tolerable certainty. He has written a com. on the Ekâvalî, a work on rhetorics which frequently refers to king Vîra-Narasiṃha, whose reign extended up to 1314 A.D. Mallinâtha also often quotes the Pratâparudrîya, another work on rhetorics, which mentions king Pratâparudra who reigned from 1295 to 1323 A.D Sir Dr. Bhandarkar has shown (p. xxi of his Preface to his second Ed. of the Mâlatî-Mâdhava) that Mallinâtha must be placed before the lexicographer Medinikara, the latest limit for whose date is 1431 A.D. Hence it is clear that the date of Mallinâtha approximately falls somewhere between 1325 and 1425 A.D. Most probably he belongs to the latter half the 14th century.

Mallînâtha is a commentator of great merit and literary acumen. He was a profound grammarian, well-versed in the Nyâya and Vaiśeshika philosophies, and thoroughly acquainted with Pauraṇic as well as secular literature, as he himself tells us in his introductory ślokas to the commentary on the Ragh.; and the extreme popularity of his commentaries shows that this is not an idle boast. His commentaries are pre-eminently adapted to the needs of the advanced general reader. They are sufficiently expressive without being prolix. He never makes an unnecessary display of his knowledge, but strictly follows the principle he himself lays down, *viz.* नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते. He has modestly expressed his inability to grasp the real pith of Kâlidâsa's poetry, but

he says that he would follow in the footsteps of Dakshiṇâvartanâtha and others, the older commentators who preceded him.[1] Still, Mallinâtha is perhaps the only commentator on the poems of Kâlidâsa who shows a critical appreciation of poetry, and endeavours to preserve, as far as possible, the genuine readings of the poet, studiously rejecting the spurious substitutions of single words and phrases, and the occasional interpolations of whole ślokas. To his commentaries on the three poems of Kâlidâsa he has given the title संजीवनीs, meaning thereby that his commentaries *re-inspire with life* the words of Kâlidâsa "that lay *in a swoon* under the effect of the poison of bad commentaries." Every student of Kâlidâsa now recognizes that this was no vain presumption; Mallinâtha's commentaries have eclipsed all others, and now he stands unrivalled as *the* commentator of Kâlidâsa's poetical works.

---

1 The commentaries of Dakshiṇâvartanâtha have been recently discovered in South India and begun to be published in the Triv. S. Series. From what we have seen of them they are not undeserving of the praise bestowed upon them by Mallinâtha

## Important Abbreviations.

:o:

A. G.—Apte's Guide to Sanskrit Composition.

AK., AMAR.—Amarakośa.

AR., ARUNA.—Aruṇagirinâtha (com.)

AV.—Avachûri (com.)

BG.—Bhagavadgîtâ.

BHAR.—Bhartṛihari's Śatakas (N. and V.).*

BHATTI.—Bhaṭṭi-Kāvya.*

BH.-P.—Bhâgavata-Purâṇa.

BṚIH.-SAM.—Bṛihatsaṃhitâ.

BṚIH.-UP.—Bṛihadâraṇyakopanishad.

CHA'R.-Châritravardhana (com.)

CHH.-UP.—Chhândogyopanishad.

D.—Deshpande's Ed. of the Kum.

D.-K.—Daśakumâracharita.*

D.-R.—Daśarūpaka.

GI'T.—Gîtagovinda.

HITOP.—Hitopadeśa.*

H. S. GR.—Higher Sanskrit Grammar (by M. R. Kâle).

HV.—Harivaṃśa.

JIN.—Jinasamudra (Com.)

KA'D.—Kâdambarî.*

KA'S'.—Kâśikâ of Vâmana.

KATHA'S.—Kathâsaritsâgara.

KA'V., K.-D.—Kâvyâdarśa.

KIR.—Kirâtârjunîya.*

K.-P.—Kāvya-Prakâśa.

KUM.—Kumârasaṃbhava.*

KUV.—Kuvalayânanda.

MAH.-BH.—Mahâ-Bhârata.

MA'LAV.—Mâlavikâgnimitra.*

MALLI.—Mallinâtha.

MA'L.-MA'DH.—Mâlatî-Mâdhava

MA'RK.-P.—Mârkaṇḍeya-Purâṇa

MEGH.—Meghadûta.*

MṚICH.—Mṛichchhakaṭika.

MUD.—Mudrârâkshasa.*

MV.—Mahâvîracharita.

M. W.—Monier Williams.

NA'G.—Nâgânanda.*

NAISH.—Naishadhîyacharita.

NA'R.—Nârâyaṇa (Com).

PA'N.—Pâṇini's Ashṭâdhyâyî.

PA'R.-P.—Parvatî-Pariṇaya.

RAGH.—Raghuvaṃśa.*

RA'M.—Râmâyaṇa of Vâlmîki.

RATN.—Ratnâvalî.*

ṚITU.—Ṛitusaṃhâra.*

Ṛ.-V.—Ṛig-Veda.

ŚA'K.—Śâkuntala.*

S.-D.—Sâhitya-Darpaṇa.

SID.-K.—Siddhāntakaumudî.

ŚIS'.—Śiśupâlavadha.

Ś.-P.—Śiva-Purâṇa.

UP.—Upanishad.

UTT.—Uttararâmacharita.*

VA'RT.—Vârttika.

VENI'.—Veṇîsaṃhâra.*

VG.—Vijayagaṇi (Com.)

VIK.—Vikramorvaśîya.*

V.-P.—Vishṇu-Purâṇa.

YOG.-S.—Yogasûtras.

* Annotated by the Editor.

॥ श्रीः ॥

# कुमारसंभवम् ।

## ॥ संजीवन्या समेतम् ॥



### प्रथमः सर्गः ।

मातापितृभ्यां जगतो नमो वामार्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥
शरणं करवाणि शर्मदं ते चरणं वाणि चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब कृतार्थसार्थवाहम् ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्छिता ।
एषा संजीवनी व्याख्या तामद्योज्जीवयिष्यति ॥

तत्रभवान्कालिदासः कुमारसंभवं काव्यं चिकीर्षुः 'आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्' इति शास्त्रात्काव्यादौ वक्ष्यमाणार्थानुगुणं वस्तु निर्दिशति—

**अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।**
**पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥ १ ॥**

अस्तीति ॥ **उत्तरस्यां दिशि** । अनेनास्य देवभूमित्वं सूच्यते । [ **देवतात्मा** ] देवता आत्मा अधिष्ठाता यस्य सः । एतेनास्य वक्ष्यमाणमेनकापरिणयपार्वतीजननादिचेतनव्यवहारयोग्यत्वसिद्धिः । हिमस्यालयः स्थानमिति **हिमालयः नाम** हिमालय इति प्रसिद्धः । अधिको राजा अधिराजः 'राजाहःसखिभ्यष्टच्।' न गच्छन्तीति नगा अचलास्तेषामधिराजो **नगाधिराजः अस्ति** । कथंभूतः । **पूर्वापरौ** प्राच्यपाश्चिमौ **तोय**-

१ कुमारोत्पत्तिपर्यन्तं काव्यं न कृतं तस्मादनुपपन्नमिदं नामेत्यत्र उच्यते—तादिच्छामो विभो स्रष्टुं-( २. ५१ ) इति देवैः कुमारसृष्टिमात्रस्यैव ब्रह्माणं प्रति प्रार्थितत्वात्कुमारसंभव इत्येव संज्ञा युक्ता । न चैवं सतितत्पर्यन्तं काव्यं प्रवर्तितव्यमिति वाच्यम् । उमारूपेण ते यूयं संयमस्तिमितं मनः । शंभोर्यतध्वमाक्रष्टुमिति ब्रह्मणः प्रतिवचनेन शंभोश्चित्ताकर्षणमात्रस्यैव परमसाध्यत्वेन प्रतिपादनात् तच्चाष्टमसर्गे विस्तरतः प्रतिपादितम् ।...संभोगवर्णनेन कुमारोत्पत्तेर्बिन्दुपक्षेपोऽपि कृत इति सर्वमनवद्यम् । इति वि०. २ वारिनिधी. ३ विगाह्य. ४ उत्तरस्यां दिशि देवभूमयः दक्षिणस्यां दिश्यसुरभूमयो मध्ये मनुष्यभूमय इति पुराणप्रसिद्धिः । इति वि०.

**निधी** समुद्रौ **वगाह्य** प्रविश्य अत एव **पृथिव्याः** भूमेर्मानं हस्तादिना परिच्छेदः : भावे ल्युट् । तस्य दण्डः । यद्वा मीयतेऽनेनेति मानम् । करणे ल्युट् । स चासौ दण्डश्च [**मानदण्डः**] स इव **स्थितः** । आयामपरिच्छेदक दण्ड इव स्थित इत्यर्थः । पूर्वापरसागरावगाहित्वं चास्य हिमालयस्यास्त्येव । उक्तं च ब्रह्माण्डपुराणे—' कैलासो हिमवांश्चैव दक्षिणे वर्षपर्वतौ । पूर्वपश्चिमगावेतावर्णवान्तरुपस्थितौ ॥ ' इति । अत्र हिमाचलस्योभयाब्धिव्याप्तिसाम्यान्मानदण्डत्वेनोत्प्रेक्षालंकारः । प्रकृतेऽप्रकृतगुणक्रियादिसंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा इत्यलंकारसर्वस्वकारः । अस्मिन्सर्गे प्रायेण वृत्तमुपजातिः । क्वचिदिन्द्रवज्रोपेन्द्रवज्रे च । तल्लक्षणं तु—'स्यादिन्द्रवज्रा यदि तौ जगौ ग उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति ॥

इतः परं षोडशभिः श्लोकैर्हिमाद्रिं वर्णयति । तत्र नगाधिराजत्वं निर्वोढुमाह—

**यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।**
**भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ २ ॥**

यमिति ॥ सर्वे च ते शैलाश्च **सर्वशैलाः** ॥ ' पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन । ' इति समासः ॥ **यं** हिमालयं **वत्सं परिकल्प्य** विधाय **दोहदक्षे** दोहनसमर्थे **मेरौ दोग्धरि स्थिते** सति ॥ ' यस्य च भावेन भावलक्षणम् ' इति सप्तमी । **पृथूपदिष्टां** पृथुना वैन्येनोपदिष्टामीदृक्तया प्रदर्शितां **धरित्रीम्** । गोरूपधरामिति शेषः । ' गौर्भूत्वा तु वसुंधरा ' इति विष्णुपुराणात् । 'अकथितं च' इति कर्मत्वम् ॥ भास्वन्ति च भास्वत्यश्च **भास्वन्ति** द्युतिमन्ति । ओषधिविशेषणं चैतत् ॥ ' नपुंसकमनपुंसकेन '–इत्यादिना नपुंसकैकशेषः । **रत्नानि** मणीजातिश्रेष्ठवस्तूनि च । ' रत्नं श्रेष्ठे मणावपि ' इति विश्वः ॥ ' जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते । ' इति यादवः ॥ **महौषधीश्च** संजीवनीप्रभृतीश्च । क्षीरत्वेन परिणता इति शेषः । ' ताः क्षीरपरिणामिनीः ' इति विष्णुपुराणात् ॥ **दुदुहुः** ॥ ' दुहियाचि–' इत्यादिना द्विकर्मकत्वम् ॥ अत्र प्रयोजकत्वेऽपि शैलानां ' पञ्चभिर्हलैः कर्षति ग्रामं ग्रामणीः ' इतिवत्तत्समर्थाचरणात्कर्तृत्वेन व्यपदेशः । दुहेः स्वरितेत्त्वेऽप्यकर्त्रभिप्रायविवक्षायां परस्मैपदम् । अत्रार्थे प्रमाणम्—' गौर्भूमिरचलाः सर्वे कर्तारोऽत्र पयांसि च । ओषध्यश्चैव भास्वन्ति रत्नानि विविधानि च ॥ वत्सश्च हिमवानासीद्दोग्धा मेरुर्महागिरिः । ' इति ॥ एतेन वत्सस्य मातुः प्रेमास्पदत्वादस्य सारग्राहित्वं गम्यते । तथा चास्य नगस्य रत्नविशेषभोक्तृत्वान्नगाधिराजत्वं युक्तमिति भावः ॥ अत्र हिमवद्वर्णनस्य प्रकृतत्वात्तद्वतौषधिरत्नानां द्वयानामपि प्रकृतत्वात्तेषां दोहनक्रियारूपसमानधर्मसंबन्धादौपम्यस्य गम्यत्वात्केवलप्राकरणिकविषयस्तुल्ययोगिता नामालंकारः । तदुक्तम्—' प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥ ' इति । न चात्र रूपकपरिणामाद्यलंकारशङ्का कार्या तेषामारोपहेतुत्वात् । हिमहेमाचलादिषु वत्सत्वदोग्धृत्वादीनामागमसिद्धत्वेनानारोप्यमाणत्वादिति ॥

ननु हिमदोषदूषितस्य तस्यात्यन्तमनभिगम्यत्वाच्छिद्रात्रिण इव सर्वमपि सौभाग्यं विफलमित्याशङ्क्याह—

**अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् ।**
**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ ३ ॥**

अनन्तेति ॥ प्रभवत्यस्मादिति प्रभवः कारणम् । [ **अनन्तरत्नप्रभवस्य** ] अनन्तानामपरिमितानां रत्नानां श्रेष्ठवस्तूनां प्रभवस्य **यस्य** हिमाद्रेः **हिमम्** ॥ कर्तृ ॥ सुभगस्य भावः सौभाग्यम् ॥ 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः ॥ तद्विलुम्पतीति **सौभाग्यविलोपि** सौन्दर्यविघातकं **न जातं** नाभूत् । तथा **हि** । **एकः दोषः गुणसंनिपाते इन्दोः किरणेष्वङ्क इव निमज्जति** । अन्तर्लीयत इत्यर्थः । न हि स्वल्पो दोषोऽमितगुणाभिभावक एव किं तु कश्चिदिन्दुकलङ्कादिवद्गुणैरभिभूयते । अन्यथा सर्वरम्यवस्तुहानिप्रसङ्गादिति भावः । अत्रोपमानुप्राणितोऽर्थान्तरन्यासालंकारः । तल्लक्षणं तु—'ज्ञेयः सोऽर्थान्तरन्यासो वस्तु प्रस्तुत्य किंचन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुनः ॥' इति दण्डी ॥

**यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।**
**बलाहकच्छेदविभक्तरागामकालसंध्यामिव धातुमत्ताम् ॥ ४ ॥**

यश्चेति ॥ [ **च** ] किंचेति चकारार्थः । **यः** हिमाद्रिः [ **अप्सरोविभ्रममण्डनानां** ] अप्सरसां विभ्रममण्डनानि विलासालंकरणानि । अथ वा विभ्रमो विपरीतन्यासः । 'विभ्रमस्त्वरयाकाले भूषास्थानविपर्ययः ।' इति दशरूपकात् ॥ तेन मण्डनानि तेषां **संपादयित्रीम्** । एतद्धातुरागदर्शिन्योऽप्सरसः संध्याभ्रमेण प्रसाधनाय त्वरन्त इति भावः ॥ तथात्वे भ्रान्तिमदलंकारो व्यज्यते ॥ 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी ॥ [ **बलाहकच्छेदविभक्तरागां** ] वारीणां वाहका बलाहकाः ॥ पृषोदरादित्वात्साधुः ॥ तेषां छेदेषु खण्डेषु विभक्तः संक्रमितो रागो यया ताम् । एतेनाद्रेरभ्रंकषत्वं गम्यते ॥ इदं विशेषणद्वयं संध्यायामपि योज्यम् ॥ धातवः सिन्दूरगैरिकादयोऽस्य सन्तीति धातुमान् । नित्ययोगे मतुप् ॥ तस्य भावो धातुमत्ता तां [ **धातुमत्ताम्** ] । धातुयोगित्वमिति संबन्धोऽपि वाच्यार्थः ॥ 'समासकृत्तद्धितेषु संबन्धाभिधानं भावप्रत्ययेन' इति वचनात् । लक्षणया नित्यानुषङ्गिकधातुमित्यर्थः ॥ **अकालसंध्यामिव** अनियतकालप्राप्तसंध्यामिव **शिखरैः बिभर्ति** धत्ते ॥ अत्र संध्याशब्दस्य जातिवाचित्वाज्जात्युत्प्रेक्षा ॥

**आमेखलं संचरतां घनानां छायामधःसानुगतां निषेव्य ।**
**उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः ॥ ५ ॥**

आमेखलमिति ॥ **सिद्धाः** अणिमादिसिद्धा देवयोनिविशेषाश्च ॥ 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ।' इत्यमरः । आ मेखलाभ्यः **आमेखलं** नितम्बपर्यन्तम् ॥ 'मेखला खण्डबन्धे स्यात्काञ्चीशैलनितम्बयोः ।' इति विश्वः ॥ 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । **संचरतां घनानां** मेघानाम् [ **अधःसानुगतां** ] अधःसानूनि मेघमण्डलादधस्तटानि गतां प्राप्ताम् ॥ 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः ॥ **छायाम्** अनातपम् ॥ 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः ।'

१ विविक्त. २ छायामिषे इ. पा. इषे आश्विने । स्यादाश्विन इषोऽप्याश्वयुजोऽपि स्यादित्यमरः । ३ सानुगताः

इत्यमरः ॥ **निषेव्य वृष्टिभिः उद्वेजिताः** क्लेशिताः सन्तः ॥ 'उद्वेगः स्तिमिते क्लेशे भये मन्थरगामिनि ।' इति शब्दार्णवः ॥ **यस्य** हिमाद्रेः **आतपवन्ति** सातपानि **शृङ्गाणि आश्रयन्ते** । आश्रित्य स्थिता इत्यर्थः । अतिमेघमण्डलमस्यौन्नत्यमिति भावः॥

**पदं तुषारस्रुतिधौतरक्तं यस्मिन्नदृष्ट्वापि हतद्विपानाम् ।**
**विदन्ति मार्गं नखरन्ध्रमुक्तैर्मुक्ताफलैः केसरिणां किराताः ॥ ६ ॥**

पदमिति ॥ **यस्मिन्** अद्रौ **किराताः** [ **तुषारस्रुतिधौतरक्तं** ] तुषारस्रुतिभिर्हिमनिस्यन्दैर्धौतं क्षालितं रक्तं शोणितं यस्य तत्तथोक्तम् । अतो दुर्ग्रहमिति भावः । हता द्विपा गजा यैस्तैषां **हतद्विपानां केसरिणां** सिंहानां **पदं** पादप्रक्षेपस्थानम् **अदृष्ट्वापि** [ **नखरन्ध्रमुक्तैः** ] नखरन्ध्रैर्नखद्रोणिभिर्मुक्तैः **मुक्ताफलैः मार्गं विदन्ति** जानन्ति । अत्र व्याधाः सिंहघातिनो गजेन्द्राश्च मुक्ताकरा इति भावः ॥ 'करीन्द्रजीमूतवराहशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि ॥'

**न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः ।**
**व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥ ७ ॥**

न्यस्ताक्षरा इति ॥ **यत्र** हिमाद्रौ **धातुरसेन** सिन्दूरद्रवेण ॥ 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः ।' इत्यमरः । **न्यस्ताक्षराः** लिखितवर्णा अत एव [ **कुञ्जरबिन्दुशोणाः** ] कुञ्जरस्य ये बिन्दवः काये वयोविशेषभाविनः पद्मकाख्याः । 'पद्मकं बिन्दुजालकम् ।' इत्यमरः ॥ ते इव शोणा रक्तवर्णाः । लिखितभागेष्विति शेषः । **भूर्जत्वचः** भूर्जपत्रवल्कलानि ॥ 'भूर्जपत्रो भुजा भूर्जो मृदुत्वक्चर्मिका अपि ।' इति यादवः ॥ **विद्याधरसुन्दरीणाम्** । [ **अनङ्गलेखक्रियया** ] लिख्यते येषु ते लेखाः पत्रिकाः । अनङ्गस्य लेखास्तेषां क्रियया । कामव्यञ्जकलेखकरणेनेत्यर्थः । **उपयोगम्** उपकारं **व्रजन्ति** । दिव्याङ्गनाविहारयोग्योऽयं शैल इति भावः ॥

**यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।**
**उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥ ८ ॥**

य इति ॥ **यः** हिमाद्रिः । [ **दरीमुखोत्थेन** ] दरी गुहा सैव मुखं तस्मादुत्थेनोत्पन्नेन । 'आतश्चोपसर्गे' इति कप्रत्ययः । **समीरणेन** वायुना । [ **कीचकरन्ध्रभागान्** ] कीचका वेणुविशेषाः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः ।' इत्यमरः ॥ तेषां रन्ध्रभागाञ्छिद्रप्रदेशान् **पूरयन्** धमयन् । वांशिकोऽपि वंशरन्ध्राणि मुखमारुतेन पूरयतीति प्रसिद्धिः । **उद्गास्यतां** देवयोनित्वादुच्चैर्गान्धारग्रामेण गानं करिष्यताम् ॥ उक्तं च नारदेन—'षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः । न तु गान्धारनामानं स लभ्यो देवयोनिभिः ॥' इति ॥ **किंनराणां** देवगायकानां **तानप्र-**

१ विन्दन्ति. २ स्थान

दायित्वम् । तानो नाम स्वरान्तरप्रवर्तको रागस्थितिप्रवृत्त्यादिहेतुरंशापरनामा वंशवाद्यसाध्यः प्रधानभूतः स्वरविशेषः ॥ 'तानस्त्वंशस्वरो मतः' इत्यभिनवगुप्तः ॥ 'गाता यं यं स्वरं गच्छेत्तं तं वशेन तानयेत् ।' इति भरतः ॥ तत्प्रदानशीलत्वं तानप्रदायित्वं वांशिकत्वम् **उपगन्तुमिच्छति इव** इत्युत्प्रेक्षा । सा च दरीमुखोत्थेनेत्येकदेशविवर्तिरूपकोज्जीविता । मुखसाध्यत्वात्तानप्रदायित्वस्य । यत्रावयवरूपणादवयविरूपणं गम्यते तदेकदेशविवर्ति रूपकम् । गम्यते चात्रावयविनः पुंसो रूपणं यच्छब्दनिर्दिष्टे हिमाद्रावित्यलं बहुना ॥

**कपोलकण्डूः[1] करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।**
**यत्र स्रुतक्षीरतया प्रसूतः[2] सानूनि गन्धः[3] सुरभीकरोति ॥ ९ ॥**

कपोलेति ॥ **यत्र** हिमाद्रौ **करिभिः** गजैः **कपोलकण्डूः** गण्डस्थलकण्डूः **विनेतुम्** अपनेतुं **विघट्टितानां** घर्षितानां **सरलद्रुमाणां** संबन्धीनि स्रुतानि करिकपोलघर्षणात्क्षरितानि क्षीराणि येषां तेषां भावस्तत्ता तया [ **स्रुतक्षीरतया** ] हेतुना **प्रसूतः** उत्पन्नः **गन्धः सानूनि सुरभीकरोति** ॥ एतेनास्य गजाकरत्वं गम्यते । तथा च गजायुर्वेदे—'हिमवद्विन्ध्यमलया गजानां प्रभवा नगाः ।' इति ॥

**वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।**
**भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥ १० ॥**

वनेचराणामिति ॥ **यत्र** हिमाद्रौ **रजन्यां** [ **दरीगृहोत्सङ्गनिषक्तभासः** ] दर्यः कन्दरा एव गृहास्तेषामुत्सङ्गेष्वभ्यन्तरेषु निषक्ताः संक्रान्ता भासो यासां ताः **ओषधयः** तृणज्योतींषि । 'अग्नावोषधीषु च तेजो निधाय रविरस्तं याति' इत्यागमः । वनितानां सखायो वनितासखाः । 'राजाहःसखिभ्यष्टच् ।' [ **वनितासखानां** ] रममाणानामित्यर्थः । वने चरन्तीति वनेचराः किराताः । 'चरेष्टः' इति टप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । तेषां **वनेचराणाम्** । **अतैलपूराः** अनपेक्षिततैलसेका इत्यर्थः । [ **सुरतप्रदीपाः** ] सुरते सुरतकर्मणि प्रदीपाः **भवन्ति** । अत्रौषधीष्वारोप्यमाणस्य प्रदीपत्वस्य प्रकृतसुरतोपयोगित्वात्परिणामालंकारः । तदुक्तम्—'आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ।' इति । तथा प्रदीपकारणतैलपूरणनिषेधादकारणकार्योत्पत्तिलक्षणा विभावना चेत्युभयोः संसृष्टिः ॥

**उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।**
**न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥ ११ ॥**

उद्वेजयतीति ॥ **यत्र** हिमाद्रौ । शिलीभूतं घनीभूतं हिमं यत्र तस्मिन् [ **शिलीभूतहिमे** ] अत एव [ **अङ्गुलिपार्ष्णिभागान्** ] अङ्गुलीनां पार्ष्णीनां च भागान्प्रदेशान् **उद्वेजयति** अतिशैत्यात्क्लेशयति **अपि मार्गे** श्रोणयश्च पयोधराश्च श्रोणिपयोधरम् । दुर्वहेण दुर्धरेण श्रोणिपयोधरेणार्ताः पीडिताः [ **दुर्वहश्रोणिपयोधरार्ताः** ] । आङ्पूर्वादृच्छतेः क्तः । 'उपसर्गादृति धातौ' इति वृद्धिः । अश्वानां मुखानीव मुखानि

१ कण्डूम्. २ समीरः. ३ गन्धैः.

यासां ताः **अश्वमुख्यः** किंनरस्त्रियः ॥ उष्ट्रमुखवत्समासः ॥ 'स्यात्किंनरः किंपुरुषस्तुरङ्गवदनो मयुः ।' इत्यमरः । **मन्दां** मन्थरां गतिं न **भिन्दन्ति** न त्यजन्तीत्यर्थः । पादपीडाकरेऽप्यतिभारभङ्गुरशरीरतया न शीघ्रं गन्तुं शक्यत इति भावः ॥

**दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।**
**क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥ १२ ॥**

दिवाकरादिति ॥ **यः** हिमाद्रिः **दिवा** दिवसे **भीतं** भयाविष्टम् **इव** । उलूकमिवेति च ध्वनिः । **गुहासु लीनम् अन्धकारं** ध्वान्तम् । दिवा दिनं करोतीति दिवाकरस्तस्माद् **दिवाकरात्** । 'दिवाविभानिशाप्रभाभास्कर'-इत्यादिना टप्रत्ययः । 'भीत्रार्थानां भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥ **रक्षति** त्रायते ॥ ननु क्षुद्रसंरक्षणमनर्हमित्याशङ्कयाह–क्षुद्रे इति । **उच्चैःशिरसां** उन्नतानां **शरणं प्रपन्ने** शरणागते **क्षुद्रे** नीचे **अपि सति** सज्जने **इव नूनं ममत्वं** ममायमित्यभिमानः । अस्तीति शेषः । ममशब्दात्त्वप्रत्ययः । अर्थान्तरन्यासोऽलंकारः ॥

**लाङ्गूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।**[2]
**यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥ १३ ॥**

लाङ्गलेति ॥ **चमर्यः** मृगीविशेषाः । **इतस्ततः** [ **लाङ्गूलविक्षेपविसर्पिशोभैः** ] लाङ्गलानि बालधयः । 'पुच्छोऽस्त्री लोमलाङ्गूले बालहस्तश्च बालधिः ।' इत्यमरः ॥ तेषां विक्षेपैर्विधूननैर्विसर्पिण्यो विसृमराः शोभाः कान्तयो येषां तैः । [ **चन्द्रमरीचिगौरैः** ] चन्द्रमरीचिभिरिव गौरैः शुभ्रैः । 'गौरः करीरे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि च ।' इति यादवः ॥ 'उपमानानि सामान्यवचनैः' इति समासः । **बालव्यजनैः** चामरैः **यस्य** हिमाद्रेः **गिरिराजशब्दं** गिरिराज इति संज्ञाम् । **अर्थयुक्तम्** अभिधेयवन्तं **कुर्वन्ति** । राजानो हि छत्रचामरादिचिह्निता इति भावः ॥

**यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।**
**दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥ १४ ॥**[3]

यत्रेति ॥ **यत्र** हिमाद्रौ । [ **अंशुकाक्षेपविलज्जितानाम्** ] अंशुकाक्षेपेण वस्त्रापहरणेन विलज्जितानां **किंपुरुषाङ्गनानां** किंनरस्त्रीणां **यदृच्छया** दैवगत्या [ **दरीगृहद्वारविलम्बिबिम्बाः** ] दरीगृहद्वारेषु विलम्बिबिम्बाः लम्बमानमण्डलाः **जलदाः तिरस्करिण्यः** जवनिकाः **भवन्ति** ॥ 'प्रतिसीरा जवनिका स्यात्तिरस्करिणी च सा ।' इत्यमरः । 'तिरसोऽन्यतरस्याम्' इति सत्वम् । अत्र जलदेष्वारोप्यमाणस्य तिरस्करिणीत्वस्य प्रकृतोपयोगित्वात्परिणामालंकारः ॥

**भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः ।**
**यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥ १५ ॥**[4]

---

१ अर्ताव. २ चान्द्र. ३ द्वारि. ४ बर्हैः.

भागीरथीति ॥ **भागीरथीनिर्झरशीकराणां** गङ्गाप्रवाहपाथःकणानाम् । कर्मणि षष्ठी । **वोढा** प्रापकः ॥ वहेस्तृच् ॥ **मुहुः** पुनः पुनः सद्यो वा । 'पौनःपुन्ये भृशार्थे च सद्यो वा स्यान्मुहुःपदम् ।' इति वैजयन्ती ॥ [ **कम्पितदेवदारुः** ] कम्पिता देवदारवो येन स तथोक्तः । [ **भिन्नशिखण्डिबर्हः** ] भिन्नानि विश्लेषितानि शिखण्डिनां बर्हाणि गतिलाघवार्थं किरातकटिबद्धानि येन स तथोक्तः । क्रमाद्विशेषणत्रयेण शैत्यसौरभ्यमान्द्यान्युक्तानि । यस्य हिमाद्रेर्वायुः [ **यद्वायुः** ] **अन्विष्टमृगैः** मार्गितमृगैः । श्रान्तैरिति भावः ॥ 'अन्विष्टं मार्गितं मृगितम्' इत्यमरः ॥ **किरातैः आसेव्यते** ॥

**सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।**
**पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥ १६ ॥**

सप्तर्षीति ॥ [ **सप्तर्षिहस्तावचितावशेषाणि** ] सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । तेषां हस्तैरवचितेभ्यो लूनेभ्योऽवशेषाण्यवशिष्टानि । 'शेषोऽप्रधाने संतापे त्रिष्वन्यत्रोपयुज्यते ।' इति केशवः । कर्मण्यण्प्रत्ययः । अनेन पद्मानां साफल्यं सूचितम् । **यस्य** हिमाद्रेः । [ **अग्रसरोरुहाणि** ] रोहन्तीति रुहाणि ॥ 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः ॥ अग्रे उपरि यानि सरांसि तेषु रुहाणि **पद्मानि अधः परिवर्तमानः** भ्रमन् **विवस्वान्** सूर्यः **ऊर्ध्वमुखैः मयूखैः प्रबोधयति** विकासयति । न कदाचिदधोमुखैः । अतिमार्तण्डमण्डलत्वादग्रभूमेरिति भावः । सप्तर्षिमण्डलं ध्रुवादप्यूर्ध्वमिति ज्यौतिषिकाः । अतस्तेषामग्रसरोरुहभागित्वं युक्तम् ॥

**यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।**
**प्रजापतिः कल्पितयज्ञभागं शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥१७॥**

यज्ञाङ्गेति ॥ **यस्य** हिमाद्रेः [ **यज्ञाङ्गयोनित्वम्** ] यज्ञाङ्गानां यज्ञसाधनानां सोमलतादीनां योनिः प्रभवस्तस्य भावस्तत्त्वम् । 'यज्ञाङ्गार्थे मया सृष्टो हिमवानचलेश्वरः ।' इति विष्णुपुराणात् ॥ **धरित्रीधरणक्षमं** भूभारधरणयोग्यं **सारं** बलं **च** ॥ 'सारो बले स्थिरांशे च' इत्यमरः ॥ **अवेक्ष्य** ज्ञात्वा **प्रजापतिः स्वयम्** एव [ **कल्पितयज्ञभागं** ] कल्पितो यज्ञभागो यस्मिंस्तत्तथोक्तम् ॥ 'सोमस्य राज्ञः कुरङ्ग इन्दोः शृङ्गी समुद्रस्य शिशुमारो हिमवतो हस्ती ।' इति श्रुतेरिति भावः । [ **शैलाधिपत्यम्** ] शैलानामाधिपत्यमधिपतित्वम् । 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्प्रत्ययः ॥ **अन्वतिष्ठत्** । ददाति स्मेत्यर्थः । उक्तं च ब्रह्माण्डपुराणे—'शैलानां हिमवन्तं च नदीनां चैव सागरम् । गन्धर्वाणामधिपतिं चक्रे चित्ररथं विधिः ॥' इति ॥

संप्रति कथां प्रस्तौति—

**स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।**
**मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥ १८ ॥**

---

१ आचरित. २ भागः. ३ हस्तिरूपांशः.

स इति ॥ मेरोः सखा **मेरुसखः**। बन्धुसंपन्न इति भावः। **स्थितिज्ञः** मर्यादाभिज्ञः। अनेन श्रुतसंपत्तिः सूच्यते। **सः** हिमवान् **पितॄणां मानसीं** मनःसंकल्पजन्यां **मुनीनामपि माननीयाम्**। योगब्रह्मवादाभ्यां पूज्यामित्यर्थः। उक्तं च विष्णुपुराणे 'तेभ्यः शुभास्पदं जज्ञे मेनका हरिणी तथा। ते उभे ब्रह्मवादिन्यौ योगिन्यौ चाप्युभे द्विज॥' इति ॥ **आत्मानुरूपां** कुलशीलसौन्दर्यादिभिः सदृशीं **मेनां** मेनकादेवीति नामवतीं **कन्याम्**। **कुलस्य स्थितये** प्रतिष्ठायै। **विधिना** यथाशास्त्रेण **उपयेमे** परिणीतवान् ॥ 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् ॥ 'तेषां तु मानसी कन्या मेना नाम महागिरेः। पत्नी हिमवतो यस्याः पुत्रो मैनाक उच्यते॥' इति ब्रह्माण्डपुराणात् ॥

**कालक्रमेणाथ तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।**
**मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥ १९ ॥**

कालक्रमेणेति ॥ **अथ कालक्रमेण**। गच्छता कालेनेत्यर्थः। **तयोः** मेनकाहिमवतोः **स्वरूपयोग्ये** सौन्दर्यानुगुणे। रूप्यते निश्चीयतेऽनेनेति रूपं ज्ञानं तद्योग्ये। शास्त्रानुसारिणीत्यर्थः। **सुरतप्रसङ्गे** सुरतकर्मणि **प्रवृत्ते** सति **मनोरमं यौवनमुद्वहन्त्याः भूधरराजपत्न्याः** मेनकायाः **गर्भः अभवत्** ॥

**असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।**
**क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥२०॥**

असूतेति ॥ **सा** मेना **नागवधूपभोग्यम्**। नागकन्यापरिणेतारमित्यर्थः। [**अम्भोनिधिबद्धसख्यं**] अम्भोनिधिना बद्धसख्यं समुद्रकृतमैत्रीकम्। सख्यमूलं सूचयति—**पक्षच्छिदि** पक्षच्छेत्तरि ॥ '-सत्सूद्विष' इत्यादिना क्विप्प्रत्ययः॥ **वृत्रशत्रौ क्रुद्धे** कुपिते सति **अपि कुलिशक्षतानां** वज्रप्रहाराणाम्। संबन्धसामान्ये षष्ठी। [**अवेदनाज्ञं**] जानातीति ज्ञः ॥ 'इगुपधज्ञा—' इति कप्रत्ययः ॥ वेदनानां ज्ञः। अथ वा वेदनां जानातीति वेदनाज्ञः॥ 'आतोऽनुपसर्गे कः' इति कप्रत्ययः॥ 'उपपदमतिङ्' इति समासः ॥ स न भवतीत्यवेदनाज्ञस्तम्। कुलिशक्षतवेदनानभिज्ञमित्यर्थः ॥ सापेक्षत्वेऽपि गमकत्वात्समासः ॥ पक्षच्छेदोद्यतशक्रात् त्राणाय शरणागमनमनयोः सख्यमूलमिति भावः। **मैनाकं** पुत्रम् **असूत**। सर्वपर्वतपक्षच्छेदेऽप्ययमच्छिन्नपक्ष एवेति मैनाकस्योत्कर्षः। तादृक्पुत्रवत्त्वं हिमाद्रेरिति सार्थकं मैनाकस्य वर्णनम् ॥ 'पिता न ज्ञायते यस्या भ्राता यदि न विद्यते। नोपयच्छेत्तु तां कन्यां धर्मलोपभयात्सुधीः ॥' इत्यभ्रातृककन्यापरिणयनिषेधात्प्रकृते पार्वती भ्रातृमत्येवेति सूचनार्थं मैनाकवर्णनमिति तात्पर्यार्थः ॥

**अथावमानेन[3] पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।**
**सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥ २१ ॥**

अथेति ॥ **अथ** मैनाकजननानन्तरं **दक्षस्य** प्रजापतेः **कन्या** [**भवपूर्वपत्नी**] भवस्य महादेवस्य पूर्वपत्नी पूर्वभार्या **सती** पतिव्रता ॥ 'सती साध्वी पतिव्रता' इत्यमरः।

---

१ पितरो ब्रह्मणा सृष्टा व्याख्याता ये मया पुरा। अग्निष्वात्ता बर्हिषदोऽनाग्नयः साग्नयश्च ये। तेभ्यः स्वधासुता जज्ञे मेना वैतरणी–वैधारणी–तथा। इ. २ ०सौख्यं इ. ३ अपमानेन.

सती नाम देवी **पितुः** दक्षस्य ॥ कर्तरि षष्ठी ॥ **अवमानेन** स्वभर्त्रवज्ञया **प्रयुक्ता** प्रेरिता [ **योगविसृष्टदेहा** ] योगेन योगमार्गेण विसृष्टदेहा त्यक्तदेहा सती । **जन्मने** पुनरुद्भवाय **तां शैलवधूं** मेनकां **प्रपेदे** । अत्र ' पुरा किल सती देवी दक्षाध्वरे तत्कृतां स्वभर्त्रवज्ञामसहमाना पितरं प्रसूं चोपेक्ष्य मत्कर्तव्यकार्यं त्वज्जामातैव करिष्यतीति निर्धार्य देवकार्याणि साधयितुं च योगाग्निना स्वशरीरं ददाह ' इति पुरावृत्तकथानुसंधेया ॥

**सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।**
**सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन संपत् ॥ २२ ॥**

सेति ॥ **भव्या** कल्याणी **सा** सती **भूधराणामधिपेन** हिमवता **समाधिमत्यां** नियमवत्यां **तस्यां** मेनकायां **सम्यक्प्रयोगात्** साध्वाचरणाद्धेतोः **अपरिक्षतायाम्** अभ्रष्टायां **नीतौ उत्साहगुणेन** उत्साहशक्त्या । कर्त्रा । **संपद् इव उदपादि** । उत्पादिता । उत्पद्यतेर्ण्यन्तात्कर्मणि लुङ् । ' चिण्भावकर्मणोः ' इति चिण्प्रत्ययः । ' चिणो लुक् ' इति तस्य लुक् ॥

**प्रसन्नदिक्पांशुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि[1] ।**
**शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥ २३ ॥**

प्रसन्नेति ॥ प्रसन्ना निर्मला दिशो यस्मिंस्तत् **प्रसन्नदिक्** । [ **पांशुविविक्तवातं** ] पांशुविविक्ता रजोरहिता वाता यस्मिंस्तत्तथोक्तम् । [ **शङ्खस्वनानन्तरपुष्पवृष्टि** ] शङ्खस्य स्वनात्स्वनस्य वा अनन्तरं पुष्पवृष्टिर्यस्मिंस्तत्तथोक्तम् । [ **तज्जन्मदिनं** ] तस्याः पार्वत्या जन्मदिनम् । [ **स्थावरजङ्गमानां** ] स्थितिशीलाः स्थावराः शैलवृक्षादयः । ' स्थेशभासपिशकसो वरच् ' इति वरच्प्रत्ययः ॥ जङ्गम्यन्ते भृशं गच्छन्तीति जङ्गमा देवतिर्यङ्मनुष्यादयः । स्थावराश्च तेषां द्वयानामपि **शरीरिणां सुखाय** आनन्दाय **बभूव** ॥

**तया दुहित्रा सुतरां सवित्री[2] स्फुरत्प्रभामण्डलया चकासे ।**
**विदूरभूमि[3]र्नवमेघशब्दा[4]दुद्भिन्नया रत्नशलाकयेव ॥ २४ ॥**

तयेति ॥ **स्फुरत्प्रभामण्डलया तया दुहित्रा सवित्री** जनयित्री । ' स्वरतिसूतिसूयतिधूञूदितो वा ' इतीडागमः । विदूरस्याद्रेः प्रान्तभूमिः **विदूरभूमिः** । ' अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः । काकतालीयसीमान्ते मणीनामाकरो भवेत् ॥ ' इति बुद्धः ॥ **नवमेघशब्दादुद्भिन्नया रत्नशलाकया** रत्नाङ्कुरेण **इव सुतरां चकासे** रराज ॥

**दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।**
**पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥ २५ ॥**

दिन इति ॥ लब्ध उदयो यया सा **लब्धोदया** । उत्पन्नेत्यर्थः । अभ्युदितेत्यन्यत्र । **दिने दिने** प्रतिदिनम् ॥ ' नित्यवीप्सयोः ' इति वीप्सायां द्विरुक्तिः । **परिवर्धमाना** ।

---

१ तूर्य. २ धरित्री. ३ वैदूर्यभूमिः. ४ नादात्.

उभयत्र समानमेतत् । सा बाला । चन्द्रमस इयं **चान्द्रमसी लेखेव लावण्यमयान्** कान्तिविशेषप्रचुरान् ॥ ' मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥ ' इति भूपालः ॥ **विशेषान्** अवयवान् ॥ ' विशेषोऽवयवे व्यक्तौ ' इत्युत्पलमालायाम् ॥ ज्योत्स्नायामन्तरमन्तर्धानं येषां तानि **ज्योत्स्नान्तराणि** ज्योत्स्नयान्तर्हितानि । तन्मयानीति यावत् । अन्याः कलाः **कलान्तराणि इव** ॥ सुप्सुपेति समासः । ' स्थानात्मीयान्यतादर्थ्यरन्ध्रान्तर्धिषु चान्तरम् । ' इति शाश्वतः । **पुपोष** उपचितवती ॥ इयं वाक्योपमेत्याह दण्डी । तल्लक्षणं तु—" वाक्यार्थेनैव वाक्यार्थः कोऽपि यद्युपमीयते । एकानेकेवशब्दत्वात्सा तु वाक्योपमा द्विधा ॥ " इति ॥

**तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।**
**उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥२६॥**

तामिति ॥ **बन्धुप्रियां तां** बालां **बन्धुजनः** पित्रादिः । अभिजनादागतेन **आभिजनेन** । पित्रादिपूर्वसंबन्धोपाधिकेनेत्यर्थः । ' अभिजनाः पूर्वबान्धवाः ' इति काशिका ॥ **नाम्ना** । पर्वतस्यापत्यं स्त्री **पार्वती** । ' तस्यापत्यम् ' इत्यण्प्रत्ययः ॥ **इति जुहाव** आहूतवान् ॥ ह्वयतेर्लिटि रूपम् । पर्वतजन्यत्वोपाधिना पार्वतीति नाम्ना प्रसिद्धिरिति भावः । **पश्चाद्** अभिजननामप्रवृत्त्यनन्तरं **मात्रा** जनन्या ॥ उ इति संबोधने ॥ ' उ इति वितर्कसंबोधनपादपूरणेषु ' इति गणव्याख्याने ॥ माशब्दो निषेधे ॥ उ हे वत्से **मा** मा कुरु **इति** एवंरूपेण । **तपसः** तपश्चर्यायाः ॥ ' वारणार्थानामीप्सितः ' इत्यपादानत्वात्पञ्चमी ॥ **निषिद्धा** निवारिता सती **सुमुखी** सा बाला उमेत्याख्यां नामधेयं **उमाख्यां जगाम** ॥

**महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।**
**अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥ २७ ॥**

महीभृत इति ॥ पुत्राश्च दुहितरश्च पुत्राः ॥' भ्रातृपुत्रौ स्वसृदुहितृभ्याम् ' इत्येकशेषः । तेऽस्य सन्तीति पुत्रवान् ॥ भूमार्थे मतुप् ॥ तस्य **पुत्रवतोऽपि** बह्वपत्यस्यापीत्यर्थः । **महीभृतः** हिमाद्रेः **दृष्टिः** चक्षुः **तस्मिन् अपत्ये** तोके । 'अपत्यं तोकं तयोः समे ' इत्यमरः ॥ तस्यां पार्वत्यामित्यर्थः । **तृप्तिं न जगाम** । तथा हि । **अनन्तपुष्पस्य** नानाविधकुसुमस्यापि **मधोः** वसन्तस्य संबन्धिनी **द्विरेफमाला** भृङ्गपाङ्क्तिश्चूतस्य विकारे **चूते** चूतकुसुमे ॥ ' अवयवे च प्राण्योषधिवृक्षेभ्यः ' इति विकारार्थोत्पन्नस्याण्प्रत्ययस्य लुक्प्रकरणे ' पुष्पमूलेषु बहुलम् ' इति पठनाल्लुक् ॥ [ **सविशेषसङ्गा** ] सविशेषः सातिशयः सङ्गो यस्याः सा तथोक्ता । अत्यन्तासक्तेत्यर्थः ॥

**प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।**
**संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥२८॥**

प्रभेति ॥ **प्रभामहत्या** प्रकाशाधिकया **शिखया** ज्वालया **दीपः इव** । शिखादीपयोरवयवावयविभावाद्भेदेन व्यपदेशः ॥ त्रयो मार्गा यस्यास्तया **त्रिमार्गया** मन्दा-

१ सङ्गा संज्ञा

किन्या । [ **त्रिदिवस्य** ] तृतीया द्यौर्लोकः इति त्रिदिवः स्वर्गः ॥ वृत्तिविषये त्रिशब्दस्य त्रिभागवत्पूरणार्थत्वम् । पृषोदरादित्वाद्दिवशब्दादकारागमः । पुंस्त्वं लोकात् । दीव्यतेर्घञर्थे कविधानम् । दीव्यन्त्यत्र जना इति क्षीरस्वामी । तस्य **मार्गः इव** । [ **संस्कारवत्या** ] संस्कारो व्याकरणजन्या शुद्धिस्तद्वत्या **गिरा** वाचा । 'भद्रैषां लक्ष्मीर्निहिताधिवाचि ' इति श्रुतेरिति भावः । मनस ईषा मनीषा सास्यास्तीति **मनीषी** विद्वान् **इव** ॥ शकन्ध्वादित्वात्साधुः ॥ **तया** पार्वत्या **स** हिमवान् **पूतः** शोधितः **च विभूषितश्च** ॥ अत्र शिखागिरोरविशिष्टयोरुपमानानर्हत्वान्न विशेषणाधिक्यदोषः । इयं मालोपमा ॥

**मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।**
**रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥ २९ ॥**

मन्दाकिनीति ॥ **सा** पार्वती **बाल्ये** वयसि क्रीडानां रसः स्वादः । रुचिरिति यावत् । तं **क्रीडारसम्** ॥ ' रसो गन्धे रसः स्वादे ' इति विश्वः । **निर्विशतीव** भुञ्जानेव । ' निर्वेशो भृतिभोगयोः ' इत्यमरः ' आच्छीनद्योर्नुम् ' इति विकल्पान्नुमभावः । **सखीनां मध्यगता** सती [ **मन्दाकिनीसैकतवेदिकाभिः** ] मन्दाकिन्याः सैकतेषु पुलिनेषु वेदिकाभिः । **कन्दुकैः** । [ **कृत्रिमपुत्रकैः** ] क्रियया निर्वृत्तैः कृत्रिमैः । ' ड्वितः क्त्रिः ' इति क्त्रिप्रत्ययः । ' क्त्रेर्मम्नित्यम् ' इति मबागमश्च । पुत्रकैः पाञ्चालिकाभिः । ' पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता । ' इत्यमरः । ' संज्ञायां कन् ' इति कन्प्रत्ययः । **च मुहुः** पुनः पुनः **रेमे** ॥

**तां हंसमालाः शरदीव गङ्गां महौषधिं[2] नक्तमिवात्मभासः ।**
**स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥ ३० ॥**

तामिति ॥ [ **स्थिरोपदेशां** ] स्थिरः स्थेयानुपदेशः प्राग्भवीयो यस्यास्तादृशीम् । मेधाविनीमित्यर्थः । **तां** पार्वतीम् । **उपदेशकाले प्राक्तनजन्मविद्याः** । पूर्वजन्माभ्यस्तविद्या इत्यर्थः । **शरदि गङ्गां हंसमालाः इव नक्तं** रात्रौ **महौषधिं** तृणविशेषम् **आत्मभासः** स्वदीप्तयः **इव प्रपेदिरे** ॥ उपमानसामर्थ्यादुपदेशमन्तरेणैवेति गम्यते ॥

**असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।**
**कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं सा[3]थ वयः प्रपेदे ॥ ३१ ॥**

असंभृतमिति ॥ **अथ सा** पार्वती । **अङ्गयष्टेः असंभृतम्** अयत्नसिद्धं **मण्डनं** प्रसाधनम् **अनासवाख्यम्** आसवाख्यारहितं **मदस्य करणं** साधनं **कामस्य पुष्पव्यतिरिक्तम् अस्त्रम्** अस्त्रभूतं **बाल्यात्** शैशवात् **परम्** अनन्तरभावि **वयः** यौवनं **प्रपेदे** प्राप ॥ यौवनेनैव हि युवतयः प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः । अत्र द्वितीयपाद आसवरूपकारणाभावेऽपि तत्कार्यमदोक्तेर्विभावनालंकारः । तदुक्तम्—'कारणा-

---

१ बाल्यम्. २ महौषधीः. ३ साधु.

भावे कायसंपत्तिर्विभावना ' इति ॥ प्रथमतृतीययोस्त्वारोप्यमाणयोर्मण्डनमंदनास्त्रत्वयोः प्रकृतोपयोगात्परिणामालंकारः । तल्लक्षणं तु [ १० श्लोकव्याख्याने ] उक्तम् ॥

**उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।**
**बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥ ३२ ॥**

उन्मीलितमिति ॥ **नवयौवनेन** प्रथमयौवनेन **विभक्तम्** अभिव्यञ्जितम् । पीनजघनादिसंस्थानमित्यर्थः ॥ **तस्याः** पार्वत्याः **वपुः । तूलिकया** कूर्चिकया । शलाकयेत्यर्थः । 'तूलिका कथितालेख्यकूर्चिकातूलशय्ययोः ।' इति विश्वः ॥ **उन्मीलितं** रञ्जनद्रव्येणोद्भासितं समुत्कीर्णरूपमिति यावत् **चित्रम्** आलेख्यम् **इव । सूर्यांशुभिः भिन्नं** विकसितम् **अरविन्दं** पद्मम् **इव** । चतस्रः अस्रयो यस्य तच्चतुरस्रमन्यूनातिरिक्तं यथा तथा शोभत इति **चतुरस्रशोभि** ॥ ताच्छील्ये णिनिः । **बभूव** । चित्रारविन्दयोस्तूलिकातरणिकिरणसंबन्ध इव स्वतःसिद्धस्यैवाङ्गसौष्ठवस्य यौवनप्रादुर्भावोऽभिव्यञ्जको बभूवेत्यर्थः ॥

देवतानां रूपं पादाङ्गुष्ठप्रभृति वर्ण्यते मानुषाणां केशादारभ्येति धार्मिकाः । संप्रति सप्तदशभिः श्लोकैः पार्वत्याः पादादिकेशान्तवर्णनमारभते—

**अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।**
**आजह्रतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम् ॥३३॥**

अभ्युन्नतेति ॥ [ **अभ्युन्नताङ्गुष्ठनखप्रभाभिः** ] अभ्युन्नतयोरङ्गुष्ठनखयोः प्रभाभिर्निमित्तेन **निक्षेपणात्** निर्भरन्यासाद्धेतोः । **रागम्** अन्तर्गतं लौहित्यम् । 'रागः क्लेशादिके रक्ते मात्सर्ये लोहितादिषु ।' इति शाश्वतः ॥ **उद्गिरन्तौ** वमन्तौ । बहिर्निःसारयन्तौ **इव** स्थितावित्यर्थः ॥ अत्रोद्गिरतेर्गौणार्थत्वान्न ग्राम्यतादोषः । प्रत्युत गुण एव । यथाह दण्डी—'निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते ॥' इति । तस्याश्चरणौ **तच्चरणौ । पृथिव्याम् अव्यवस्थां** व्यवस्थारहिताम् । संचारिणीमित्यर्थः । **स्थलारविन्दश्रियम् आजह्रतुः** । स्थलविशेषणान्नियतलौहित्यलाभः । अत्र सामुद्रिकाः—'यस्या रक्ततलौ पादावुन्नताग्रौ तलस्पृशौ । निगूढगुल्फौ निहतौ सा स्यान्नृपतिसंमता ॥' इति । अत्रोपमानधर्मस्यारविन्दश्रियश्चरणयोरुपमेययोरसंभवादरविन्दश्रियमिव श्रियमिति प्रतिबिम्बीकरणाक्षेपान्निदर्शनालंकारः । सा च संबन्धेऽप्यसंबन्धलक्षणातिशयोक्त्यनुप्राणिता । अव्यवस्थामित्यनेन स्थलारविन्दस्य स्थैर्यसंबन्धेऽप्यसंबन्धाभिधानात् । निदर्शनालक्षणं तु—'असंभवद्धर्मयोगादुपमानोपमेययोः । प्रतिबिम्बक्रिया गम्या यत्र सा स्यान्निदर्शना ॥' इति ॥

**सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु ।**
**व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरसिञ्जितानि ॥ ३४ ॥**

सेति ॥ **प्रत्युपदेशलुब्धैः** ॥ 'गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथ वा विद्यया विद्या चतुर्थी नोपपद्यते ॥' इति न्यायादिति भावः । तदेव व्यनक्ति—**नूपुरसिञ्जितानि आदित्सुभिः** आदातुमिच्छुभिः । मञ्जीरसिञ्जितमञ्जुकूजितोपदेशमिच्छद्भिरित्यर्थः । **राजहंसैः संनताङ्गी** । कुचभारादिति भावः । **सा** पार्वती [ **लीला-**

१ अत्युन्नता. २ संनतांसा. ३ विभ्रमेषु. ४ लब्धैः.

**ञ्चितविक्रमेषु ]** लीलाभिर्विलासैरञ्चिताः पूजिता विक्रमाः पादन्यासा येषु तेषु । 'अञ्चेः पूजायाम्' इतीडागमः । 'लीला विलासक्रिययोः' इत्यमरः ॥ **गतेषु** विषयेषु **व्यनीयत इव** विनीता किमु । अन्यथा कथमस्या हंसगमनमित्युत्प्रेक्षा ॥

**वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये ।**
**शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः ॥ ३५॥**

वृत्तेति ॥ वृत्ते वर्तुले पूर्वमनुगते अनुपूर्वे । गोपुच्छाकारे इत्यर्थः । वृत्ते च ते अनुपूर्वे च **वृत्तानुपूर्वे न अतिदीर्घे च** । महाविभाषया न समासः । नञो विशेषणत्वं चशब्दप्रयोगादेव ज्ञेयम् । **शुभे** मङ्गले । तस्याः इमे **तदीये जङ्घे** प्रसृते ॥ 'जङ्घा तु प्रसृता' इत्यमरः ॥ **सृष्टवतः** निर्मितवतः **विधातुः** स्रष्टुः **शेषाङ्गनिर्माणविधौ** । जङ्घाव्यतिरिक्तावयवनिर्माणार्थमित्यर्थः । **उत्पाद्ये** पुनः संपाद्ये **लावण्ये** कान्तिविशेषविषये । लावण्यलक्षणं तु ( २५ श्लोकटीकायां ) उक्तम् । **यत्नः आस इव** बभूवेवेत्युत्प्रेक्षा । उपादानमन्तरेण कार्यस्य दुष्करत्वात्तदङ्गानां च लावण्योपादानकत्वात्पूर्वसंपादितस्य च जङ्घार्थमेव कार्त्स्न्येन विनियोगात्पुनर्लावण्यसंपादने यत्नः स्यादेवेत्येतादृक्सौन्दर्ये तज्जङ्घे इति भावः । आसेति बभूवार्थे तिङन्तप्रतिरूपकमव्ययमित्याह शाटाकयनः ॥ वल्लभस्तु—" न तिङन्तप्रतिरूपकमव्ययम् अस्तेर्भूः इति भ्वादेशनियमात्तादृक्तिङन्तस्यैवाभावात् । किंतु कवीनामयं प्रामादिकः प्रयोगः " इत्याह । वामनस्तु—"अस गतिदीप्त्यादानेष्विति धातोर्लिटि रूपमिदम् । " इत्याह । अस इत्यनुदात्तेद्दीप्त्यर्थे । आस विदीपे । प्रवृत्त इत्यर्थः ॥

**नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।**
**लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥३६॥**

नागेन्द्रेति [ **नागेन्द्रहस्ताः** ] नागेन्द्राणामैरावतादीनां हस्ताः कराः **त्वचि** चर्मणि **कर्कशत्वात् कदलीविशेषाः** राजरम्भादयः **एकान्तशैत्यात्** हेतोः **लोके परिणाहि** वैपुल्ययुक्तम् ॥ 'परिणाहो विशालता' इत्यमरः । **रूपं लब्ध्वापि** । अपिशब्दात्करिकदलीमात्रस्य तादृक्परिणाहो नास्तीति भावः । तस्या ऊर्वोः **तदूर्वोः उपमानबाह्याः जाताः** उपमानक्रियानर्हा बभूवुः । तदूर्वोर्न कार्कश्यं नाप्येकान्तशैत्यमिति भावः ॥

**एतावता नन्वनुमेयशोभि काञ्चीगुणस्थानमनिन्दितायाः ।**
**आरोपितं यद्गिरिशेन पश्चादनन्यनारीकमनीयमङ्कम् ॥ ३७ ॥**

एतावतेति ॥ **अनिन्दितायाः** अनवद्यायाः पार्वत्याः **काञ्चीगुणस्थानं** नितम्बबिम्बम् **एतावता ननु** एतावतैव । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु ।' इत्यमरः । ( अवश्यं ) शोभत इति शोभि ॥ आवश्यके णिनिः । ततस्त्यप्रत्ययः ॥ अनुमेयं

१ ण्यमुत्पन्नं. २ शोभं; कान्ति.

शोभित्वं शोभा यस्य तद् **अनुमेयशोभि** । त्वप्रत्ययस्तु गतार्थत्वान्न प्रयुक्तः इत्याह वामनः ॥ **पश्चात्** । आदौ नैःस्पृह्येऽपि तपश्चर्यानन्तरमित्यर्थः । गिरौ शेते इति गिरिशः शिवः ॥ 'गिरौ डश्छन्दसि' इति डप्रत्ययः ॥ भाषायामपि क्वचिदिष्यते । अथ वा गिरिः कैलासोऽस्यास्ति गिरिशः ॥ लोमादित्वाच्छप्रत्ययः । तेन **गिरिशेन** [ **अनन्यनारीकमनीयम्** ] अन्यासां नारीणां कमनीयः कामयितुं शक्यो न भवतीत्यनन्यनारीकमनीयस्तम् **अङ्कं** निजोत्सङ्गम् **आरोपितम्** इति **यत्** । **एतावता** लिङ्गेनेति पूर्वेणान्वयः ॥ रोहतेर्ण्यन्तात्कर्मणि क्तः । 'रुहः पोऽन्यतरस्याम्' इति हकारस्य पकारः । गत्यर्थविवक्षायां द्विकर्मकत्वम् । प्रधाने कर्मणि क्तः । गिरिजानितम्बबिम्बं विश्वातिशायिसौन्दर्यं गिरिशाङ्कारूढत्वाद्व्यतिरेकेण नार्यन्तरनितम्बबिम्बवत् । विपक्षे हेत्वनुक्तिरेव बाधिका । दाक्षायणीनितम्बबिम्बस्य तु पक्षसपक्षयोरन्यतरभावानतिवृत्तेर्निष्कलङ्कमनुमानमित्यलमस्थानसंरम्भेण ॥

**तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी[1] नवलोमराजिः[2] ।**
**नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥ ३८ ॥**

तस्या इति ॥ **नीवीं** वस्त्रग्रन्थिम् ॥ 'स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च ।' इत्यमरः ॥ **अतिक्रम्य** अतीत्य [ **नतनाभिरन्ध्रं** ] नतं निम्नं नाभिरन्ध्रं **प्रविष्टा** प्रविशन्ती **तन्वी** सूक्ष्मा **तस्याः** पार्वत्याः **नवलोमराजिः सितेतरस्य** असितस्य इन्द्रनीलस्येत्यर्थः । [ **तन्मेखलामध्यमणेः** ] तस्याः पार्वत्या मेखला तन्मेखला । तस्या इत्यनुवृत्तौ पुनस्तच्छब्दोपादानं वाक्यान्तरत्वात्सोढव्यम् । यद्वा तस्या नीव्या मेखला तन्मेखला तत्र तदवस्थानात् । तस्या मध्यमणेः **अर्चिः** प्रभा **इव रराज** ॥ 'ज्वालाभासोर्नपुंस्यर्चिः' इत्यमरः ॥

**मध्येन सा वेदिविलग्नमध्या वलित्रयं चारु बभार बाला ।**
**आरोहणार्थं नवयौवनेन[3] कामस्य सोपानमिव प्रयुक्तम् ॥ ३९ ॥**

मध्येनेति ॥ 'वेदिः परिष्कृता भूमिः' इत्यमरः ॥ **वेदिविलग्नमध्या** वेदिवत्कृशमध्या । तनुमध्येति यावत् । **सा बाला** पार्वती । **मध्येन** मध्यभागेन **चारु** सुन्दरं **वलित्रयं कामस्य आरोहणार्थं नवयौवनेन प्रयुक्तं** रचितं **सोपानमिव बभार** इत्युत्प्रेक्षा ॥

**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु[4] तथा प्रवृद्धम्[5] ।**
**मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम्[6] ॥ ४० ॥**

अन्योन्यमिति ॥ **अन्योन्यं** परस्परम् ॥ 'कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये' इति द्विरुक्तिः ॥ 'समासवच्च बहुलम्' इति बहुलवचनादसमासपक्षेऽपि पूर्वपदस्थस्य सुपः

---

१ नीला. २ राजी. ३ नवयौवनस्य कामेन. ४ चारु. ५ विवृद्धम्. ६ सूत्रेण पदं न लब्धम्; प्यलब्धम्. ३८ श्लोकस्य स्थानेऽयं श्लोको दृश्यते–गम्भीरनाभी ( भि ) ह्रदसंनिधाने ( वेशे ) रराज नीला ( तन्वी ) नवलोमराजिः । मुखेन्दुभीरु( त )स्तनचक्रवाकचञ्चुच्युता शैवलरेख ( वल- )रेव ॥

सुवेक्तव्यः ॥ **उत्पीडयद्** उपरुन्धत् **पाण्डु** गौरम् **उत्पलाक्ष्याः स्तनद्वयम्** **तथा** तेन प्रकारेण **प्रवृद्धम्** । कर्तरि क्तः । **श्याममुखस्य** कृष्णचूचुकस्येति स्वरूपवर्णनं **तस्य** स्तनद्वयस्य **मध्ये यथा** येन प्रकारेण **मृणालसूत्रान्तरं** बिसतन्तुमात्रावकाशः **अपि अलभ्यं** लब्धुमशक्यम् ॥ 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थे ।' इत्यमरः ॥ अत्र संबन्धेऽसंबन्धरूपातिशयोक्त्यलंकारः । कुचयोः पीवरत्वातिशयार्थमवकाशसंबन्धेप्यसंबन्धाभिधानादिति ॥

लोके सुकुमारत्वमेव कुसुमास्त्रस्य साधकत्वमिति स्थिते सत्याह—

**शिरीषपुष्पाधिकसौकुमार्यौ बाहू तदीयाविति मे वितर्कः ।**
**पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन ॥ ४१ ॥**

शिरीषेति ॥ तस्या इमौ **तदीयौ बाहू [ शिरीषपुष्पाधिकसौकुमार्यौ ]** शिरीषपुष्पादधिकं सौकुमार्यं मार्दवं ययोस्तथोक्तौ **इति मे वितर्कः** ऊहः । कुतः । **यौ** बाहू **पराजितेनापि** पूर्वं निर्जितेनापि **मकरध्वजेन** कामेन **हरस्य कण्ठपाशौ** कण्ठबन्धनरज्ज्वौ **कृतौ** । कण्ठालिङ्गनं प्रापिताविति्यर्थः । तदसाध्यसाधनात्तत आधिक्यमिति भावः ॥ अत्र बाह्वोरारोपितकण्ठपाशत्वस्य प्रकृतवैरनिर्यातनोपयोगात्परिणामालंकारः ॥

**कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।**
**अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ ४२ ॥**

कण्ठस्येति ॥ **स्तनबन्धुरस्य** स्तनाभ्यां बन्धुरस्योन्नतस्य **तस्याः** पार्वत्याः **कण्ठस्य** गलस्य **निस्तलस्य** वर्तुलस्य **मुक्ताकलापस्य** मुक्ताभूषणस्य **च** । 'वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम् ।' 'कलापो भूषणे बर्हे तूणीरे संहतावपि ।' इति चामरः ॥ **अन्योन्यशोभाजननाद् भूषणभूष्यभावः** अलंकारालंकार्यभावः **साधारणः** समानो **बभूव** । उभावप्यन्योन्यस्य भूष्य भूषणे च बभूवतुरित्यर्थः ॥ अत्र कण्ठमुक्ताकलापयोः शोभाक्रियाद्वारेणान्योन्यभूषाजनकत्वादन्योन्यालंकारः । तदुक्तम् 'परस्परक्रियाजननमन्योन्यम् ।' इति ॥

**चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।**
**उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥४३॥**

चन्द्रमिति ॥ **लोला** चपला । परिभ्रमणशीलेत्यर्थः । **लक्ष्मीः** कान्त्यभिमानिनी देवता **चन्द्रं गता** प्राप्ता सती **पद्मगुणान्** सौगन्ध्यादीन् **न भुङ्क्ते** नानुभवति । **पद्माश्रिता** सती चन्द्रमस इमां **चान्द्रमसीम् अभिख्यां** शोभाम् ॥ आभिख्या नामशोभयोः' इत्यमरः । अमृतवदानन्दिनीं न भुङ्क्ते । **उमामुखं प्रतिपद्य तु द्वे**

---

१ माला. २ प्रतर्कः. ३ तस्यास्तनु. ४१—४२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

निर्भर्त्सिताशोकदलप्रसूति पाणिद्वयं चारुनखं तदीयम् ।
नवोदितेन्दुप्रतिमस्य शोभां व्योम्नः प्रदोषे विफलीचकार ॥

चन्द्रपद्मे संश्रयः कारणं यस्यास्तां **द्विसंश्रयां प्रीतिम्** आनन्दम् **अवाप** । तत्रोभयगुणसंभवादिति भावः। अत्रोपमानभूतचन्द्रपद्मापेक्षयापेमपेयस्योमामुखस्याधिकगुणवत्त्वोक्त्या व्यतिरेकालंकारः ॥ तदुक्तम्—'भेदप्राधान्येनोपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः' इति ॥

**पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।**
**ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥४४॥**

पुष्पमिति ॥ **पुष्पं** पुण्डरीकादिकं [ **प्रवालोपहितं** ] प्रवाले बालपल्लव उपहितं निहितं **स्याद्यदि** । 'प्रवालो वल्लकीदण्डे विद्रुमे बालपल्लवे ।' इति विश्वः ॥ **मुक्ताफलं वा स्फुटे** निर्मले विद्रुमे तिष्ठतीति **स्फुटविद्रुमस्थं** स्याद्यदि । **ततः** तर्हि **विशदस्य** शुभ्रस्य [ **ताम्रौष्ठपर्यस्तरुचः** ] ताम्रे अरुणे ओष्ठे पर्यस्ता प्रसृता रुक्कान्तिर्यस्य तथोक्तस्य **तस्याः** पार्वत्याः **स्मितस्य अनुकुर्यात्** । स्मितमनुकुर्यादित्यर्थः । अत्र 'मापाणामश्नीयात्' इतिवत्संबन्धमात्रविवक्षया षष्ठी । अत्र पुष्पप्रवालयोर्मुक्ताविद्रुमयोश्चासंबन्धेऽपि संबन्धोक्त्या अतिशयोक्तिः सा च संभावना इत्यलंकारसर्वस्वकारः । विशेषतस्तु पुष्पमुक्ताफलयोरुपमानयोः प्रकृतोत्कर्षार्थमुपमेयताकल्पनात्प्रतीपालंकारः । तदुक्तम्—'उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपः ।' इति । स च पूर्वोक्तातिशयोक्त्यनुप्राणित इति ॥

**स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव ताड्यमाना ॥ ४५ ॥**

स्वरेणेति ॥ **अभिजातवाचि** मधुरभाषिण्यां **तस्यां** पार्वत्याम् **अमृतस्रुता** अमृतस्राविणा **इव** ॥ क्विप् ॥ **स्वरेण** नादेन **प्रजल्पितायाम्** आलपन्त्याम् । कर्तरि क्तः ॥ अन्यैः काकादिभिः पुष्टा **अन्यपुष्टा** कोकिला **अपि** ॥ मुख्यया वृत्त्या जातिवचनत्वाभावाद् ङीबभावः ॥ **ताड्यमाना** वाद्यमाना विषमबद्धा तन्त्रीः **वितन्त्रीः इव** । 'अवितृस्तृतन्त्रिभ्य ईः' इति तन्त्रीधातोरौणादिक ईप्रत्ययः । ङीबभावान्न 'हल्ङ्याब्भ्यः—'इति सुलोपः । तदुक्तम्—'अवीलक्ष्मीतरीतन्त्रीह्रीधीश्रीणामुणादितः । स्त्रीलिङ्गानाममीषां तु न सुलोपः कदाचन ॥' इति । एते ङीबन्ता न भवन्तीत्यर्थः ॥ **श्रोतुः** जनस्य **प्रतिकूलशब्दा** कर्णकठोरनादा भवतीति शेषः ॥

**प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।**
**तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥४६॥**

---

१ ताम्रोष्ठ. २ अन्यपुष्टाः...शब्दाः. ४५-४६ श्लोकयोर्मध्ये इमौ श्लोकौ अन्योन्यस्य पाठान्तरीभूतौ दृश्येते—कर्णद्वयस्थं नगराजपुत्र्यास्ताटङ्कयुग्मं सु( नि )तरां रराज ( बभासे, चकास्ति )। म( ज्ञा )त्वा भवित्रीं त्रिपुरारिपत्नीं तां सेवमाना( सेवासमेता )विव पुष्पवन्तौ ॥ ताटङ्कपत्रं (-युग्मं ) विरराज तस्याः शैलात्मजायाः श्रवणद्वयस्थम् । मत्वा भवित्रीं मदनारिपत्नीं सेवासमेताविव पुष्पवन्तौ ॥

प्रवातेति ॥ [ **प्रवातनीलोत्पलनिर्विशेषम्** ] प्रवाते प्रभूतवातस्थले यन्नीलोत्पलं ततो निर्विशेषं निर्भेदम् । तत्सदृशमित्यर्थः । **अधीरविप्रेक्षितं** चकितविलोकितम् **आयताक्ष्या** विशालनेत्रया **तया** पार्वत्या **मृगाङ्गनाभ्यः** हरिणीभ्यः **गृहीतम्** अभ्यस्तं **नु** ॥ अथ वा **मृगाङ्गनाभिः** ततः तस्याः पार्वत्याः ॥ 'पञ्चम्यास्तसिल्' ॥ **गृहीतं नु** ॥ अत्र विवक्षितस्य परस्परग्रहणस्योत्प्रेक्षणादुत्प्रेक्षेति केचित् । तदुपजीविसंदेहालंकार इत्यन्ये । उभयोः संकर इत्यपरे ॥

**तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या ।**
**तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥४७॥**

तस्या इति ॥ **आयतलेखयोः** दीर्घरेखयोः **तस्याः** पार्वत्या **भ्रुवोः** संबन्धिनी [ **शलाकाञ्जननिर्मिता** ] शलाकयाञ्जनेन निर्मिता **इव** स्थिता **या कान्तिः लीलाचतुरां** विलाससुभगां **तां** कान्तिं **वीक्ष्य अनङ्गः** [ **स्वचापसौन्दर्यमदं** ] स्वचापसौन्दर्येण यो मदः तं **मुमोच** ॥ इह सौन्दर्यातिशयोक्तिः ॥

**लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।**
**तं केशपाशं प्रसमीक्ष्य कुर्युर्बालप्रियत्वं शिथिलं चमर्यः ॥४८॥**

लज्जेति ॥ **तिरश्चां** तिर्यग्जातीनां **चेतसि लज्जा स्याद्यदि** । संशयाभावः **असंशयम्** । संदेहो नास्तीत्यर्थः । **पर्वतराजपुत्र्याः** । 'शार्ङ्गरवाद्यञो ङीन्' इति ङीन् ॥ **तं** प्रसिद्धं **केशपाशं** केशकलापम् ॥ 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।' इत्यमरः ॥ **प्रसमीक्ष्य** दृष्ट्वा **चमर्यः** मृगीविशेषाः । बालाः प्रिया यासामिति विग्रहे बालप्रियास्तासां भावः **बालप्रियत्वम्** । प्रियबालत्वमित्यर्थः । आहिताग्न्यादिपाठाद्वा परनिपातः । 'त्वतलोर्गुणवचनस्य' इति पुंवद्भावः । **शिथिलं कुर्युः** । निर्लज्जत्वान्न शिथिलयन्तीत्यर्थः ॥ अत एवात्र निर्लज्जत्वकरणहेतोराद्यपादे वाक्यर्थत्वेनोक्त्या काव्यलिङ्गाख्यालंकारः । तदुक्तम्—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।' इति ॥

**सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।**
**सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव ॥ ४९॥**

सर्वोपमेति ॥ किंबहुना । **सा** पार्वती **विश्वसृजा** विधात्रा [ **एकस्थसौन्दर्यदिदृक्षया** ] एकत्र तिष्ठतीत्येकस्थं तस्य सौन्दर्यस्य । सर्ववस्तुगतस्येत्यर्थः । दिदृक्षया **इव प्रयत्नात् यथाप्रदेशं** क्रमाद् **विनिवेशितेन** स्थापितेन [ **सर्वोपमाद्रव्यसमुच्चयेन** ] सर्वेषामुपमाद्रव्याणां चन्द्रारविन्दाद्युपमानवस्तूनां समुच्चयेन समाहारेण **निर्मिता** ॥ दिदृक्षयेवेति फलोत्प्रेक्षा दर्शनार्थित्वाद्विश्वसृज इति ॥

**तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।**
**समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥ ५० ॥**

---

१ योः सा या. २ लोलाम्. ३ तत्. ४ एकवधूः भवित्री ...हरा. ५ प्रीत्या.

तामिति ॥ कामेनेच्छया चरतीति **कामचरः नारदः कदाचित् पितुः** हिमवतः **समीपे कन्यां तां** पार्वतीं **प्रेक्ष्य किल प्रेम्णा** न त्वन्यथा **हरस्य** शिवस्यार्धं हरतीत्यर्धहरा ॥ 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः ॥ शरीरस्यार्धहरां **शरीरार्धहराम्** । कुलधुरन्धरादिवदयमत्रद्वारा समुदायविशेषकत्वात्समासः । अन्यथा त्वर्धस्य समप्रविभागवचनत्वादर्धशरीरेति स्यात् ॥ **एकवधूम्** असपत्नीकां भार्याम् । 'पूर्वकाल-' इत्यादिना समासः ॥ **भवित्रीं** भाविनीं **समादिदेश** । हरस्यार्धाङ्गहारिण्येकपत्नी भविष्यतीत्यादिष्टवानित्यर्थः ॥

**गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।**
**ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥५१॥**

गुरुरिति ॥ **गुरुः** पिता । 'गुरू गीष्पतिपित्राद्यौ' इत्यमरः । **अतः** नारदवचनाद्धेतोः **अस्याः** पार्वत्याः **प्रगल्भे वयसि अपि** यौवने सत्यपि [ **निवृत्तान्यवराभिलाषः** ] निवृत्तोऽन्यस्मिन्वरे जामातर्यभिलाषो यस्य स तथोक्तः सन् । 'वरो ना रूपजामात्रोः' इति वैजयन्ती । **तस्थौ** । वरान्तरं नान्विष्टवानित्यर्थः ॥ ननु कुतोऽसौ निर्बन्ध इत्यत आह ऋते इति ॥ तथाहि [ **मन्त्रपूतं** ] मन्त्रैः पूतं संस्कृतं हूयत इति **हव्यम्** आज्यादिकं **कृशानोः** पावकाद् **ऋते** कृशानुं विना ॥ 'अन्यारादितर'–इत्यादिना पञ्चमी ॥ **अपराणि तेजांसि** सुवर्णादीनि **न अर्हन्ति** । न भजन्तीत्यर्थः । ईश्वरादन्यस्य तद्योग्यस्याभावादुपेक्षेति भावः ॥

तर्हि तमेवाहूय दीयतामित्याशङ्क्याह—

**अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।**
**अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ ५२ ॥**

अयाचितारमिति ॥ **अद्रिः** हिमवान् **अयाचितारम्** अयाचमानं **देवदेवं** महादेवं **सुतां** पार्वतीं **ग्राहयितुं** स्वयमाहूय परिग्राहयितुं **न शशाक** नोत्सेहे । ग्रहेर्द्विकर्मकत्वम् । तथा हि । **साधुः** सज्जनः ॥ 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत् ।' इति विश्वः । **अभ्यर्थनाभङ्गभयेन** याच्ञावैफल्यभीत्या **इष्टे अपि अर्थे** विषये **माध्यस्थ्यम्** औदासीन्यम् **अवलम्बते** ॥

न च तथैव स्थितः किं तूपायान्तरं चिन्तितवानिति वक्तुं प्रस्तौति—

**यदैव पूर्वे जनने शरीरं सा दक्षरोषात्सुदती ससर्ज ।**
**तदा प्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥५३॥**

यदेति ॥ शोभना दन्ता यस्याः सा **सुदती** ॥ 'वयसि दन्तस्य दतृ' इति दत्रादेशः ॥ 'उगितश्च' इति ङीप् । **सा** पार्वती **पूर्वे जनने** पूर्वस्मिञ्जन्मनि ॥ 'पूर्वादिभ्यो नवभ्यो वा' इति स्मिन्नादेशविकल्पः ॥ पूर्वे ज्वलने इति पाठे पूर्वं दाक्षायणीत्वे ज्वलने योगाग्नौ । **यदा** यस्मिन्काले **दक्षरोषात् शरीरं** देहं **ससर्ज** तत्याज । **तदाप्रभृत्येव** तदाद्येव यथा तथा **पशूनां पतिः** शिवः **विमुक्तसङ्गः** त्यक्तवि-

१ अन्यतर. २ स्वयमुत्ससर्ज. ४ ततः प्रभृति.

षयासङ्गः सन् । अपरिग्रहः अपत्नीकः अभूत् । स्त्र्यन्तरं न परिजग्राहेत्यर्थः । 'पत्नीपरिजनादानमूलशापाः परिग्रहाः' । इत्यमरः ॥

**स कृत्तिवासास्तपसे यतात्मा गङ्गाप्रवाहोक्षितदेवदारु ।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किंचित्क्वणत्किंनरमध्युवास ॥ ५४ ॥**

स इति ॥ **कृत्तिवासाः** चर्माम्बरः । 'आजिनं चर्म कृत्तिः स्त्री' इत्यमरः । **यतात्मा** नियतचित्तः **स** पशुपतिः **तपसे** तपोऽर्थे [ **गङ्गाप्रवाहोक्षितदेवदारु** ] गङ्गाप्रवाहेणोक्षिताः सिक्ता देवदारवो यस्मिंस्तत्तथोक्तम् । **मृगनाभिगन्धि** कस्तूरीगन्धवत् । कस्तूरीमृगसंचारादिति भावः । 'मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम्' । इत्यमरः । [ **क्वणत्किंनरं** ] क्वणन्तो गायन्तः किंनरा यस्मिंस्तत्तथोक्तम् । **किंचित्** किमपि **हिमाद्रेः प्रस्थं** सानुम् **अध्युवास** । कुत्रचित्प्रस्थ उवासेत्यर्थः । 'उपान्वध्याङ्वसः' इत्याधारस्य कर्मत्वम् ॥ 'प्रस्थोऽस्त्री सानुमानयोः' इत्यमरः ॥

**गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः ।**
**मनःशिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥ ५५ ॥**

गणा इति ॥ **गणाः** प्रमथगणाः ॥ 'गणाः प्रमथसंख्यौघाः' इति वैजयन्ती । **नमेरुप्रसवावतंसाः** सुरपुंनागकुसुमशेखराः ॥ 'नमेरुः सुरपुंनागः' इति विश्वः । **स्पर्शवतीः** सुखस्पर्शाः । मृद्वीरित्यर्थः । प्रशंसायां मतुप् ॥ **भूर्जत्वचः** भूर्जवल्कलानि । **दधानाः** । वसाना इत्यर्थः । [ **मनःशिलाविच्छुरिताः** ] मनःशिलाभिर्धातुविशेषैर्विच्छुरिता अनुलिप्ताश्च सन्तः । [ **शैलेयनद्धेषु** ] शिलायां भवं शैलेयं गन्धौषधिविशेषः । 'शिलायाः स्त्रीभ्यो ढक्' इति भावार्थे ढक् ॥ 'शिलाजतु च शैलेयम्' इति यादवः । तेन नद्धेषु व्याप्तेषु **शिलातलेषु निषेदुः** । उपविविशुरित्यर्थः ॥

**तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान् ।**
**दृष्टः कथंचिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥ ५६ ॥**

तुषारेति ॥ [ **तुषारसंघातशिलाः** ] तुषारसंघाता हिमघनास्त एव शिलास्ताः **खुराग्रैः समुल्लिखन्** विदारयन्दर्पेण कलो मधुरध्वनिर्यस्य स **दर्पकलः विविग्नैः** भीतैः **गवयैः** गौसदृशमृगविशेषैः **कथंचित्** कृच्छ्रेण **दृष्टः** ककुदमस्यास्तीति **ककुद्मान्** वृषभः असोढः सिंहानां ध्वनिर्येन सः [ **असोढसिंहध्वनिः** ] सिंहध्वनिमसहमानः सन् । **उन्ननाद** उच्चैर्ननाद जगर्जेत्यर्थः । स्वभावोक्तिरलंकारः । तदुक्तम्—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।' इति ॥

**तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।**
**स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥ ५७ ॥**

तत्रेति ॥ **तपसः फलानाम्** इन्द्रत्वादीनां **स्वयं विधाता** जनयिता । दाते-

---

१ जितात्मा. २ प्रपातोत्थित. ३ वसानाः. ४ गन्धेषु. ५ अयम्. ६ समृद्धं. ७ चकार.

त्यर्थः । अष्टौ मूर्तयो यस्य सः अष्टमूर्तिः ईश्वरः । 'भूतार्कचन्द्रयज्वानो मूर्तयोऽष्टौ प्रकीर्तिताः' । इति ॥ तत्र प्रस्थे स्वं स्वकीयम् एव मूर्त्यन्तरं मूर्तिभेदं समित्समिद्धं समिद्भिः समिद्धं दीपितम् अग्निम् आधाय प्रतिष्ठाप्य केनापि कामेन कयापि फलकामनया तपः चचार चक्रे ॥ 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ।' इति न्यायात्कामेनेत्युक्तम् । तस्यावाप्तसमस्तकामत्वात्केनापीत्युक्तम् ॥

**अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।**

**आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥ ५८ ॥**

अनर्घ्यमिति ॥ अद्रीणां नाथः अद्रिनाथः हिमवान् । अर्घं मूल्यमर्हतीत्यर्घ्यः । 'मूल्ये पूजाविधावर्घः' इत्यमरः ॥ 'दण्डादिभ्यो यत्' इति यत्प्रत्ययः ॥ अर्घ्यो न भवतीत्यनर्घ्यस्तम् अनर्घ्यम् । अमूल्यमित्यर्थः । स्वर्गं ओकः स्थानं येषां तेषां स्वर्गौकसां देवानाम् अर्चितम् । देवैः पूज्यमानमित्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः ॥ 'क्तस्य च वर्तमाने' इति षष्ठी ॥ तम् ईश्वरम् अर्घ्येण पूजार्थोदकेन । 'पादार्घाभ्यां च' इति यत्प्रत्ययः । 'षट् तु त्रिष्वर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' । इत्यमरः । अर्चयित्वा पूजयित्वा अस्य ईश्वरस्य आराधनाय सखीभ्यां जयाविजयाभ्यां समेतां [ सखीसमेतां ] प्रयतां नियतां तनूजां सुतां समादिदेश आज्ञापयामास ॥

**प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां गिरिशोऽनुमेने ।**

**विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥ ५९ ॥**

प्रत्यर्थीति ॥ गिरिशः शिवः समाधेः प्रत्यर्थिभूतां प्रतिपक्षभूताम् । सुप्सुपेति समासः । अपि श्रोतुमिच्छन्तीं शुश्रूषमाणां सेवमानाम् । सेवका हि सेव्ये दत्तकर्णा भवन्ति । इच्छार्थे सन्प्रत्ययः । 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । तां पार्वतीम् अनुमेने अङ्गीचकार । न प्रतिषिद्धवानित्यभिप्रायः । न चैतावता धीरस्य कश्चिद्विकार इत्याशयः ॥ धीरत्वमेवार्थान्तरन्यासेनाह–विकारेति ॥ [ विकारहेतौ । विकारस्य प्रकृतेरन्यथात्वस्य हेतौ स्त्रीसन्निधानादिकारणे सति विद्यमाने अपि येषां चेतांसि न विक्रियन्ते न विकृतिं नीयन्ते ते एव धीराः । विक्रियन्ते इति कर्मणि लट् ॥

शुश्रूषाप्रकारमेवाह—

**अवचितबलिपुष्पा वेदिसंमार्गदक्षा**
**नियमविधिजलानां बर्हिषां चोपनेत्री ।**
**गिरिशमुपचचार प्रत्यहं सा सुकेशी**
**नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥ ६० ॥**

---

१ अनर्घ. २ समग्राम्. ३ अत्र कालिकापुराणम्–एवमुक्त्वा तु तां देवीं सेवायै जगृहे हरः । इदमेव महद्धैर्यं यद्विघ्नो न हि विघ्नयेत् ॥ इति ।

अवचितेति ॥ **सुकेशी** शोभनमूर्धजा ॥ 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीप् ॥ **सा** पार्वती अवचितानि लूनानि बलिपुष्पाणि पूजाकुसुमानि यया सा [ **अवचितबलिपुष्पा** ] [ **वेदिसंमार्गदक्षा** ] वेदेर्नियमवेदिकायाः संमार्गे संमार्जने दक्षा । [ **नियमविधिजलानां** ] नियमविधेर्नित्यकर्मानुष्ठानस्य यानि जलानि तेषां **बर्हिषां** कुशानां **च उपनेत्री** आनेत्री सती [ **तच्छिरश्चन्द्रपादैः** ] तस्य गिरिशस्य शिरसि चन्द्रस्य पादै रश्मिभिः । 'पादा रश्म्यङ्घ्रितुर्यांशाः' इत्यमरः । **नियमितपरिखेदा** निवर्तितपरिश्रमा सती अह्न्यहनि **प्रत्यहम्** । 'अव्ययं विभक्तिसमीपसमृद्धि'— इत्यादिना यथार्थेऽव्ययीभावः । 'नपुंसकादन्यतरस्याम्' इत्यच्प्रत्ययः । **गिरिशम् उपचचार** शुश्रूषांचक्रे ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये
**उमोत्पत्तिर्नाम प्रथमः सर्गः ॥**

---

## द्वितीयः सर्गः ।

**तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।**
**तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥ १ ॥**

तस्मिन्निति ॥ **तस्मिन्काले** पार्वतीशुश्रूषाकाले **तारकेण** तारकनाम्ना वज्रणखपुत्रेण केनाचिदसुरेण **विप्रकृताः** उपप्लुता दिवमोकः स्थानं येषां ते **दिवौकसः** देवाः । 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः । द्यौरोक इति पक्षे पृषोदरादित्वात्साधुः । तुरं त्वरितं साहयत्याभिभवतीति तुराषाट् । साहयतेश्चौरादिकात्क्विप् । 'नहिवृतिवृषि—'इत्यादिना पूर्वपदस्य दीर्घः । प्रकृतिग्रहणे प्रातिपदिकस्यापि ग्रहणात् । मुग्धबोधकारस्तु तुराशब्दष्टावन्त इत्याचष्टे ॥ तं **तुरासाहं** देवेन्द्रम् । अजादिषु साड्रूपत्वाभावात् 'सहेः साडः सः' इति षत्वं न भवति ॥ **पुरोधाय** पुरस्कृत्य । स्वयंभुवो ब्रह्मण इदं **स्वायंभुवम्** । संज्ञापूर्वकविधेरनित्यत्वात् 'ओर्गुणः' इति गुणो न । **धाम** स्थानं **ययुः** । ब्रह्मलोकं जग्मुरित्यर्थः ॥

**तेषामाविरभूद्ब्रह्मा परिम्लानमुखश्रियाम् ।**
**सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥ २ ॥**

तेषामिति ॥ [ **परिम्लानमुखश्रियाम्** ] परिम्लाना परिक्षीणा मुखश्रीः मुखकान्तिः येषां तथोक्तानां **तेषां** देवानां **ब्रह्मा सुप्तपद्मानां** मुकुलितारविन्दानां **सरसां प्रातः दीधितिमान्** सूर्यः **इव आविरभूत्** । प्रकाशोऽभूदित्यर्थः । 'प्रकाशे प्रादु-

राविः स्यात्' इत्यमरः ॥ सूर्योपमानेन तेषां म्लानिहरणत्वं सूचितम् । अत्रोपमालंकारः। तल्लक्षणं तु—'स्वतःसिद्धेन भिन्नेन संमतेन च धर्मतः । साम्यमन्येन वर्ण्यस्य वाच्यं चैकपदोपमा ॥' इति ॥

**अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।**
**वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥ ३ ॥**

अथेति ॥ **अथ** आविर्भावानन्तरं **सर्वे ते** देवाः सर्वतः समन्ततो मुखानि यस्य तं **सर्वतोमुखम्** । चतुर्मुखमित्यर्थः । [ **वागीशं** ] वाचां विद्यानामीशं **सर्वस्य** जगतः **धातारं** स्रष्टारं ब्रह्माणं **प्रणिपत्य** नमस्कृत्य । अर्थादनपेताभिः **अर्थ्याभिः** । अर्थयुक्ताभिरित्यर्थः । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । **वाग्भिः उपतस्थिरे** । तुष्टुवुरित्यर्थः । 'उपाद्देवपूजासंगतिकरणमित्रपथिष्विति वक्तव्यम्' इत्यात्मनेपदम् । ॥

स्तुतिप्रकारमाह 'नमः' इत्यादिभिर्द्वादशभिः श्लोकैः—

**नमस्त्रिमूर्तये तुभ्यं प्राक्सृष्टेः केवलात्मने ।**
**गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥ ४ ॥**

नम इति ॥ हे भगवन्नित्यध्याहार्य व्याख्येयम् । **सृष्टेः प्राक्** ॥ 'अन्यारात्–' इत्यादिनाञ्चूत्तरपदयोगे पञ्चमी ॥ **केवलात्मने** एकरूपाय ॥ 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुतेः ॥ 'निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः ।' इत्यमरः। **पश्चात्** सृष्टिप्रवृत्तिकाले । [ **गुणत्रयविभागाय** ] विभज्यतेऽनेनेति विभागः । गुणानां सत्त्वादीनां त्रयमेव विभागो यस्य तस्मै । 'गुणाः सत्त्वं रजस्तमः' इत्यमरः ॥ **भेदम्** उपाधिम् । स्रष्टृत्वादिकमित्यर्थः । **उपेयुषे** प्राप्तवते । 'उपेयिवाननाश्वाननूचानश्च' इति निपातः । अत एव **त्रिमूर्तये** ब्रह्मविष्णुरुद्ररूपिणे **तुभ्यं नमः** । 'नमःस्वस्ति–'इत्यादिना चतुर्थी । उक्तं च—'नमो रजोजुषे सृष्टौ स्थितौ सत्त्वमयाय च । तमोरूपाय संहारे त्रिरूपाय स्वयंभुवे ॥' इति ॥

**यदमोघमपामन्तरुप्तं बीजमज त्वया ।**
**अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥ ५ ॥**

यदिति ॥ न जायत इत्यजः । हे **अज** । **अपां** जलानाम् **अन्तः त्वया यद् अमोघम्** अवन्ध्यं **बीजं** वीर्यम् **उप्तं** निक्षिप्तम् । मुक्तम् इति पाठे विसृष्टमित्यर्थः । 'शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च' । इत्यमरः ॥ **अतः** ते बीजात् **चराचरं** स्थावरजङ्गमात्मकम् । समाहारे द्वन्द्वैकवद्भावः ॥ **विश्वं** जगत् । उत्पन्नमिति शेषः । **तस्य** विश्वस्य । प्रभवत्यस्मादिति **प्रभवः** कारणं **गीयसे** ॥ 'अदश्चराचरं विश्वं प्रसवस्तस्य गीयते' इति पाठे अद इदं चराचरं विश्वं तस्य बीजस्य प्रसवो गीयते । लोके इति शेषः ॥ अत्र मनुः—'अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥' इति ॥

**तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन् ।**
**प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥ ६ ॥**

तिसृभिरिति ॥ **एकः** सृष्टेः प्राक्केवलस्त्वं **तिसृभिः अवस्थाभिः** त्रैगुण्यमयीभिर्हरिहरब्रह्मस्वरूपाभिः **महिमानं** निजशक्तिम् **उदीरयन्** विजृम्भयन् **प्रलयस्थितिसर्गाणाम्** अन्तस्थित्युत्पत्तीनां **कारणतां गतः** । इदं पश्चाद्भेदमुपेयुषे ( २।४ ) इत्यस्य विवरणमतो न गतार्थत्वदोषः ॥

भूतसृष्टिकर्तृत्वमुक्त्वा मिथुनसृष्ट्यर्थं मूर्तिमतो ब्रह्मणो भेदमाह—

**स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।**
**प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥ ७ ॥**

स्त्रीपुंसाविति ॥ स्त्री च पुमांश्च **स्त्रीपुंसौ** ॥ 'अचतुर' इत्यादिनाच्प्रत्ययान्तो निपातः। **सिसृक्षया** स्रष्टुमिच्छया **भिन्नमूर्तेः** द्विधाकृतविग्रहस्य ते तवात्मनो देहस्य भागौ **आत्मभागौ** । 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि ।' इति विश्वः। **तावेव** भागौ **प्रसूतिभाजः** उत्पत्तिभाजः । [ **सर्गस्य** ] सृज्यत इति सर्गस्तस्य । निजसृष्टेरित्यर्थः । माता च पिता च **पितरौ** ॥ पिता मात्रा इत्येकशेषः । **स्मृतौ** । वृद्धैरिति शेषः ॥ अत्र मनुः—' द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् । अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥ ' इति ॥

**स्वकालपरिमाणेन[2] व्यस्तरात्रिंदिवस्य ते ।**
**यौ तु[3] स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥ ८ ॥**

स्वकालेति ॥ [ **स्वकालपरिमाणेन** ] स्वकालस्य परिमाणेन ' चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते । ' इत्युक्तरूपेण । [ **व्यस्तरात्रिंदिवस्य** ] व्यस्तं विभक्तं रात्रिंदिवं रात्र्यहनी यस्य तस्य । यद्यपि ' अचतुर ' इत्यादिसूत्रेण रात्रौ च दिवा च रात्रिंदिवमिति सप्तम्यर्थे वृत्तौ द्वन्द्व इत्युक्तं तथापि ' दोषामन्यमहः ' ' दिवामन्या रात्रिः ' इत्यादौ कर्मवदत्रापि प्रातिपदिकार्थवृत्तित्वं कथंचित्प्रयोगबलादाश्रयणीयम् ॥ **ते** तव **यौ तु स्वप्नावबोधौ तौ** एव **भूतानां प्रलयोदयौ** संहारसृष्टी । यदाहुः—' यदा स देवो जागर्ति तदेदं चेष्टते जगत् । यदा स्वपिति शान्तात्मा तदा सर्वं प्रलीयते ॥ ' इति ॥ एतच्च दैनंदिनसृष्टिप्रलयाभिप्रायकं महाप्रलयस्य ब्रह्मणो वर्षशतान्ते भावित्वात् ॥

**जगद्योनिरयोनिस्त्वं जगदन्तो[4] निरन्तकः ॥**
**जगदादिरनादिस्त्वं जगदीशो[5] निरीश्वरः ॥ ९ ॥**

जगदिति ॥ हे भगवन् । त्वं **जगद्योनिः** जगत्कारणं स्वयम् **अयोनिः** अनादि-

---

१ भावौ. २ परिणामेन. ३ यावेव स्वप्नबोधौ तौ; यौ स्वप्नबोधौ तावेव; स्वप्नावबोधौ भूतानां तावेव. ४ अनन्तो जगदन्तकः; जगदन्तोऽप्यनन्तकः. ५ जगदीशोऽप्यतीश्वरः.

त्वादकारणकस्त्वम् । [ **जगदन्तः** ] अन्तयतीत्यन्तः । पचाद्यच् । जगतोऽन्तो जगत्संहर्ता स्वयं **निरन्तकः** नित्यत्वादन्तरहितः । त्वं जगतामादिः **जगदादिः** । सृष्टेः प्रागपि सन्नित्यर्थः । अत एव त्वम् **अनादिः** आदिरहितः । त्वं [**जगदीशः**] जगतामीशो नियन्ता स्वयं **निरीश्वरः** । अनियम्य इत्यर्थः । ' यतो वा इमानि भूतानि जायन्ते ' इत्यादिश्रुतिरेवात्र प्रमाणम् ॥ अत्रायोनिरित्यादौ नञ्तत्पुरुषाश्रयणे विरोधः । बहुव्रीहिणा तु तत्परिहार इति विरोधाभासालंकारः । यथाहुः—'विरोधाभासत्वे विरोधः' इति ॥

तव तु न प्रपञ्चस्येव जन्मतिरोधानज्ञानेषु परापेक्षेत्याह—

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ १० ॥**

आत्मानमिति ॥ हे भगवन् । **त्वमात्मानं** लोकानुग्रहार्थं ब्रह्मरूपेणोत्पिपादयिषितं स्वस्वरूपम् **आत्मना एव वेत्सि** जानासि । सर्वापि क्रिया कर्तव्यार्थज्ञानपूर्विकेति भावः । तथा **आत्मानम् आत्मना एव** । आत्मन्येवेत्यत्रापि संबध्यते । स्वस्मिन्नेव **सृजसि** । अधिष्ठानमपि स्वयमेवेत्यर्थः । ' स्वे महिम्नि प्रतिष्ठितम्' इति श्रुतेः ॥ **कृतिना** समर्थेन । इदं सर्वत्र संबध्यते । **आत्मना** स्वेनैव **आत्मन्येव प्रलीयसे** स्वस्मिन्नेव प्रलीनो भवसि । लीयतेर्दैवादिकात्कर्तरि लट् । 'प्रकृत्यादिभ्य उपसंख्यानम्' इति वार्तिकात्सर्वत्रात्मनेति तृतीया । न हि ते प्रपञ्चस्येव ज्ञानोत्पत्तिलयेषु परापेक्षेति फलितार्थः॥

**द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।**
**व्यक्तो व्यक्तेतरश्चासि प्राकाम्यं ते विभूतिषु ॥ ११ ॥**

द्रव इति ॥ त्वमित्यनुषज्यते । हे भगवन् । त्वं **द्रवः** सरित्समुद्रादिवद्रसात्मकोऽसि । [ **संघातकठिनः** ] संघातेन निबिडसंयोगेन कठिनो महीधरादिवत् । **स्थूलः** इन्द्रियग्रहणयोग्यो घटादिवत् । **सूक्ष्मः** अतीन्द्रियः परमाण्वादिवत् । **लघुः** उत्पतनयोग्यस्तूलादिवत् । **गुरुः** हेमाद्रिवदचलनीयः । **व्यक्तः** कार्यरूपोऽसि । **व्यक्तेतरः** कारणरूपः **च असि** । एवं **विभूतिषु** अणिमादिषु **ते** तव । प्रकामस्य भावः **प्राकाम्यं** यथाकामत्वम् ॥

**उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम् ।**
**कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥ १२ ॥**

उद्घात इति ॥ हे भगवन् । **यासां** गिरां वाचाम् **उद्घातः** उपक्रमः **प्रणवः** ओंकारात्मकः । 'ओङ्कारप्रणवौ समौ' इति । 'स्यादभ्यादानमुद्घात आरम्भः' इति चामरः । इदमुपसंहारस्याप्युपलक्षणम् ॥ ' ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वतः । दहत्येनः कृतं पूर्वं परस्ताच्च विशेषतः ॥' इति निरुक्तपरिशिष्टयोर्यास्कः ॥ नीयन्त एभिरर्थविशेषा इति न्यायाः स्वराः । उक्तं च—'स्वरविशेषादर्थप्रतिपत्तिः' । 'यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति ॥ यासां

---

१ गुरुर्लघुः'. २ उद्गीथः'.

गिरां **त्रिभिः न्यायैः** उदात्तानुदात्तस्वरितैः स्वरैः **उदीरणम्** उच्चारणम् । **यासां कर्म** । प्रतिपाद्यमित्यर्थः । **यज्ञः** ज्योतिष्टोमादिः । न तु चैत्यवन्दनादिरिति भावः । **फलं स्वर्गः** । कर्मद्वारेति शेषः । कर्मस्वर्गौ ब्रह्मापवर्गयोरप्युपलक्षणे । **त्वं तासां गिराम्** । वेदानामित्यर्थः । प्रभवत्यस्मादिति **प्रभवः** कारणम् । प्रणेता स्मर्ता वा मतभेदेन ॥

सांख्यमतेन स्तुवन्ति––

**त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।**
**तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥ १३ ॥**

त्वामिति ॥ हे भगवन् । **त्वां** पुरुषस्यार्थो भोगापवर्गरूपस्तदर्थं प्रवर्तत इति तां **पुरुषार्थप्रवर्तिनीं प्रकृतिं** त्रैगुण्यात्मकं मूलकारणम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे'। इति यादवः । **आमनन्ति** कथयन्ति ॥ 'म्ना अभ्यासे' इति धातोर्लट् । 'पाघ्राध्मास्थाम्ना'––इत्यादिना मनादेशः ॥ प्रकृतिपुरुषभेदाग्रहणात्प्रकृतिपुरुषभेदव्यपदेशः । **त्वामेव** तां प्रकृतिं साक्षित्वेन पश्यतीति **तद्दर्शिनम् उदासीनं** कूटस्थं **पुरुषं विदुः** विदन्ति ॥ 'विदो लटो वा' इति झेर्जुसादेशः । 'अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतिरत्र प्रमाणम् ॥

**त्वं पितॄणामपि पिता देवानामपि देवता[1] ।**
**परतोऽपि परश्चासि विधाता वेधसामपि ॥ १४ ॥**

त्वमिति ॥ हे भगवन् । **त्वं पितॄणाम्** अग्निष्वात्तादीनाम् **अपि पिता** । तेषामपि तर्पणीय इत्यर्थः । **देवानाम्** इन्द्रादीनाम् **अपि देवता** । तेषामपि यजनीयः इत्यर्थः । **परतोऽपि परश्चासि** । सर्वोत्तरोऽसीत्यर्थः ॥ 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महांस्ततः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥' इति सर्वोत्तरत्वाभिधानात् । **वेधसां** दक्षादीनाम् **अपि विधाता** स्रष्टा असि ॥

**त्वमेव हव्यं होता च भोज्यं[2] भोक्ता च शाश्वतः ।**
**वेद्यं[3] च वेदिता चासि ध्याता ध्येयं च यत्परम्[4] ॥ १५ ॥**

त्वमेवेति ॥ शश्वत्सिद्धः शाश्वतः । शैषिकोऽण्प्रत्ययः । यद्यपि 'कालाट्ठञ्' इति ठञपवादः अत एव सूत्रकारस्यापि प्रयोगः––'येषां च विरोधः शाश्वतिकः' इति । तथापि प्रयोगवशात्साधुरिति वामनः इति शाश्वतः प्रयुक्तः । **शाश्वतः त्वमेव** । हूयत इति **हव्यं** हविराज्यादिकम् । जुहोतीति **होता** । यजमानः **च असि** । **भोज्यम्** अभ्यवहार्यमन्नम् । 'भोज्यं भक्ष्ये' इति निपातनात्कुत्वाभावः । **भोक्ता** अन्नादः **च** असि । **वेद्यं** साक्षात्कार्यं वस्तु **च वेदिता** साक्षात्कर्ता **च** असि । **ध्याता** स्मर्ता च **यत्परं** वस्तु **ध्येयं** तत् **च** असि । साक्षात्कारसाधनभूतप्रत्ययविशेषप्रवाहो ध्यानम् ॥

**इति तेभ्यः स्तुतीः श्रुत्वा यथार्थाः[5] हृदयंगमाः ।**
**प्रसादाभिमुखो वेधाः[6] प्रत्युवाच दिवौकसः ॥ १६ ॥**

---

१ देवतम्. २ भोग्यं. ३ वेद्यं वेदयिता, वेद्यश्च वेदिता. ४ तत्प. ५ यथार्थ–याथार्थ्य–६ ब्रह्मा.

इतीति ॥ **वेधाः** ब्रह्मा इति **तेभ्यः** देवेभ्यः । 'आख्यातोपयोगे' इत्यपादानत्वात्पञ्चमी ॥ **यथार्थाः** सत्या अत एव हृदयं गच्छन्तीति **हृदयंगमाः** मनोहराः । 'खच्प्रकरणे गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । **स्तुतीः** स्तोत्राणि **श्रुत्वा प्रसादाभिमुखः** अनुग्रहप्रवणः सन् । **दिवौकसः** देवान् **प्रत्युवाच** ॥

अथ कविराह—

**पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।**
**प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥ १७ ॥**

पुराणस्येति ॥ द्रव्यगुणक्रियाजातिभेदेन चत्वारोऽवयवा यस्या इति **चतुष्टयी** चतुर्विधा ॥ 'संख्याया अवयवे तयप्' इति तयप् । 'टिड्ढाणञ्द्वयसच्'—इत्यादिना ङीप् ॥ **शब्दानां प्रवृत्तिः** वैखरीप्रमुखा वाग्वृत्तिः । उक्तं च—'वैखरी शब्दनिष्पत्तिर्मध्यमा श्रुतिगोचरा । द्योतितार्था च पश्यन्ती सूक्ष्मा वागनपायिनी ॥' इति । **पुराणस्य** पुरातनस्य । पृषोदरादित्वात्साधुः । **कवेः** कवयितुः **तस्य** ब्रह्मणः [ **चतुर्मुखसमीरिता** ] चतुर्भिर्मुखैः समीरिता सती । 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः । समाहारे चतुर्मुखीति स्यात् ॥ **चरितार्था** अन्वर्था **आसीत्** । चतुर्मुखोच्चारणाच्चातुर्विध्यं सफलमासीदित्यर्थः ॥

भगवानाह—

**स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।**
**युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥ १८ ॥**

स्वागतमिति ॥ हे **प्राज्यविक्रमाः** प्रभूतपराक्रमा देवाः । 'प्राज्यं भूरि प्रभूतं च' इति यादवः । **स्वान्** स्वकीयान् **अधीकारान्** नियोगान् ॥ 'उपसर्गस्य घञि'—इति वा दीर्घः ॥ **प्रभावैः** सामर्थ्यैः **अवलम्ब्य** आस्थाय । यथाधिकारं स्थित्वापीत्यर्थः । **युगपत्** समकालं **प्राप्तेभ्यः** । युगपत्प्राप्त्या महत्कार्यमनुमीयते इति भावः । **युगबाहुभ्यः** । दीर्घबाहुभ्य इत्यर्थः । आजानुबाहुत्वं भाग्यलक्षणम् । **वः** युष्मभ्यम् । बहुवचनस्य वस्नसौ' इति वसादेशः । 'कर्मणा यमभिप्रैति'-इत्यत्र कर्मपदेन क्रियाग्रहणात्संप्रदानत्वम् ॥ **स्वागतं** शोभनमागमनम् । काकुरत्रानुसंधेया ॥

**किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा ।**
**हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥ १९ ॥**

किमिति ॥ वत्साः इत्युत्तरश्लोकीयं ( श्लो० २८ ) संबोधनमत्राप्यनुषञ्जनीयम् । हे वत्साः पुत्रकाः । [ **हिमक्लिष्टप्रकाशानि** ] हिमेन नीहारेण क्लिष्टप्रकाशानि मन्दप्रभाणि **ज्योतींषि** नक्षत्राणि **इव** ॥ 'दीप्तितारहुताशेषु ज्योतिः' इति शाश्वतः । **वः** युष्माकं **मुखानि पुरा यथा** पूर्वमिव **आत्मीयां द्युतिं न बिभ्रति** । **इदं किम्** । किंनिबन्धनमित्यर्थः । किमिदमित्यनेन वाक्यार्थः परामृश्यते ॥

---

१ किमियां, किमिति. २ यथापुरं. ३ प्रभावाणि, प्रसादानि.

उक्तमेव प्रपञ्चयति सप्तभिः श्लोकैः—

**प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम्।**
**वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥ २० ॥**

प्रशमादिति ॥ **अर्चिषां** तेजसां **प्रशमात्** निर्वाणाद् **अनुद्गीर्णसुरायुधम्** अनुदितचित्रप्रभमित्यर्थः। **एतद् वृत्रस्य हन्तुः** इन्द्रस्य **कुलिशं** वज्रम्। कुण्ठिताः अश्रयो यस्य तत् **कुण्ठिताश्रि** कुण्ठितकोटि इव **लक्ष्यते** दृश्यते ॥

**किं चायमरिदुर्वारः पाणौ पाशः प्रचेतसः।**
**मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥ २१ ॥**

किं चेति ॥ **किं च अयम् अरिदुर्वारः** रिपुदुष्प्रधर्षः **प्रचेतसः** वरुणस्य। 'प्रचेता वरुणः पाशी' इत्यमरः ॥ **पाणौ पाशः** रज्जुरायुधविशेषः। **मन्त्रेण** गारुडेन **हतवीर्यस्य** प्रतिबद्धशक्तेः **फणिनः** सर्पस्य **दैन्यं** शोच्यत्वम् **आश्रितः** ॥ अत्र फणिनिष्ठदैन्यस्य पाशेऽसंभवाद्दैन्यमिव दैन्यमिति कल्पनादसंभवद्वस्तुसंबन्धो निदर्शनालंकारः ॥

**कुबेरस्य मनःशल्यं शंसतीव पराभवम्।**
**अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥ २२ ॥**

कुबेरस्येति ॥ अपविद्धा त्यक्ता गदा येन सः **अपविद्धगदः**। अत एव **भग्नशाखः द्रुमः इव** स्थितः **कुबेरस्य बाहुः मनःशल्यम्**। दुःखहेतुत्वान्मनसः शल्यप्रायमित्यर्थः। **पराभवम्**। शत्रुकृतमिति शेषः। **शंसति इव** कथयतीव। लक्षणयानुमापयतीत्यर्थः ॥ बाहौ मुख्यकथनस्यासंभवादिशब्दोऽप्यत एव ॥

**यमोऽपि विलिखन्भूमिं दण्डेनास्तमितत्विषा।**
**कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥ २३ ॥**

यम इति ॥ [ **अस्तमितत्विषा** ] अस्तं नाशमितः प्राप्तः ॥ अस्तमिति मकारान्तमव्ययम्। तस्य 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' इति समासः। अस्तमितास्त्विषो यस्य तेन निस्तेजस्केन **दण्डेन यमोऽपि भूमिं विलिखन् अमोघेऽपि**। प्रागिति भावः। **अस्मिन्** दण्डे [ **निर्वाणालातलाघवम्** ] निर्वाणालातस्य शान्तोल्मुकस्य। अलातं नाम भूलेखनशलाका तस्य यल्लाघवं क्लैब्यं तत् **कुरुते** ॥ 'अलातमुल्मुकं ज्ञेयम्' इति हलायुधः। 'निर्वाणोऽवाते' इति निपातनान्निष्ठानत्वम् ॥ अत्रापि लाघवमिव लाघवमिति कल्पनान्निदर्शनालंकारः ॥

**अमी च कथमादित्याः प्रतापक्षतिशीतलाः।**
**चित्रन्यस्ता इव गताः प्रकामालोकनीयताम् ॥ २४ ॥**

---

१ अनुद्गूर्ण, अनुगूर्ण. २ कुण्ठितश्रि. ३ अपि. ४ शूलं. ५ क्षय. ६ आयाताः. ७ दर्शिनः, दर्शनम्.

अमी इति ॥ [ **प्रतापक्षतिशीतलाः** ] प्रतापक्षत्या तेजसां क्षयेण शीतलाः **अमी आदित्याश्च** । द्वादशेति शेषः । **कथम्** । केन हेतुनेत्यर्थः । **चित्रन्यस्ताः** चित्रलिखिताः **इव** । [ **प्रकामालोकनीयताम्** ] प्रकाममत्यन्तमालोकनीयतां दृश्यतां **गताः** प्राप्ताः ॥

**पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।**
**अम्भसामोघसंरोधः प्रतीपगमनादिव ॥ २५ ॥**

पर्याकुलेति ॥ **मरुतां** वायूनाम् । सप्तसप्तानामिति शेषः । **पर्याकुलत्वात** स्खलितगतित्वाद्धेतोः [ **वेगभङ्गः** ] वेगस्य भङ्गः **अम्भसां** जलानां **प्रतीपगमनात्** उत्तानावरोहादित्यर्थः । [ **ओघसंरोधः** ] ओघस्य संरोधः प्रवाहप्रतिबन्धः **इव अनुमीयते** ॥

**आवर्जितजटामौलिविलम्बिशशिकोटयः ।**
**रुद्राणामपि मूर्धानः क्षतहुंकारशंसिनः ॥ २६ ॥**

आवर्जितेति ॥ [ **आवर्जितजटामौलिविलम्बिशशिकोटयः** ] आवर्जितेषु परिभवदुःखावनम्रेषु जटानां मौलिषु जटाजूटेषु विलम्बिन्यः स्रंसिन्यः शशिकोटयश्चन्द्ररेखा येषां ते तथोक्ताः । **रुद्राणामपि** । एकादशानामिति शेषः । **मूर्धानः** [ **क्षतहुंकारशंसिनः** ] क्षतं हुंकारं शंसन्तीति तथोक्ताः । हुंकारक्षत्यनुमापका इत्यर्थः । हुंकारशस्त्रा हि रुद्रा इति भावः ॥

**लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।**
**अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥ २७ ॥**

लब्धेति ॥ **प्रथमं** पूर्वं **लब्धप्रतिष्ठाः** लब्धास्थितयः । लब्धावकाशा इत्यन्यत्र । **यूयं बलवत्तरैः** पौरुषातिरेकात्प्रबलतरैः । निरवकाशैरित्यपरत्र । **परैः** शत्रुभिः । **उत्सर्गाः** सामान्यशास्त्राणि 'मा हिंस्यात्' इत्येवमादीनि । अपोद्यन्त एभिरिति **अपवादैः** 'गामालभेत' इत्यादिभिर्विशेषशास्त्रैः **इव किं कृतव्यावृत्तयः** कृतप्रतिष्ठाभङ्गाः । कृतविषयसंकोचरूपबाधा इत्यन्यत्र । 'विषयसंकोच एव बाधः' इत्याचार्याः । निषेधशास्त्रस्य वैदिकहिंसापरिहारेण लौकिकमात्रे व्यवस्थापनाद्विषयसंकोच इत्यलमतिगहनावगाहनेन ॥

**तद्ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।**
**मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥ २८ ॥**

तदिति ॥ **तत्** तस्मात्कारणात् । हे **वत्साः** पुत्रकाः । 'वत्सस्त्वर्भकपुत्राद्योर्वर्षे वत्सं तु वक्षसि' इति विश्वः । स्वयं पितामहत्वाद्ब्रह्मा इत्यामन्त्रयते ॥ संभूयागताः **समा-**

---

१ ताहंकार. २ न खलु स्थ बलोत्तरैः. ३ प्रार्थयध्वे. ४ भूतानाम्. २६–२७ मध्ये क्षेपकोऽयं दृश्यते–निशाकरोऽपि मलिनः सुप्तोत्थितमिवाननम् । कलाशेषेऽपि या लक्ष्मीर्न सा पूर्तेऽपि विद्यते ॥

गताः इतः मत्तः किं प्रार्थयध्वम् । किमिच्छतेत्यर्थः । ब्रूत । लोकरक्षणे यूयमेव कर्तार इत्याह—मयि लोकानां सृष्टिः रक्षा युष्मासु अवस्थिता हि । अतस्तदर्थमपि नास्ति मदपेक्षेत्यर्थः ॥

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास[1] वासवः[2] ॥२९ ॥

तत इति ॥ ततः भगवत्प्रश्नानन्तरं वासवः इन्द्रः गुरुं बृहस्पतिम् ॥ ' गुरुर्गीष्पतिपित्र्याचौ ' इत्यमरः । [ मन्दानिलोद्धूतकमलाकरशोभिना ] मन्दानिलोद्धूतो यः कमलाकरः स इव शोभत इति तेन तथोक्तेन [ नेत्रसहस्रेण ] नेत्राणां सहस्रेण नोदयामास प्रेरयामास । सहस्रग्रहणमास्थातिशयार्थम् । अनिमेषाणामपि प्रयत्नवशादक्षिस्पन्दो न विरुध्यते ॥

स द्विनेत्रं[3] हरेश्चक्षुः सहस्रनयनाधिकम्[4] ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ ३० ॥

स इति ॥ हरेः इन्द्रस्य । ' इन्द्रो दुश्च्यवनो हरिः ' इति हलायुधः । सहस्रान्नयनेभ्योऽधिकं सहस्रनयनाधिकम् । तदगोचरदर्शित्वादिति भावः । द्वे नेत्रे यस्य तद् द्विनेत्रम् । प्रसिद्धाच्चक्षुषोऽयं विशेष इत्यर्थः । चक्षुः चक्षुर्भूतः । चक्षुष्ट्वारोपस्य प्रकृतोपयोगात्परिणामालंकारः । स वाचस्पतिः ॥ कस्कादित्वादलुक्सत्वे ॥ षष्ठ्याः 'पतिपुत्र'—इत्यादिना सत्वमिति स्वामी तत्र छन्दोविषयत्वात् ॥ प्राञ्जलिः सन् । जलजासनं ब्रह्माणम् इदम् उवाच ॥

एवं यदात्थ भगवन्नामृष्टं नः परैः[5] पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो[6] ॥ ३१ ॥

एवमिति । हे भगवन् षड्गुणैश्वर्यसंपन्न । यदात्थ 'कृतव्यावृत्तयः परैः' ( २।२७ ) इति यद्ब्रवीषि ॥ 'ब्रुवः पञ्चानाम्'—इत्यादिनाहादेशः । 'वर्तमानसामीप्ये वर्तमानवद्वा इति वर्तमानप्रयोगः । वामनस्तु भ्रान्तोऽयं प्रयोग इत्याह । 'आहेति भूते णलन्तभ्रमवर्त' इति । आहेत्युपलक्षणम् ॥ तद् एवं सत्यम् । नः अस्माकं पदम् अधिकारः परैः शत्रुभिः आमृष्टम् आक्षिप्तम् । हे प्रभो प्रत्येकं प्रतिपुरुषं विनियुक्तात्मा प्रवेशितस्वरूपः । सर्वान्तर्यामीत्यर्थः । कथं न ज्ञास्यसि न वेत्सि । वर्तमानेऽपि वचनभङ्ग्या भविष्यन्निर्देशः प्रसिद्धः ॥ ' अपह्नवे ज्ञः ' । अकर्मकाच्च ' इत्यात्मनेपदविकल्पः ॥

उक्तमेव प्रपञ्चयति—

भवल्लब्धवरोदीर्णस्[7]तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३२ ॥

---

१ चोदयामास; प्रेरयामास. २ वृत्रहा. ३ द्विनेत्रः, विनेतृ. ४ दशचक्षुःशताधिकम्. ५ यथा. ६ ज्ञास्याति प्रभुः । ७ त्वया दत्त, भवद्दत्त.

भवदिति ॥ [ भवल्लब्धवरोदीर्णः ] भवतस्त्वत्तो लब्धेन वरेणोदीर्ण उद्धतः । तारकः इत्याख्या नामधेयं यस्य स तारकाख्यः । महानसुरो महासुरः । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः । धूमकेतुः उत्पातविशेषः इव लोकानाम् उपप्लवाय उपद्रवाय उत्थितः उत्पन्नः ॥

पुरे तावन्तमेवास्य तनोति[1] रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते[2] ॥ ३३ ॥

पुर इति ॥ अस्य तारकस्य पुरे रविः सूर्यः तावन्तं तावन्मात्रम् एव आतपं तनोति यावन्मात्रेण यावतैव । यावती मात्रा मितिर्यस्य यावन्मात्रं तेन वा । अल्पपरिमाणेनेत्यर्थः । 'मात्रा परिच्छदे । अल्पे च परिमाणे स्यान्मात्रं कार्त्स्न्येऽवधारणे ॥' इत्यमरः । [ दीर्घिकाकमलोन्मेषः ] दीर्घिकासु क्रीडावापीषु कमलानामुन्मेषो विकाशः साध्यते निष्पाद्यते । कठोरकिरणोऽपि मन्दोष्णः सन्नेव तद्भीत्या पुरे प्रकाशते इत्यभिप्रायः ॥

सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते केवलां लेखां हरचूडामणीकृताम् ॥ ३४ ॥

सर्वाभिरिति ॥ चन्द्रः तं तारकं सर्वदा । कृष्णपक्षेऽपीत्यर्थः । सर्वाभिः कलाभिः निषेवते । 'कला तु षोडशो भागः' इत्यमरः ॥ केवलां हरचूडामणीकृतां शिवशिरोमणीकृतां लेखां न आदत्ते न गृह्णाति ॥

व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्[3] ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥ ३५ ॥

व्यावृत्तेति ॥ वायुः [ कुसुमस्तेयसाध्वसात् ] स्तेनस्य भावः कर्म वा स्तेयं चौर्यम् ॥ 'स्तेनाद्यन्नलोपश्च' इति यत्प्रत्ययो नलोपश्च ॥ कुसुमानां स्तेयं तस्मात्स्तेयाभियोगाद्दण्डाद्वा साध्वसं भयं तस्माद्धेतोः उद्याने व्यावृत्तगतिः । निवृत्तोद्यानसंचारः सन्नित्यर्थः ॥ सापेक्षत्वेऽपि गमकत्वात्समासः ॥ तत्पार्श्वे तत्समीपे [ तालवृन्तानिलाधिकम् ] तालस्य वृन्तैरुद्धूयते तालस्येव वृन्तमस्येति वा तालवृन्तं तस्यानिलाद्व्यजनसंचारपवनादधिकं यथा तथा न वाति ॥ 'व्यजनं तालवृन्तकम्' इत्यमरः ॥

पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥ ३६ ॥

पर्यायेति ॥ ऋतवः षड् वसन्तादयः पर्यायसेवां क्रमसेवाम् उत्सृज्य [ पुष्पसंभारतत्पराः ] पुष्पाणां संभारे संग्रहे तत्पराः । आसक्ताः सन्तः इत्यर्थः । 'तत्परे प्रसितासक्तौ' इत्यमरः । [ उद्यानपालसामान्यं ] उद्यानपालैरुद्यानाधिकृतैः सामान्यं साधारणं यथा भवति तथा तं तारकम् उपासते सेवन्ते । शीतोष्णादिदोषप्रकाशनं तु दूरापास्तमित्यर्थः ॥

---

१ करोति, आत०. २ सिध्यति. ३ साह.

तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरा निष्पत्तेः प्रतीक्षते ॥ ३७ ॥

तस्येति ॥ **सरितां पतिः** समुद्रः **तस्य** तारकस्य [ **उपायनयोग्यानि** ] उपायनानां प्राभृतानां योग्यानि । 'प्राभृतं तु प्रदेशनम् । उपायनम् ।' इत्यमरः । **रत्नानि अम्भसाम् अन्तः आनिष्पत्तेः** परिपाकपर्यन्तम् ॥ विकल्पादसमासः । **कथमपि** महता यत्नेन **प्रतीक्षते** । कदा वा परिपच्येरन्नित्येकाग्रेण पालयतीत्यर्थः ॥

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥ ३८ ॥

ज्वलदिति ॥ किं **च** इति चार्थः । [ **ज्वलन्मणिशिखाः** ] ज्वलन्त्यो मणीनां शिरोरत्नानां शिखा ज्वाला येषां ते **वासुकिप्रमुखाः भुजङ्गाः** सर्पाः । सिद्धाश्च ध्वन्यन्ते ॥ 'भुजङ्गः सिद्धसर्पयोः' इत्यमरः ॥ **निशि स्थिरप्रदीपताम्** अनिर्वाणदीपत्वम् **एत्य एनं** तारकं **पर्युपासते** परिवृत्य सेवन्ते ॥

तत्कृतानुग्रहापेक्षी तं[2] मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि कल्पद्रुमविभूषणैः[3] ॥ ३९ ॥

तत्कृतेति ॥ **इन्द्रः अपि** [ **तत्कृतानुग्रहापेक्षी** ] तेन तारकेण कृतं तत्कृतमनुग्रहं प्रसादमपेक्षते इति तथोक्तः सन् । **मुहुः दूतहारितैः** दूतप्रापितैः [ **कल्पद्रुमविभूषणैः** ] कल्पद्रुमाणां विभूषणैः । तत्प्रसूनैरित्यर्थः । **तं** तारकम् **अनुकूलयति** अनुकूलं करोति ॥

इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण[4] नोपकारेण दुर्जनः ॥ ४० ॥

इत्थमिति ॥ **इत्थम्** उक्तप्रकारेण रविशशिपवनोदधिभुजङ्गसुरेन्द्रैः **आराध्यमानः अपि भुवनत्रयं क्लिश्नाति** पीडयति । तथा हि । **दुर्जनः प्रत्यपकारेण** प्रतीकारेणैव **शाम्येत्** शान्तो भवेत् । **उपकारेण तु न** शाम्येत् । प्रत्युत प्रकुप्यतीति भावः ॥

तेनामरवधूहस्तैः[5] सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां[6] क्रियन्ते नन्दनद्रुमाः ॥ ४१ ॥

तेनेति ॥ **तेन** तारकेण **अमरवधूहस्तैः** । सुकुमारैरिति भावः । तैरपि [ **सदयालूनपल्लवाः** ] सदयमालूना अवतंसार्थं छिन्ना पल्लवा येषां ते **नन्दनद्रुमाः** [ **छेदपातानाम्** ] छेदाश्च पाताश्च छेदपातास्तेषाम् । अभिजानन्तीति **अभिज्ञाः** । कृद्योगात्कर्मणि षष्ठी । **क्रियन्ते** ॥

वीज्यते स हि संसुप्तः[7] श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां बाष्पशीकरवर्षिभिः ॥ ४२ ॥

---

१ प्रहिताः. २ मत्यर्हं. ३ स्वर्गभु०. ४ प्रत्युपकारेण. ५ हस्तस०. ६ छिन्नपा. ७ संतप्तः

वीज्यत इति ॥ हि यस्मात्कारणात् स तारकः संसुप्तः सन् । [ श्वाससाधारणानिलैः ] श्वाससाधारणो निःश्वाससमानोऽनिलो येषां तैः । ततोऽप्याधिक्ये निद्राभङ्गभयादिति भावः । बाष्पशीकरवर्षिभिः । तासां स्त्रीणां रोदनस्याथमवसर इति भावः । सुरबन्दीनां सुरप्रग्रहस्त्रीणां संबन्धिभिः । ' प्रग्रहोपग्रहौ बन्द्याम् ' इत्यमरः । चामरैः वीज्यते ॥

उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥ ४३ ॥

उत्पाट्येति ॥ तेन तारकेण हरितां सूर्याश्वानाम् ॥ ' हरित्सूर्ये च सूर्याश्वे वर्णे च हरिते दिशि । ' इति विश्वः । खुरैः शफैः क्षुण्णानि चूर्णितानि । एतेन तेषामत्यौन्नत्यं सूचितम् । मेरुशृङ्गाणि उत्पाट्य स्वेषु वेश्मसु । वेश्मास्विति बहुवचनेनास्य भुवनत्रयनिवासः सूचितः । [ आक्रीडपर्वताः ] आक्रीडन्ते एष्विस्याक्रीडाः । ते च ते पर्वताः कल्पिताः कृताः ॥

मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहसस्यानां तद्वाप्यो धाम सांप्रतम् ॥ ४४ ॥

मन्दाकिन्या इति ॥ सांप्रतं संप्रति मन्दाकिन्याः भागीरथ्याः [ दिग्वारणमदाविलं ] दिग्वारणानां दिग्गजानां मदैराविलं कलुषं पयः जलमेव शिष्यत इति शेषं शिष्टम् । कर्मणि घञ् प्रत्ययः । ' त्रिष्वन्यत्रोपयुज्यते ' इति नपुंसकत्वम् । तर्हि कनककमलानि क्व गतानीत्याह—हेमेति । [ हेमाम्भोरुहसस्यानां ] हेमाम्भोरुहाण्येव सस्यानि तेषां तु तस्य वाप्यः तद्वाप्यः एव धाम स्थानम् । सर्वाण्यप्युत्पाट्य स्वदीर्घिकास्वेव प्रतिरोपितवानित्यर्थः ॥

भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते विमानानां तदापातभयात्पथि ॥ ४५ ॥

भुवनेति ॥ [ तदापातभयात् ] तस्य तारकस्यापातात्समापतेर्भयात् विमानानां पथि खिलीभूते अप्रहतीभूते सति ॥ ' द्वे खिलाप्रहते समे ' इत्यमरः ॥ स्वर्गिभिः देवैः [ भुवनालोकनप्रीतिः ] भुवनानामालोकने प्रीति नानुभूयते ॥

यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥ ४६ ॥

यज्वभिरिति ॥ यज्वभिः विधिवदिष्टवद्भिः । ' यज्वा तु विधिनेष्टवान् ' इत्यमरः । ' सुयजोर्ङ्वनिप् ' इति ङ्वनिप्प्रत्ययः । विततेषु अध्वरेषु यज्ञेषु संभृतं दत्तं हव्यं हविः मायी मायावी । व्रीह्यादित्वादिनिप्रत्ययः । स तारकः नः अस्माकं मिषतां पश्यताम् । पश्यत्सु सत्स्वित्यर्थः । ' षष्ठी चानादरे ' इति षष्ठी । जातवेदाः वह्निरेव मुखं तस्मात् जातवेदोमुखात् आच्छिनत्ति । आक्षिप्य गृह्णातीत्यर्थः ॥

---

१ शम्बु. २ कृते. ३ दाघात, तदपाय. ४ पिबताम्.

उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥ ४७ ॥

उच्चैरिति ॥ किं च इति चार्थः । तेन तारकेण उच्चैः उन्नतः उच्चैःश्रवाः नाम । हयो रत्नमिव हयरत्नम् अश्वश्रेष्ठः । 'रत्नं श्रेष्ठे मणावपि' इति विश्वः । अस्य शुभ्रत्वादुत्प्रेक्षते—देहबद्धं बद्धदेहम् । मूर्तिमदित्यर्थः ॥ आहिताग्न्यादित्वान्निष्ठायाः परनिपातः। चिरकालार्जितम् इन्द्रस्य यशः इव अहारि अपहृतम् ॥

तर्हि सामाद्युपायास्तत्र कथं न प्रयुक्ता इत्यत्राह—

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सांनिपातिके ॥ ४८ ॥

तस्मिन्निति ॥ क्रूरे घातुके । 'नृशंसो घातुकः क्रूरः' इत्यमरः । तस्मिन् असुरे नः अस्माकं सर्वे उपायाः संनिपातदोषत्रयस्य प्रकोपजे सांनिपातिके विकारे ज्वरादौ ॥ 'संनिपाताच्च' इति वक्तव्याठ्ठक् ॥ वीर्यवन्ति सारवन्ति औषधानि इव प्रतिहतक्रियाः विफलप्रयोगा भवन्ति ॥

तदेव प्रतिहतक्रियत्वमाह—

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ४९ ॥

जयाशेति ॥ [ च ] किं च इति चार्थः । नूनमनेन हरिचक्रेण वयं जेष्याम इति यत्र हरिचक्रे अस्माकं जयाशा विजयाशंसा । आसीदिति शेषः । [ प्रतिघातोत्थितार्चिषा ] प्रतिघातेन प्रतिहत्योत्थितार्चिषोद्गततेजसा तेन हरिचक्रेण विष्णोः सुदर्शनेन अस्य तारकस्य कण्ठे निष्कम् उरोभूषणम् अर्पितमिव इत्युत्प्रेक्षा । स्वयमेव निष्कमिव स्थितमित्यर्थः । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं तदपि नष्टशक्ति जातमिति भावः ॥ 'साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले । दीनारेऽपि च निष्कोऽस्त्री' इत्यमरः ॥

तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥ ५० ॥

तदीया इति ॥ अद्य संप्रति [ निर्जितैरावताः ] निर्जित ऐरावतो यैस्ते तथोक्ताः । तस्य तारकस्येमे तदीयाः गजाः पुष्करावर्तकाश्च नाम आदयो येषां तेषु [ पुष्करावर्तकादिषु ] तोयदेषु मेघेषु तटाघातं वप्रक्रीडाम् अभ्यस्यन्ति ॥

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ५१ ॥

---

१ वन्ध. २ द्रुता. ३ निष्क इवार्पितः. ४ तटाघातान्, तडाघातं [ तडिति निपातः तडिति शब्दपूर्वमाघातम् ]. ५ स्रष्टं.

तदिति ॥ **तत्** तस्मात्कारणात् । हे **विभो** स्वामिन । मोक्तुं भवं त्यक्तुमिच्छवः **मुमुक्षवः** विरक्ताः **भवस्य** संसारस्य **शान्तये** निवृत्तये [ **कर्मबन्धच्छिदं** ] कर्मैव बन्धस्तं छिनत्तीति कर्मबन्धच्छित्तं **धर्मम् इव** । आत्मज्ञानहेतुभूतमिति शेषः । 'तमेव विदित्वातिमृत्युमेति ' इति ज्ञानादेव मुक्तिः । **तस्य** तारकस्य **शान्तये** नाशाय । सेनां नयतीति सेनानीश्चमूपतिः । ' सत्सूद्विष '—इत्यादिना क्विप् ॥ तं **सेनान्यं** कंचित् **स्रष्टुम् इच्छामः** ॥ वयमिति शेषः ॥

सेनानीसृष्टेः फलमाह—

**गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।**
**प्रत्यानेष्यति शत्रुभ्यो बन्दीमिव जयश्रियम् ॥ ५२ ॥**

गोप्तारमिति ॥ **सुरसैन्यानां** देवतासेनानां **गोप्तारं** रक्षितारं **यं** सेनान्यं **पुरस्कृत्य** पुरोधाय ॥ ' पुरोऽव्ययम् ' इति गतित्वात् ' नमस्पुरसोर्गत्योः ' इति सकारः । गां पृथ्वीं त्रायन्ते इति गोत्रास्तान्भिनत्तीति **गोत्रभित्** इन्द्रः **जयश्रियं बन्दीमिव** बन्दीकृतां स्त्रियमिव **शत्रुभ्यः** सकाशात् **प्रत्यानेष्यति** प्रत्याहरिष्यति । तं स्रष्टुमिति पूर्वेण संबन्धः ॥

**वचस्यवसिते तस्मिन्ससर्ज गिरमात्मभूः ।**
**गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ५३ ॥**

वचसीति ॥ **तस्मिन्** बार्हस्पत्ये **वचसि अवसिते** परिसमाप्ते सति **आत्मभूः** ब्रह्मा **गिरं** वाचं **ससर्ज** जगादेत्यर्थः । **सा** गीः **सौभाग्येन** मनोहरत्वेन । हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ' इत्युभयपदवृद्धिः । [ **गर्जितानन्तरां** ] गर्जिताद्गर्जितस्य वानन्तरं प्रवृत्तां **वृष्टिं जिगाय** जितवती । गर्जितपरत्वाद्वृष्टेरिव तद्विज्ञापनफलत्वाद्गिरः सुभगत्वमिति भावः ॥

**संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।**
**न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ५४ ॥**

संपत्स्यत इति ॥ **अयं वः** युष्माकं **कामः** मनोरथः सेनानीरूपः **संपत्स्यते** सेत्स्यति । **कश्चित्** कियानपि **कालः प्रतीक्ष्यताम्** । **तु** किं तु **अस्य** सेनान्यः **सिद्धौ** विषये **आत्मना** स्वयं [ **सर्गव्यापारं** ] सर्गः सृष्टिरेव व्यापारस्तं **न यास्यामि** । नाहं स्रक्ष्यामीत्यर्थः ॥

कुत इत्याशङ्क्याह—

**इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।**
**विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥ ५५ ॥**

इत इति ॥ **इतः** मत्त एव **प्राप्तश्रीः** लब्धोदयः **स दैत्यः** तारकासुरः **इतः**

---

१ सुर०. २ उपरते. ३ तस्य. ४ या. ५ न कामो वः कालोयं तु ( यत्तु ) प्र०. ६ सिद्धये.

मत एव क्षयं नाशं न अर्हति । तथा हि—अन्यो वृक्षस्तावदास्ताम् । विषस्य वृक्षः विषवृक्षः अपि संवर्ध्य कुतश्चित्कारणात्सम्यग्वर्धयित्वा स्वयं छेत्तुम् असांप्रतम् अनर्हः । असांप्रतमित्यनेन निपातेनाभिहितत्वाद् वृक्ष इति द्वितीयान्तो न भवति अनभिहिते कर्मणि द्वितीयाभिधानात् । यथाह वामनः—'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः । परिगणनस्य प्रायिकत्वात्' इति ॥

वृतं[1] तेनेदमेव प्राक्मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं[2] लोकानलं दग्धुं हि तत्तपः ॥ ५६ ॥

वृतमिति ॥ प्राक् पूर्वं तेन असुरेण इदमेव देवैरवध्यत्वमेव वृतं प्रार्थितम् । मया च अस्मै तारकाय प्रतिश्रुतं प्रतिज्ञातम् ॥ 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' इति संप्रदानत्वाच्चतुर्थी ॥ कर्तव्यं चैतदित्याह—लोकान्दग्धुम् अलं शक्तम् । 'पर्याप्तिवचनेष्वलमर्थेषु' इति तुमुन्प्रत्ययः । तस्य तपः तत्तपः वरेण वरदानेन शमितं हि । मयेति शेषः ॥

संयुगे सांयुगीनं[3] तमुद्यन्तं[4] प्रसहेत कः ।
अंशादृते निषिक्तस्य[5] नीललोहितरेतसः ॥ ५७ ॥

संयुग इति ॥ संयुगे युद्धे उद्यन्तं व्याप्रियमाणम् । संयुगे साधुं सांयुगीनम् । 'प्रतिजनादिभ्यः खञ्' इति खञ्प्रत्ययः ॥ तं तारकं निषिक्तस्य क्वचित्क्षेत्रे क्षरितस्य । [ नीललोहितरेतसः ] 'नीलः कण्ठे लोहितश्च केशेष्विति नीललोहित इति पुराणम् ।' इति स्वामी । तस्य नीललोहितस्य धूर्जटे रेतसः शुक्रस्य अंशाद् ऋते अंशं विना अन्यः कः प्रसहेत अभिभवेत् ॥ 'प्रसहनमभिभवः' इति वृत्तिकारः ॥

कथमसावीदृक्शक्तिरित्याह—

स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम्[6] ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ५८ ॥

स इति ॥ स देवः नीललोहितः [ तमःपारे ] तमसः पारे परतः व्यवस्थितं तमोगुणातीतं परं ज्योतिः परमात्मा हि । अत एव मया परिच्छिन्नप्रभावर्द्धिः अवगाढमहिमातिशयः न भवति तथा विष्णुना च न । अतस्तस्यासाध्यं नास्तीत्यर्थः ॥

संप्रति तदंशोत्पत्तावुपायं दर्शयति—

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥ ५९ ॥

उमेति ॥ ते कार्यार्थिनः यूयं संयमस्तिमितं समाधिनिश्चलं शंभोः मनः उमारूपेण उमासौन्दर्येण । 'रूपं स्वभावे सौन्दर्ये नाणके पशुशब्दयोः । अन्यावृत्तौ

१ वृतस्ते...वाहं. २ अशमितं; शमितुम्. ३ सम्मुखीनं. ४ उद्यतं, उन्नदं. ५ निषिक्तात् तु. ६ मतिष्ठितम्.

नाटकादावाकारश्लोकयोरपि ॥' इति विश्वः ॥ **अयस्कान्तेन** मणिविशेषेण । 'कस्कादिषु च' इति सकारः । **लोहवत्** अयोधातुमिव । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययो मृग्यः । **आक्रष्टुम्** आहर्तुं **यतध्वम्** उद्युक्ता भवत ॥

**उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।**
**सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥ ६० ॥**

उभे इति ॥ **उभयोः** शंभोर्मम च **आहितं** निषिक्तं **बीजं** तेजः **वोढुं सा वा** उमा **शंभोः** अष्टमूर्तेः तस्य इयं **तदीया जलमयी मूर्तिः वा मम । उभे एव क्षमे** । न तृतीयेत्यर्थः ॥ वाशब्दो द्वन्द्वार्थे, न त्वन्यार्थे । एतदेवोदाहृत्येत्थमेव व्याख्यातं गणव्याख्याने ॥ अत्र दीपकालंकारः प्राकरणिकयोरुमामहेश्वरयोरप्राकरणिकयोर्ब्रह्मजलमूर्त्योश्चौपम्यस्य गम्यत्वात् । यथाह भोजराजः—'प्रस्तुतानामप्रस्तुतानां चौपम्यस्य गम्यत्वे दीपकम्' इति ॥ न चेयं तुल्ययोगिता तस्याः केवलप्रस्तुतविषयत्वेन केवलाप्रस्तुतविषयत्वेन चोत्थानादिति ॥

**तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।**
**मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ६१ ॥**

तस्येति ॥ **तस्य शितिकण्ठस्य** अष्टमूर्तेः **आत्मा** । पुत्र इत्यर्थः ॥ 'आत्मा वै पुत्रनामासि ' इति श्रुतेः । **वः** युष्माकं सेनापतेर्भावः **सैनापत्यम्** ॥ ' पत्यन्त-पुरोहितादिभ्यो यक्' इति यक्प्रत्ययः । **उपेत्य** प्राप्य **वीर्यविभूतिभिः** शौर्यसंपत्तिभिः **सुरबन्दीनां वेणीः मोक्ष्यते** विस्रंसयिष्यति ॥ तारकासुरं हनिष्यतीति भावः ॥

**इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।**
**मनस्याहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥ ६२ ॥**

इतीति ॥ [ **विश्वयोनिः** ] विश्वस्य योनिः कारणम् ॥ ' योनिः स्त्रीणां भगस्थाने कारणे ताम्रिके पणे । ' इति वैजयन्ती । **विबुधान्** सुरान् **इति व्याहृत्य** अभिधाय **तिरोदधे** अन्तर्हितवान् । **ते देवाः अपि मनसि** [ **आहितकर्तव्याः** ] आहितं कर्तव्यं यैस्ते तथोक्ताः सन्तः **दिवं** स्वर्गं **ययुः** प्रापुः ॥

**तत्र निश्चित्य कन्दर्पमगमत्पाकशासनः ।**
**मनसा कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥ ६३ ॥**

तत्रेति ॥ [ **पाकशासनः** ] पाको नाम कश्चिदसुरस्तस्य शासन इन्द्रः **तत्र** हरचित्ताकर्षणकृत्ये **कन्दर्पं निश्चित्य** । साधकत्वेनेति शेषः ॥ **कार्यसंसिद्धौ** [ **त्वराद्विगुणरंहसा** ] त्वरयौत्सुक्येन द्वौ गुणौ यस्य तद्विगुणं द्विरावृत्तं रंहो वेगो यस्य तेन तथोक्तेन । ' गुणस्तु वृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु ' इति वैजयन्ती ॥ **मनसा अगमत्** । सस्मारेत्यर्थः। गमेर्लुङ् । लृदित्वाच्च्लेरङादेशः ॥

१ सोढुम्. २ वीर्यं, ३ सेनापत्यम्. ४ वेणिबन्धानदूषितान्. ५ प्रतिययुर्दिवम्. ६ कर्म-कार्य-संसिद्धि-; कार्यसंसिद्ध्यै.

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ६४ ॥

अथेति ॥ अथ स्मरणानन्तरम् । सः स्मृत इत्यर्थः । पुष्पं धनुर्यस्य स पुष्पधन्वा कामः । 'वा संज्ञायाम्' इत्यनङ् । [ललितयोषिद्भ्रूलताचारुशृङ्गं] 'ललितं त्रिषु सुन्दरम्' इत्यमरः । ललितायाः सुन्दर्या योषितो भ्रुवौ लते इव चारुणी शृङ्गे कोटी यस्य तत्तथोक्तं चापम् । [रतिवलयपदाङ्के] रतिः स्मरप्रिया । 'रतिः स्मरप्रिया' इत्यमरः । तस्या वलयपदानि कङ्कणस्थानान्यङ्कश्चिह्नं यस्य तथोक्ते कण्ठे आसज्य लगयित्वा ॥ चापकण्ठविशेषणाभ्यां शृङ्गारैकनिधेस्त्रिभुवनैकवीरस्य शृङ्गारवीरोपकरणेषु तुल्यरसत्वं व्यज्यते । [सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः] सहचरस्य सख्युर्मधोर्वसन्तस्य हस्ते न्यस्तं चूताङ्कुरमेवास्त्रं यस्य स तथोक्तः । प्राञ्जलिः सन् । शतमखम् इन्द्रं उपतस्थे संगतवान् ॥ संगतिकरणार्थादात्मनेपदम् ॥ अत्र स्वभावोक्तिः—'स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम् ।' इति ॥ मालिनीवृत्तमेतत्—'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति तल्लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये ब्रह्मसाक्षात्कारो नाम द्वितीयः सर्गः ॥

---

## तृतीयः सर्गः ।

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत्पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥ १ ॥

तस्मिन्निति ॥ मघोनः इन्द्रस्य अक्ष्णां सहस्रं त्रिरावृत्ता दश परिमाणमेषामिति त्रिदशान् देवान् । 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति बहुव्रीहिः । 'बहुव्रीहौ संख्येये'—इति डच्प्रत्ययः । उक्तार्थत्वात्सुचो निवृत्तिः । विहाय त्यक्त्वा तस्मिन् कामे युगपत् पपात । सहस्रेणाक्षिभिरद्राक्षीदित्यादरातिशयोक्तिः । ननु सुचिरपरिचितानेकसुरपरित्यागेन भगवतो महेन्द्रस्य कथमकाण्डे तस्मिन्नेकस्मिन्पक्षपात इत्याशङ्क्यार्थान्तरं न्यस्यति—प्रायः भूम्ना प्रभूणाम् आश्रितेषु सेवकेषु विषये गौरवं आदरः प्रयोजनापेक्षितया कार्यार्थित्वेन हेतुना चलं चञ्चलम् । फलतन्त्राः प्रभवो न तु गुणतन्त्रा इति भावः ॥

---

१ सुललित. २ शार्ङ्गम्. ३ आसाद्य. ४ पुष्पकेतुः. ५ नम्राभिगमनः. ६ तेऽपि.

**स वासवेनासनसंनिकृष्टमितो निषीदेति विसृष्टभूमिः।**
**भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥२॥**

स इति ॥ **स** कामः **वासवेन** इन्द्रेण आसनस्य सिंहासनस्य संनिकृष्टं संनिहितम् **आसनसंनिकृष्टं** यथा तथा ॥ शेषषष्ठ्यायं समासः कृद्योगलक्षणया तु न । 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' इति षष्ठीनिषेधात् ॥ **इतः निषीद** इहोपविश **इति विसृष्टभूमिः** दत्तावकाशः सन् । **भर्तुः** स्वामिनः **प्रसादम्** अनुग्रहं **मूर्ध्ना प्रतिनन्द्य** संभाव्य **मिथः** रहसि ॥ 'मिथोऽन्योन्यं रहस्यपि ।' इत्यमरः ॥ **एनम्** इन्द्रम् **एवं** वक्ष्यमाणप्रकारेण **वक्तुं प्राक्रमत** उपक्रान्तवान् ॥ 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ॥

**आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति।**
**अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ ३ ॥**

आज्ञापयेति ॥ हे **पुंसां ज्ञातविशेष** ज्ञातसार । ज्ञातपुंविशेषेत्यर्थः । सापेक्षत्वेऽपि गमकत्वात्समासः ॥ **आज्ञापय** । तदिति शेषः । उत्तरवाक्ये यच्छब्दप्रयोगान्न पूर्ववाक्ये तच्छब्दप्रयोगनिर्बन्धः ॥ किं तदित्याह—**लोकेषु ते** तव **यत् करणीयं** कर्तव्यम् **अस्ति** । [**संस्मरणप्रवृत्तं**] संस्मरणेन प्रवृत्तं उत्पन्नं **ते** तव **अनुग्रहं** प्रसादम् **आज्ञया** नियोगेन **संवर्धितं** वृद्धिं गमितम् **इच्छामि** । संस्मरणकृतमनुग्रहं केनचिन्नियोगेन वर्धय । क्वचित्कर्मणि नियुङ्क्ष्वेत्यर्थः । अन्यथा मे नास्ति परितोष इति भावः ॥ तुमुन्नन्तपाठे णिजर्थे यत्नः कार्यः ॥

न च मे किंचिदसाध्यमस्तीत्याह—

**केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः।**
**यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥४॥**

केनेति ॥ **पदकाङ्क्षिणा** राज्यकामेन **केन** पुंसा **नितान्तदीर्घैः** अतिप्रभूतैः **तपोभिः ते** तव **अभ्यसूया** ईर्ष्या **जनिता** । ब्रूहीति शेषः । किमर्थम् । **यावत्** यतः स भवद्वैरी **आहितसायकस्य** संहितबाणस्य **अस्य मत्कार्मुकस्य** निदेशे वर्तेत इति **निदेशवर्ती** आज्ञावशः **भवति** । अविलम्बेनैव भविष्यतीत्यर्थः । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ॥

संप्रति चतुर्वर्गे मोक्षमधिकृत्याह—

**असंमतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः।**
**बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः ॥ ५ ॥**

असंमत इति ॥ **तव असंमतः कः** [**पुनर्भवक्लेशभयात्**] पुनर्भवः पुनरुत्पत्तिः । संसार इति यावत् । तत्र ये क्लेशा जन्मजरामरणादयस्तेभ्यो भयात् **मुक्तिमार्गं प्रपन्नः**

१ विसृष्ट. २ प्रतिवन्द्य-पद्य. ३ तैकप० ४ संवर्धितुम्. ५ फल. ६ तावत्. ७ कामिनीनां ८ आरोपित. ९ ललितैः. १० विलासैः

तं वद । यतः सोऽपि [ आरेचितभ्रूचतुरैः ] आरेचिताभिरेकैकशो विवर्तिताभिर्भ्रूभिश्चतुरैः सुन्दरीणां कटाक्षैः बद्धः चिरं तिष्ठतु । आरेचितलक्षणं तु–'स्याद्भ्रुवोर्ललिताक्षेपादेकस्या एव रेचितम् । तयोर्मूलसमुत्क्षेपं कौटिल्याद् भ्रूकुटिं विदुः ॥' इति ॥

धर्मार्थावधिकृत्याह—

**अध्यापितस्योशनसापि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते।**
**कस्यार्थधर्मौ वद पीडयामि सिन्धोस्तटावोघ इव प्रवृद्धः ॥६ ॥**

अध्यापितस्येति ॥ उशनसा शुक्रेण नीतिं नीतिशास्त्रम् अध्यापितस्य अपि । अपिशब्दाच्छुकशिष्याणामप्रधृष्यत्वं मन्यते । 'गतिबुद्धि—' इत्यादिना द्विकर्मकादिङ्धातोर्ण्यन्तात्प्रधाने कर्मणि क्तः । 'अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः' इति वचनात् । ते द्विषः तव शत्रोः कस्य अर्थधर्मौ [ प्रयुक्तरागप्रणिधिः ] प्रयुक्तः प्रहितो रागो विषयाभिलाष एव प्रणिधिर्दूतो येन सोऽहम् । 'प्रणिधिः प्रार्थने चरे' इति यादवः । प्रवृद्धः ओघः प्रवाहः सिन्धोः नद्याः तटौ इव पीडयामि वद ॥

काममधिकृत्याह—

**कामैकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।**
**नितम्बिनीमिच्छसि मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम् ॥७॥**

कामिति ॥ [ एकपत्नीव्रतदुःखशीलां ] एकः पतिर्यस्याः सैकपत्नी पतिव्रता । 'नित्यं सपत्न्यादिषु' इति ङीप् । तस्या व्रतं पातिव्रत्यं तेन दुःखशीलां दुःखस्वभावाम् । दृढव्रतामित्यर्थः । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । चारुतया सुन्दरत्वेन हेतुना लोलं मनः त्वच्चित्तं प्रविष्टां कां नितम्बिनीं नारीं मुक्तलज्जां सतीं कण्ठे स्वयंग्राहनिषक्तबाहुम् । स्वयं गृह्णातीति स्वयंग्राहा । 'विभाषा ग्रहः' इति णप्रत्ययः । न च जलचर एव ग्राह इति नियमो जलचरे ग्राह एवेति नियमादिति । स्वयंग्राहा च सा निषक्तबाहुश्च तां तथाभूताम् इच्छसि । त्वदर्थे पतिव्रतामपि व्रताद् भ्रंशयिष्यामीत्यर्थः । एतच्चेन्द्रस्य पारदारिकत्वादुक्तम् । तथा च श्रुतिः—'अहल्यायै जारः' इति ॥

त्रिविधा नायिका । स्वकीया परकीया साधारणी चेति । तत्र परकीयां प्रत्युक्तम् । इतरे प्रत्याह—

**कयासि कामिन्सुरतापराधात्पादानतः कोपनयाऽवधूतः ।**
**तस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥८॥**

कयेति ॥ हे कामिन् कामुक सुरतापराधात् । अन्यासङ्गादित्यर्थः । पादानतः प्रणतः सन् । कोपनया कोपनशीलया कया स्त्रिया अवधूतः तिरस्कृतः असि । तस्याः शरीरं दृढानुतापं गाढपश्चात्तापमत एव प्रवालशय्याशरणं करिष्यामि इति ॥

---

१ प्रणिधेः. २ यानि. ३ पत्नीम्. ४ विलम्बिनीम्. ५ विषक्त. ६ सहसापराधः—भव. ७ यस्याः.

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥ ९ ॥

प्रसीदेति ॥ हे **वीर प्रसीद** प्रसन्नो भव । **वज्रं** कुलिशं **विश्राम्यतु** । उदास्तामित्यर्थः । **मदीयैः शरैः मोघीकृतबाहुवीर्यः** विफलीकृतभुजशक्तिः **कतमः** दैत्यदानवादिषु यः कश्चन **सुरारिः** ॥ 'वा बहूनां जातिपरिप्रश्ने डतमच्' इति डतमच्प्रत्ययः ॥ [ **कोपस्फुरिताधराभ्यः** ] कोपेन स्फुरिताधराभ्यः **स्त्रीभ्योऽपि बिभेतु** । किमु वक्तव्यं पुंभ्य इत्यर्थः । सकृद्भीतः सर्वतो बिभेतीति भावः । भीत्रार्थानां 'भयहेतुः' इत्यपादानत्वात्पञ्चमी ॥

तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये १०

तवेति ॥ किं बहुना । **तव प्रसादात्** अनुग्रहात् **कुसुमायुधोऽपि** अतिदुर्बलास्त्रोऽप्यहम् **एकं मधुं** वसन्तम् **एव सहायं लब्ध्वा** [ **पिनाकपाणेः** ] पिनाकः पाणौ यस्य स पिनाकपाणिः । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ ।' तस्य **हरस्यापि** । हरः पिनाकी चेत्यतिदारुण इति भावः । **धैर्यच्युतिं** धैर्यहानिं **कुर्याम्** । कर्तुं शक्नुयामित्यर्थः । 'शकि लिङ् च' इति शक्यार्थे लिङ् । **अन्ये धन्विनः** धनुर्भृतः **मम के** । न केऽपि इत्यर्थः । किंशब्दः कुत्सायाम् । 'कुत्साप्रश्नवितर्केषु क्षेपे किंशब्द इष्यते' इति शाश्वतः ॥

अथोरुदेशादवतार्य पादमाक्रान्ति[1]संभावितपादपीठम्[2] ।
संकल्पितार्थे[3] विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥ ११ ॥

अथेति ॥ **अथ** स्मरवाक्यश्रवणानन्तरम् । **आखण्डलः** सहस्राक्षः **ऊरुदेशात् पादम्** [ **आक्रान्तिसंभावितपादपीठम्** ] आक्रान्त्या आक्रमणेन संभावितं पादपीठं यस्मिंस्तद्यथा तथा **अवतार्य संकल्पितार्थे** हराचित्ताकर्षणरूपे विषये **विवृतात्मशक्तिम्** 'कुर्यां हरस्यापि'—इत्यादिना प्रकटीकृतस्वसामर्थ्यं **कामं** स्मरम् **इदं** वक्ष्यमाणं **बभाष** ॥

सर्वं[4] सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ १२ ॥

सर्वमिति ॥ हे **सखे** । सखे इति संबोधनं गौरवार्थम् । **सर्वमेतत् त्वयि उपपन्नं** सिद्धम् । **मम कुलिशं** वज्रं **भवान् च उभे अस्त्रे** । तत्र **वज्रं** [ **तपोवीर्यमहत्सु** ] तपोवीर्येण तपोबलेन महत्सु प्रबलेषु **कुण्ठं** प्रतिबद्धप्रसरम् । **त्वम्** अस्त्रं **सर्वतोगामि च साधकं च** । तापसेष्वप्यकुण्ठमित्यर्थः ॥

अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥ १३ ॥

---

१ आक्रान्त. २ संमानितपादपीठः. ३ संकल्पिते. ४ पूर्वं.

अवैमीति ॥ हे सखे **ते सारं** बलम् **अवैमि** वेद्मि । **अतः खलु** अत एव **आत्मसमं** मत्तुल्यं **त्वां गुरुणि** महति **कार्ये** 'तस्मै हिमाद्रेः— ( ३।१६ ) इति वक्ष्यमाणे **नियोक्ष्ये** । 'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकादात्मनेपदनियमः । तथा हि । सारपरीक्षापूर्वक एव सर्वत्र नियोग इत्याह—**कृष्णेन** विष्णुना ध तीति धरः पचाद्यच् । भुवो धरो भूधरस्तस्य भावस्तत्तां **भूधरताम्** । भूधरणशक्तिमित्यर्थः । **अवेक्ष्य** ज्ञात्वा **शेषः** सर्पराजो **देहोद्वहनाय** स्वदेहमुद्वोढुम् । 'क्रियार्थोपपदस्य—' इत्यादिना चतुर्थी । **व्यादिश्यते** नियुज्यते । शेषशायी हि भगवान् ॥

नियोगाङ्गीकारं सिद्धवत्कर्तुमाह—

**आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।**
**निबोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ १४ ॥**

आशंसतेति ॥ **वृषाङ्के** हरे **बाणगतिं** बाणप्रसरम् **आशंसता** कथयता । 'कुर्यां हरस्यापि पिनाकपाणेः' ( ३।१० ) इत्यादिनेति शेषः । **त्वया नः** अस्माकं **कार्यं प्रतिपन्नकल्पम्** अङ्गीकृतप्रायम् । 'ईषदसमाप्तौ'—इत्यादिना कल्पप्प्रत्ययः । कथमेतदत आह—**इदानीं** उच्चैः उन्नता द्विषो येषां तेषाम् **उच्चैर्द्विषां यज्ञांशभुजां** देवानाम् । एतेन द्विषल्लुप्तयज्ञभागत्वं सूच्यते । **ईप्सितम्** आप्तुमिष्टम् **एतदेव** हरेः बाणप्रयोगरूपमेव **निबोध** । हरायत्तं बुध्यस्वेत्यर्थः । 'बुधबोधने' इति धातोर्लोट् । अत्र आशंसता प्रार्थयमानेन इति नाथव्याख्यानमनाथव्याख्यानम् । आङ्पूर्वयोः शास्तिशंसत्यो रिच्छार्थत्वे आत्मनेपदनियमात् । याच्नार्थत्वस्याप्रामाणिकत्वात् 'कुर्यां हरस्यापि'— ( ३।१० ) इत्यत्रानयोरभावादयोगाच्चेति ॥

किं तत्कार्यं कथं वा तस्य हरायत्तत्वं कुतो वा मदपेक्षेत्यत्राह—

**अमी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।**
**स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥ १५**

अमी हीति ॥ **हि** यस्मात् **अमी देवाः जयाय** शत्रुजयार्थं **भवस्य** हरस्य **वीर्यप्रभवं** तेजःसंभूतं **सेनान्यं** सेनापतिम् **उशन्ति** कामयन्ते । 'वश कान्तौ' इति धातोर्लट् । ब्रह्मणां सद्योजातादिमन्त्राणामङ्गानां हृदयादिमन्त्राणां भूः स्थानं **ब्रह्माङ्गभूः** । कृतमन्त्रन्यास इत्यर्थः । **ब्रह्मणि** निजतत्त्वे । 'वेदस्तत्त्वं तपो ब्रह्म ।' इत्युभयत्राप्यमरः । **योजितात्मा** नियमिताचित्तः । मन्त्रन्यासपूर्वं ब्रह्म ध्यायतीत्यर्थः । **स** भवः **च** [ **त्वदेकेषुनिपातसाध्यः** ] त्वदेकेषोस्तवैकबाणस्य निपातेन साध्यः । अनन्यसाध्योऽयमस्मिन्नवसर इति भावः ॥

**तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।**
**योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥ १६ ॥**

---

१ यज्ञाङ्क. २ मुच्चैस्तरामीप्सितमर्थमत्र. ३ अर्थमत्र. ४ हरस्य ५ हार्यः. ६ ब्रह्मनियोजितात्मा. ७ जितात्मने.

तस्मा इति ॥ **यतात्मने** नियतचित्ताय **तस्मै** भवाय । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्चतुर्थी । **प्रयतां हिमाद्रेस्तनूजां** पार्वतीं **रोचयितुं यतस्व ।** भवितव्यं चात्र पार्वत्यैवेत्याह—**योषित्सु** स्त्रीषु मध्ये । 'यतश्च निर्धारणम्' इति सप्तमी । **क्षमा** शक्ता [ **तद्वीर्यनिषेकभूमिः** ] तस्य हरस्य वीर्यं रेतः तस्य निषेकः क्षरणं तस्य भूमिः क्षेत्रं **सा** पार्वती **एव इति आत्मभुवा** ब्रह्मणा **उपदिष्टम्** । 'उभे एव क्षमे वोढुम्' ( २।६० ) इत्यादिनोक्तमित्यर्थः ॥

सापीदानीं संनिकृष्टैव तस्येत्याह—

**गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।**
**अन्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः॥ १७**

गुरोरिति ॥ **नगेन्द्रकन्या** पार्वती **च गुरोः** पितुः **नियोगात्** शासनात् **अधित्यकायां** हिमाद्रेरूर्ध्वभूमौ । 'भूमिरूर्ध्वमधित्यका' इत्यमरः । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्प्रत्ययः । **तपस्यन्तं** तपश्चरन्तम् । 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' इति क्यङ्प्रत्ययः । ततः शतृप्रत्ययः । **स्थाणुं** रुद्रम् **अन्वास्ते** उपास्त इत्यर्थः । **इति इदं मया अप्सरसां मुखेभ्यः श्रुतम्** । न चैतदैतिह्यमात्रमित्याह—**स वर्गः** सोऽप्सरसां गणः **मत्प्रणिधिः** मम गूढचरः । 'प्रणिधिः प्रार्थने चरे' इति यादवः ॥

**तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।**
**अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८॥**

तदिति ॥ **तत्** तस्मात् **सिद्ध्यै** कार्यसिद्ध्यर्थं **गच्छ । देवकार्यं कुरु** । आशिषि लोट् ॥ **अयमर्थः** प्रयोजनम् **अर्थान्तरभाव्यः** कारणान्तरसाध्यः **एव** । तच्च कारणान्तरं पार्वतीसंनिधानमिति भावः । 'अर्थः प्रकारे विषये वित्तकारणवस्तुषु । अभिधेये च शब्दानां वृत्तौ चापि प्रयोजने ॥' इति विश्वः ॥ तथापि बीजसाध्यः अङ्कुरः **बीजाङ्कुरः उदयात्** उत्पत्तेः **प्राक् अम्भः इव त्वाम् उत्तमं प्रत्ययं** चरमं कारणम् **अपेक्षते** ॥ 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु ।' इत्यमरः । तस्मादस्मिन्नर्थे तव चरमसहकारित्वादनन्यसाध्योऽयमर्थ इति भावः ॥

**तस्मिन्सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।**
**अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म ॥ १९ ॥**

तस्मिन्निति ॥ **सुराणां विजयाभ्युपाये** जयस्योपायभूते **तस्मिन्** हरे **अस्त्रगतिः** अस्त्रप्रसरः **तव एव नाम** ॥ नामेति संभावनायाम् । अन्येषां तु संभावनापि नास्तीति भावः । अतः **त्वं कृती** कृतमस्यास्तीति कृती कृतार्थः । तथा हि । **अप्रसिद्धम् अपि अनन्यसाधारणम् एव कर्म पुंसां यशसे हि** । इदं तु प्रसिद्धमसाधारणं चेत्यतियशस्करमिति भावः ॥

---

१ अध्यास्त. २ लभ्य. ३ प्रत्ययसङ्गलब्धौ. ४ अस्मिन्. ५ काम.

प्रोत्साहनार्थं स्तौति—

सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥२०॥

सुरा इति ॥ एते सुराः समभ्यर्थयितारः याचितारः । कार्यं प्रयोजनं त्रयाणां विष्टपानामपि संबन्धि । सर्वलोकार्थमित्यर्थः । कर्म ते तव चापेन । न त्वन्येनेति भावः । अतिहिंस्रम् अतिघातुकं च न । अहो बत इति संबोधने । 'अहो बतानुकम्पायां खेदे संबोधनेऽपि च ।' इति विश्वः ॥ अथ वा अहो आश्चर्ये । बतेत्यामन्त्रणे संतोषे चेति । 'बतामन्त्रणसंतोषखेदानुकोशविस्मये ।' इति विश्वः । स्पृहणीयवीर्यः असि आश्चर्यविक्रमोऽसि ॥ 'आश्चर्यं स्पृहणीयं च' इति नानार्थकोशः ॥

मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव ।
समीरणो[2] नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥२१॥

मधुरिति ॥ हे मन्मथ । असौ मधुः च वसन्तोऽपि ते साहचार्यात् सहचरत्वात् एव अनुक्तः अपि अप्रेरितोऽपि सहायः सहकारी एव । तथा हि । समीरणः वायुः हुताशनस्य अग्नेः नोदयिता प्रेरकः भव इति केन व्यादिश्यते ॥ अत्र मधुसमीरणयोरुक्तिमन्तरेण सहायताकरणं सामान्यधर्मः । स च वाक्यद्वये वस्तुप्रतिवस्तुभावेन पृथग्निर्दिष्ट इति प्रतिवस्तूपमालंकारोऽयम् । तदुक्तम्—'यत्र सामान्यनिर्देशः पृथग्वाक्यद्वये यदि । गम्यौपम्याश्रिता सा स्यात्प्रतिवस्तूपमा मता ॥' इति ॥

तथेति शेषा[3]मिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
ऐरा[4]वतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥ २२ ॥

तथेति ॥ तथा अस्तु इति भर्तुः स्वामिनः शेषाम् इव प्रसाददत्तां मालामिव । 'प्रसादान्निजनिर्माल्यदाने शेषेति कीर्तिता ।' इति विश्वः ॥ 'माल्याक्षतादिदाने स्त्री शेषा' इति वैजयन्तीकेशवौ । आज्ञां मूर्ध्ना आदाय शिरसा गृहीत्वा मदनः प्रतस्थे । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । इन्द्रः [ ऐरावतास्फालनकर्कशेन ] ऐरावतास्फालनेन प्रोत्साहनार्थेन ताडनेन कर्कशेन परुषेण हस्तेन तदङ्गं मदनदेहं पस्पर्श । हस्तस्पर्शेन संभावयामासेत्यर्थः । शेषामिवाज्ञाम् इत्यत्र साधकबाधकप्रमाणाभावादुपमोत्प्रेक्षयोः संदेहसंकर इति । यदि भर्त्रा शेषापि दत्ता तदा तामाज्ञामिवेत्युपमा । अथ न दत्ता तर्हि शेषात्वेनोत्प्रेक्षिता । शेषादानं तु संदिग्धमिति ॥

स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥२३॥

---

१ यथा. २ समीरणश्चोदयिता; प्रेरयिता. २१-२२ मध्ये क्षेपकोऽयं लभ्यते-
ततः स्फुरत्केसरलग्नभृङ्गां सौरभ्यसंक्रान्तदिगन्तरालाम् ।
ददौ हरिः सादरमीक्षमाणो मन्दारमालां मकरध्वजाय ॥
३ माला०. ४ दिग्वारणा. ५ कर्म.

स इति ॥ स मदनः **अभिमतेन** प्रियेण **सख्या** सुहृदा **माधवेन** वसन्तेन **रत्या** स्वदेव्या **च साशङ्कं** संकटमापतितमिति सभयम् **अनुप्रयातः** सन् । तथा [**अङ्गव्ययप्रार्थितकार्यसिद्धिः**] अङ्गस्य व्ययेनापि प्रार्थिता कार्यसिद्धिर्येन स तथोक्तः । शरीरं मृत्वापि सर्वथा देवकार्यं साधयिष्यामीति कृतनिश्चयः सन्नित्यर्थः । **हैमवतं** हिमवति भवं [**स्थाण्वाश्रमं**] स्थाणो रुद्रस्याश्रमं **जगाम** ॥

**तस्मिन्वने संयमिनां मुनीनां तपःसमाधेः प्रतिकूलवर्ती ।**
**संकल्पयोनेरभिमानभूतमात्मानमाधाय मधुर्जजृम्भे ॥ २४ ॥**

तस्मिन्निति ॥ **तस्मिन्वने** स्थाण्वाश्रमे **संयमिनां** समाधिमतां **मुनीनां** [**तपःसमाधेः**] तपसः समाधेरेकाग्रतायाः प्रतिकूलं वर्तत इति **प्रतिकूलवर्ती** विरोधी **मधुः** वसंतः **संकल्पयोनेः** मनोभवस्य **अभिमानभूतम्** । गर्वहेतुभूतमित्यर्थः । कार्यकारणयोरभेदोपचारः । **आत्मानं** निजस्वरूपम् **आधाय** संनिधाय **जजृम्भे** प्रादुर्बभूव । वसन्तधर्मान् प्रवर्तयामसेत्यर्थः ॥

वसन्तधर्मानाह—

**कुबेरगुप्तां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।**
**दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥ २५ ॥**

कुबेरेति ॥ **उष्णरश्मौ** सूर्ये साहसिके च नायके **समयं** दक्षिणायनकालं संगमकालं च **विलङ्घ्य** अकाण्डे व्यतिक्रम्य **कुबेरगुप्तां** धनपतिपालितां कुत्सितशरीरेण केनचिद्रक्षितां च **दिशम्** उदीचीं स्त्रीलिङ्गाक्षिप्तां कांचिन्नायिकां च **गन्तुं** चलितुं संगन्तुं च **प्रवृत्ते** सति **दक्षिणा दिक्** दाक्षिण्यवती नायिका च **मुखेन** अग्रभागेन वक्त्रेण च । वहतीति वहः । पचाद्यच् । गन्धस्य वहं **गन्धवहम्** अनिलं व्यलीकेन दुःखेन निःश्वासस्तं **व्यलीकनिःश्वासम् इव** । 'दुःखे वैलक्ष्ये व्यलीकमप्रियाकार्यवस्तुनोः ।' इति वैजयन्ती । **उत्ससर्ज** प्रवर्तयामास । स्वभर्तरि समयोल्लङ्घनेन पराङ्गनासंगतिं प्रवृत्ते सति स्त्रियो दाक्षिण्यादकिंचिद्वदा दुःखान्निश्वसन्तीति भावः । उत्तरायणे सति मलयानिलाः प्रवृत्ता इति वाक्यार्थः । अत्रोत्प्रेक्षालंकारः । न च समासोक्तिरेवेयमुत्प्रेक्षानुप्रविष्टेति शङ्कितव्यम् । केवलविशेषणसामर्थ्यादेवाप्रस्तुतप्रतीतौ सोत्तिष्ठते । अत्र तु दक्षिणेति विशेष्यसामर्थ्यादपि नायिका प्रतीयते । न च श्लेष एव प्रकृताप्रकृतविषयः उभयश्लेषे श्लिष्टविशेष्यानङ्गीकारात् । तस्माच्छब्दशक्तिमूलोऽयं ध्वनिः । स च व्यलीकनिःश्वासरूपचेतनधर्मसंभावनार्थं दक्षिणस्या दिशो नायिकया सहाभेदमासादयन्नभेदलक्षणातिशयोक्त्युपजीविनीं निश्वासमिवेति वाच्योत्प्रेक्षां निर्वहतीति वाच्यलिङ्गभूत इत्युत्पश्यामः ॥

**असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।**
**पादेन नापैक्षत सुन्दरीणां संपर्कमासिञ्जितनूपुरेण ॥ २६ ॥**

असूतेति ॥ **अशोकः** वृक्षविशेषः **सद्यः स्कन्धात्** प्रकाण्डात् **प्रभृति एव** ।

१ धिप०. २ मादाय. ३ नाथां, जुष्टाम्. ४ आशि०.

स्कन्धादारभ्येत्यर्थः । भाष्यकारवचनात्प्रभृतियोगे पञ्चमीति कैयटः । भाष्यं च 'मूलात्प्रभृत्यग्राद्वृक्षांस्तक्ष्णुवन्ति' इति । 'कार्तिक्याः प्रभृत्याग्रहायणी मासे ।' इत्यादि । **सपल्लवानि कुसुमानि असूत** । उभयमप्यजीजनदित्यर्थः । [ **आसिञ्जितनूपुरेण** ] आसिञ्जितो नूपुरो यस्य तेन । सिञ्जधातोरकर्मकात् 'गत्यर्थाकर्मक'–इत्यादिना कर्तरि क्तः । **सुन्दरीणां पादेन संपर्कं** ताडनं **न अपेक्षत** । 'सनूपुररवेण स्त्रीचरणेनाभिताडनम् । दोहदं यदशोकस्य ततः पुष्पोद्गमो भवेत् ॥' इति । तथा हि–'पदाहतः प्रमदया विकसत्यशोकः शोकं जहाति बकुलो मुखसीधुसिक्तः । आलोकितः कुरबकः कुरुते विकाशमालोडितस्तिलक उत्कलिको विभाति ॥' इति ॥

**सद्यः[1] प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।**
**निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥ २७ ॥**

सद्य इति ॥ **मधुः** वसन्त एवेषुकारः [ **प्रवालोद्गमचारुपत्रे** ] प्रवालोद्गमाः पल्लवाङ्कुरा एव चारूणि पत्राणि पक्षा यस्य तस्मिन् । 'पत्रं वाहनपक्षयोः' इत्यमरः । नवं चूतं चूतकुसुमं तदेव बाणस्तस्मिन् **नवचूतबाणे समाप्तिं नीते** सति **सद्यः मनोभवस्य** धन्विनः **नामाक्षराणीव द्विरेफान्** भ्रमरान् **निवेशयामास** निदधौ ॥ अत्र प्रवालपत्रे इत्याद्येकदेशविवर्तिरूपकं मधोरिषुकारत्वनिरूपणं सूचयन्नामाक्षराणीवेत्युत्प्रेक्षायां निमित्तमित्येकदेशविवर्तिरूपकोत्थापितेयमुत्प्रेक्षा ॥

**वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया[2] स्म चेतः ।**
**प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥**

वर्णेति ॥ **कर्णिकारं** कर्णिकारकुसुमम् । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्युत्पन्नस्य तद्धितस्य 'पुष्पफलमूलेषु बहुलं' इति लुक् । एवमन्यत्रापि द्रष्टव्यम् । **वर्णप्रकर्षे** वर्णोत्कर्षे **सति** अपि **निर्गन्धतया** हेतुना **चेतः दुनोति स्म** पर्यतापयत् । 'लट् स्मे' इति भूतार्थे लट् । तथा हि । **प्रायेण विश्वसृजः** विधातुः **प्रवृत्तिः गुणानां सामग्र्यविधौ** साकल्यसंपादनविषये **पराङ्मुखी** । सर्वत्रापि वस्तुनि किंचिद्वैकल्यं संपादयति । यथा चन्द्रे कलङ्कः । अतः कर्णिकारेऽपि नैर्गन्ध्यं युज्यत इति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥

**बालेन्दुवक्राण्यविकाशभावाद्बभुः पलाशान्यतिलोहितानि ।**
**सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥२९॥**

बालेन्द्विति ॥ **अविकाशभावात्** निर्विकाशत्वात् मुकुलभावाद्धेतोः [ **बालेन्दुवक्राणि** ] बालेन्दुरिव वक्राणि **अतिलोहितानि** अतिरक्तानि **पलाशानि** किंशुकपुष्पाणि । 'पलाशे किंशुकः पर्णः' इत्यमरः । **वसन्तेन** पुंसा **समागतानां** संगतानां **वनस्थलीनां** स्त्रीणां **सद्यः** सद्यो दत्तानि । पुराणेष्वतिलौहित्याभावा-

---

१ सख्युः. २ निर्गन्धामिति.

दिति भावः । **नखक्षतानीव बभुः** । अत्र वसन्तस्य वनस्थलीनां च विशेषणसाधारण्यान्नायकव्यवहारप्रतीतेः समासोक्तिस्तावदस्ति । नखक्षतानीव इति जातिस्वरूपोत्प्रेक्षा वक्रत्वलौहित्यगुणनिमित्ता जागर्ति । सा च नायकव्यवहाराश्रितसमासोक्तिगर्भिण्येवोत्तिष्ठत इत्युभयोरेककालत्वैव । 'विशेषणसामर्थ्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिष्यते' इति हि लक्षणम् ॥

**लग्नद्विरेफाञ्जनभक्तिचित्रं[1] मुखे मधुश्रीस्तिलकं प्रकाश्य[2] ।**
**रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलंचकार ॥ ३० ॥**

लग्नेति ॥ **मधुश्रीः** वसन्तलक्ष्मीः [ **लग्नद्विरेफाञ्जनभक्तिचित्रं** ] लग्नद्विरेफा एवाञ्जनभक्तयः कज्जलरचनास्ताभिश्चित्रं चित्रवर्णं **तिलकं** पुष्पविशेषमेव तिलकं विशेषकम् । मुखं प्रारम्भस्तस्मिन्नेव **मुखे** वक्त्रे **प्रकाश्य** प्रकटय्य **बालारुणकोमलेन** बालार्कसुन्दरेण **रागेण** अरुणिम्ना तेनैव लाक्षारागेण चूतप्रवाल एवौष्ठस्तं **चूतप्रवालोष्ठम् अलंचकार** प्रसाधयामास ॥ अत्र रूपकालंकारः ॥

**मृगाः प्रियालद्रुममञ्जरीणां[3] रजःकणैर्विघ्नितदृष्टिपाताः ।**
**मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥ ३१ ॥**

मृगा इति ॥ [ **प्रियालद्रुममञ्जरीणां** ] प्रियालद्रुमा राजादनवृक्षाः । 'राजादनः प्रियालः स्यात्' इत्यमरः । तेषां मञ्जर्यस्तासां **रजःकणैः** [ **विघ्नितदृष्टिपाताः** ] विघ्निताः संजातविघ्ना दृष्टीनां पाताः प्रसादा येषां ते तथोक्ताः । **मदोद्धताः मृगाः प्रत्यनिलम्** अनिलाभिमुखं [ **मर्मरपत्रमोक्षाः** ] मर्मरा मर्मरशब्दवन्तः पत्रमोक्षा जीर्णपर्णपाता यासु ताः **वनस्थलीः विचेरुः** वनप्रदेशेषु चरन्ति स्म । 'देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ।' इति चरतेः सकर्मकत्वम् ॥

**चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।**
**मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य ॥ ३२ ॥**

चूताङ्कुरेति ॥ [**चूताङ्कुरास्वादकषायकण्ठः**] चूताङ्कुराणामास्वादेन कषायकण्ठो रक्तकण्ठः । 'सुरभावपथे रक्ते कषायः' इति केशवः । पुमान्कोकिलः **पुंस्कोकिलः** । पुंग्रहणं प्रागल्भ्यद्योतनार्थम् । **मधुरं चुकूज** इति **यत् तत्** कूजनम् **एव** [ **मनस्विनीमानविघातदक्षं** ] मनस्विनीनां मानविघाते रोषनिरासे दक्षं **स्मरस्य वचनं** मानं त्यजतेत्याज्ञानवचनं **जातम्** । कोकिलकूजितश्रवणानन्तरं स्मराज्ञया इव मानं जहुरित्यर्थः ॥

**हिमव्यपायाद्विशदाधराणामापाण्डरीभूतमुखच्छवीनाम्[4] ।**
**स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥ ३३ ॥**

हिमेति ॥ [ **हिमव्यपायात्** ] हिमस्य व्यपायादपगमात् [ **विशदाधराणां** ] विशदा नीरुजा अधरा ओष्ठा यासां तासाम् । **आपाण्डरीभूतमुखच्छवीनाम्**

१ चित्रे. २ निवेश्य. ३ पियाल; प्रियालु. ४ आपाण्डुरीभूत.

कुङ्कुमपरिहारादिति भावः। **किंपुरुषाङ्गनानां पत्रविशेषकेषु** पत्ररचनासु **स्वेदोद्गमः पदं चक्रे**। घर्मोदयात्स्वेदोदयोऽभूदित्यर्थः। विशदाधरत्वं मधूच्छिष्टराहित्यादिति भावः। हेमन्तेषु नार्यो बिम्बोष्ठेषु मधूच्छिष्टं शीतभयाद्दधतीति प्रसिद्धम्॥

**तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम्।**
**प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः॥ ३४॥**

तपस्विन इति॥ [**स्थाणुवनौकसः**] स्थाणोर्वनमोको येषां ते **तपस्विनः** तत्रत्या मुनयः समानकाल आद्यन्तावस्या आकालिकीम्। अकालभवत्वादुत्पत्त्यनन्तरविनाशिनीमित्यर्थः। 'आकालिकडाद्यन्तवचने' इति समानकालादिकट्प्रत्ययः। प्रकृतेराकाल आदेशश्च निपातितः। 'टिड्ढाणञ्'—इत्यादिना ङीप्। केचिदकालोद्दाध्यात्मादित्वाद्भवार्थे ठगित्याहुः। **ताम् आकालिकीं मधुप्रवृत्तिं वीक्ष्य** [**प्रयत्नसंस्तम्भितविक्रियाणां**] प्रयत्नेन संस्तम्भितविक्रियाणां निरुद्धविकाराणां **मनसां कथंचिद् ईशाः** नियन्तारो **बभूवुः**॥

**तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने।**
**काष्ठागतस्नेहरसानुविद्धं द्वंद्वानि भावं क्रियया विवव्रुः॥ ३५॥**

तमिति॥ [**आरोपितपुष्पचापे**] आरोपितमाधिज्यं कृतं पुष्पचापं येन तस्मिन्। [**रतिद्वितीये**] रतिर्द्वितीया यस्य तस्मिन् रतिसहाये **मदने तं देशं** स्थाण्वाश्रमं **प्रपन्ने** प्राप्ते सति **द्वन्द्वानि** स्थावराणि जङ्गमानि च मिथुनानि [**काष्ठागतस्नेहरसानुविद्धं**] काष्ठा उत्कर्षः। 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः। तां गतो यः स्नेहः इष्टसाधननिबन्धनः प्रेमापरनामा ममताभिमानः। 'प्रेमा ना प्रियता हार्दं प्रेम स्नेहः' इत्यमरः। स एव रसस्तेनानुविद्धं संपृक्तं **भावं** रत्याख्यं शृङ्गारभावं **क्रियया** कार्यभूतया चेष्टया **विवव्रुः** प्रकटीचक्रुः। शृङ्गारचेष्टाः प्रावर्तन्तेत्यर्थः॥

ताश्चेष्टा आह 'मधु' इत्यादिभिश्चतुर्भिः—

**मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः।**
**शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः॥ ३६॥**

मध्विति॥ द्वौ रेफौ वर्णविशेषौ यस्य स **द्विरेफः** भ्रमरः। उपचारात्तदर्थोऽपि द्विरेफ उच्यते। यथाह कैयटः—'शब्दधर्मेणाप्यर्थस्य व्यपदेशो दृश्यते। यथा भ्रमरशब्दस्य द्विरेफो भ्रमरः'। [**कुसुमैकपात्रे**] कुसुममेवैकं साधारणं पात्रं तस्मिन् **मधु** मकरन्दम्। 'मधु मद्ये पुष्परसे' इति विश्वः। **स्वां प्रियां** भृङ्गीम् **अनुवर्तमानः** अनुसरन् **पपौ**। तत्पीतशेषं पपावित्यर्थः। कृष्णश्चासौ सारः शबलश्च **कृष्णसारः** कृष्णमृगः। 'वर्णो वर्णेन' इति समासः। [**च**।] [**स्पर्शनिमीलिताक्षीं**] स्पर्शेन स्पर्शसुखेन निमीलिताक्षीं **मृगीं शृङ्गेण अकण्डूयत** कषितवान्॥ 'कण्ड्वादिभ्यो यक्' इति यक्। ततः कर्तरि लङ्॥

---

१ संस्पर्श-

दद्दौ रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥ ३७ ॥

ददाविति ॥ रसात् अतिरागात् करेणुः करिणी । 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः । पङ्काज्जायत इति पङ्कजं तस्य रेणुः पङ्कजरेणुस्तस्य गन्धोऽस्यास्तीति पङ्कजरेणुगन्धि गण्डूषजलं मुखान्तर्धृतजलं गजाय ददौ । रथाङ्गनामा चक्रवाकः अर्धं यथा तथोपभुक्तेन [अर्धोपभुक्तेन] अर्धजग्धेन बिसेन जायां संभावयामास । स्वजग्धशेषं ददावित्यर्थः ॥

गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्ब ॥ ३८ ॥

गीतान्तरेष्विति ॥ किंपुरुषः किंनरः श्रमवारिलेशैः स्वेदोदबिन्दुभिः [किंचित्समुच्छ्वासितपत्रलेखम्] किंचिदीषत्समुच्छ्वासिता विश्लेषिताः पत्रलेखा यस्य तत् । [पुष्पासवाघूर्णितनेत्रशोभि] पुष्पाणामासवो मद्यं पुष्पासवः पुष्पोद्भवमद्यमित्यर्थः । वसन्ते मधूकस्य संभवात् । पुष्पवासितमिति केचित् । तेनाघूर्णिताभ्यामुद्भ्रान्ताभ्यां नेत्राभ्यां शोभत इति तथोक्तं प्रियामुखं गीतान्तरेषु गीतमध्येषु चुचुम्ब ॥

पर्याप्तपुष्पस्तबकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥ ३९ ॥

पर्याप्तेति ॥ [पर्याप्तपुष्पस्तबकस्तनाभ्यः] पर्याप्ताः समग्राः पुष्पस्तबका एव स्तना यासां ताभ्यः ॥ 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीष् । [स्फुरत्प्रवालोष्ठमनोहराभ्यः] स्फुरन्तः प्रवालाः पल्लवाः एवौष्ठास्तैर्मनोहराभ्यः [लतावधूभ्यः] लता एव वध्वस्ताभ्यः सकाशात् तरवोऽपि लिङ्गादेव पुंस्त्वं गम्यते । [विनम्रशाखाभुजबन्धनानि] विनम्राः शाखा एव भुजास्तैर्बन्धनानि अवापुः । ताभिरालिङ्गिता इत्यर्थः । स्थावराणामपि मदनविकारोऽभूत्किमुतान्येषामिति भावः । एतच्च तरुलतानामपि चेतनत्वादुक्तम् । यथाह मनुः—'अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ।' इति । अत्र रूपकालंकारः ॥

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ ४० ॥

श्रुतेति ॥ अस्मिन्क्षणे वसन्ताविर्भावकाले भगवान् हरः श्रुताप्सरोगीतिरपि । दिव्याङ्गनागानमाकर्णयन्नपीत्यर्थः । प्रसंख्यानपरः आत्मानुसंधानपरः बभूव । तथा हि । [आत्मेश्वराणाम्] आत्मनश्चित्तस्येश्वराणां नियन्तॄणाम् । वशिनामित्यर्थः । विहन्यन्त एभिरिति विघ्नाः प्रत्यूहाः । घञर्थे कप्रत्ययः । जातु कदाचिदपि । [समाधिभेदप्रभवः] समाधिभेदे समाधिभञ्जने प्रभवः समर्थाः न भवन्ति ॥

१ सरःपङ्कज. २ युक्तेन. ३ ईषत्स०. ४ शोभं. ५ चुचुम्बे. ६ संजात. ७ आनम.

लतागृहद्वारगतोऽथ नन्दी वामप्रकोष्ठार्पितहेमवेत्रः।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान्व्यनैषीत्॥ ४१॥

लतेति॥ अथ [ **लतागृहद्वारगतः** ] लतागृहद्वारं गतः [ **वामप्रकोष्ठार्पितहेमवेत्रः** ] वामे प्रकोष्ठेऽर्पितहेमवेत्रो धारितहेमदण्डः **नन्दी** नन्दिकेश्वरः। 'नन्दी भृङ्गिरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे।' इति कोशः। [ **मुखार्पितैकाङ्गुलिसंज्ञया** ] मुखेऽर्पितायाः सरोषविस्मयस्तिमितावलोकं निहिताया एकस्या अङ्गुलेस्तर्जन्याः संज्ञया सूचनया **एव**। 'संज्ञा स्याच्चेतना नाम हस्ताद्यैरर्थसूचना'। इत्यमरः। **गणान्** प्रमथान् **चापलाय** चापलं कर्तुं **मा** भवत **इति**। 'क्रियार्थोपपदस्य'—इत्यादिना चतुर्थी। **व्यनैषीत्** शिक्षितवान्॥

न केवलं गणा एव विनीताः किं तु जरायुजादिचतुर्विधं प्राणिजातमपीत्याह—

निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम्।
तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे॥ ४२॥

निष्कम्पेति॥ **निष्कम्पवृक्षम्**। इदमुद्भिज्जोपलक्षणम्। **निभृतद्विरेफं** निश्चलभृङ्गम्। स्वेदजोपलक्षणमेतत्। **मूकाण्डजं** निःशब्दपक्षिसरीसृपादिकम्। एतेनाण्डजजातिरुक्ता। **शान्तमृगप्रचारम्**। जरायुजोपलक्षणमेतत्। **सर्वम् एव काननं तच्छासनात्** नन्दीश्वराज्ञया **चित्रार्पितारम्भं** चित्रलिखितारम्भम् **इव अवतस्थे**॥ 'नृगवाद्या जरायुजाः। स्वेदजाः कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः। उद्भिदस्तरुगुल्माद्याः' इत्यमरः॥

दृष्टिप्रपातं परिहृत्य तस्य कामः पुरःशुक्रमिव प्रयाणे।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश॥ ४३॥

दृष्टिप्रपातमिति॥ **कामः प्रयाणे** यात्रायां पुरोगतः शुक्रो यस्मिन्देशे तं **पुरःशुक्रं** देशम् **इव**। 'प्रतिशुक्रं प्रतिबुधं प्रत्यङ्गारकमेव च। अपि शक्रसमो राजा हतसैन्यो निवर्तते॥' इति प्रतिषेधात्। **तस्य दृष्टिप्रपातं** दृग्विषयं **परिहृत्य प्रान्तेषु** पार्श्वदेशेषु [ **संसक्तनमेरुशाखं** ] संसक्ता अन्योन्यसंसृष्टा नमेरूणां सुरपुंनागानां शाखा यस्य तत्। तिरोधानयोग्यमिति भावः। **भूतपतेः** शिवस्य **ध्यानास्पदं** समाधिस्थानम्। 'आस्पदं प्रतिष्ठायाम्' इति निपातः। **विवेश**॥

स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम्।
आसीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श॥ ४४॥

स इति॥ **आसन्नशरीरपातः** आसन्नमृत्युः **स** कामः [ **शार्दूलचर्मव्यवधानवत्याम्** ] शार्दूलचर्मणा व्यवधानवत्याम्। व्याघ्रचर्मास्तृतायामित्यर्थः। 'मोक्षश्रीर्व्याघ्रचर्मणि' इति प्राशस्त्यादिति भावः॥ **देवदारुद्रुमवेदिकायाम् आसीनम्** उपविष्टं **संयमिनं** समाधिनिष्ठं **त्रियम्बकं** त्रिनेत्रं **ददर्श**। केचित्साहसिकाः 'त्रिलो-

१ द्वारि. २ नासा०. ३ न्यषेधीत्. ४ रण्य०. ५ प्रतीपं, प्रदीपं. ६ तं त्र्यम्बकं, त्रिलोचनम्.

चनम्' इति पेठुः । त्र्यम्बकमित्युक्ते पादपूरणव्यत्यासात्त्रियम्बकमिति पादपूरणार्थोऽयवादेशश्छान्दसो महाकविप्रयोगादभियुक्तैरङ्गीकृतः ॥

तमेव देवं षड्भिः श्लोकैर्वर्णयति—

**पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं संनमितोभयांसम् ।**
**उत्तानपाणिद्वयसंनिवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥ ४५ ॥**

पर्यङ्केति ॥ [ **पर्यङ्कबन्धस्थिरपूर्वकायं** ] पर्यङ्कबन्धेन वीरासनेन स्थिरपूर्वकायं निश्चलोत्तरार्धम् [ **ऋज्वायतं** ] ऋजुरायतश्चर्ज्वायतस्तं [ **संनमितोभयांसं** ] संनमितावुभावंसौ यस्य तं तथोक्तम् । वृत्तिविषये उभशब्दस्थाने उभयशब्दप्रयोग इत्युक्तं कैयटेन । [ **उत्तानपाणिद्वयसंनिवेशात्** ] उत्तान ऊर्ध्वतलो यः पाणिद्वयस्य संनिवेशः संस्थानं तस्मात् **अङ्कमध्ये** [ **प्रफुल्लराजीवं** ] प्रफुल्लं राजीवं पङ्कजं यस्य तम् इव स्थितम् । वीरासने वसिष्ठः—'एकं पादमथैकस्मिन्विन्यस्योरौ तु संस्थितम् । इतरस्मिंस्तथैवोरुं वीरासनमुदाहृतम् ॥' इति । तथा योगसारे—'उत्तानिते करतले करमुत्तानितं परम् । आदायाङ्कगतं कृत्वा ध्यायेद्यस्तस्य सोऽन्तरम् ॥' इति ॥

**भुजङ्गमोन्नद्धजटाकलापं कर्णावसक्तद्विगुणाक्षसूत्रम् ।**
**कण्ठप्रभासङ्गविशेषनीलां कृष्णत्वचं ग्रन्थिमतीं दधानम् ॥ ४६ ॥**

भुजङ्गमेति ॥ [ **भुजङ्गमोन्नद्धजटाकलापं** ] भुजङ्गमेनोन्नद्ध उन्नमय्य बद्धो जटाकलापो येन तं तथोक्तम् । [ **कर्णावसक्तद्विगुणाक्षसूत्रं** ] कर्णावसक्तम् । कर्णावलम्बीत्यर्थः । अत एव द्विगुणं द्विरावृत्तमक्षसूत्रमक्षमाला यस्य तम् । [**कण्ठप्रभासङ्गविशेषनीलां** ] कण्ठप्रभाणां सङ्गेन मिश्रणेन विशेषनीलामतिनीलां **ग्रन्थिमतीं** बन्धनयुक्तां **कृष्णत्वचं** कृष्णमृगाजिनं **दधानम्** ॥

**किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।**
**नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥ ४७ ॥**

किंचिदिति ॥ [ **किंचित्प्रकाशस्तिमितोग्रतारैः** ] किंचित्प्रकाशा ईषत्प्रकाशाः स्तिमिता निश्चला उग्राश्च ताराः कनीनिका येषां तैः । 'तारकाक्ष्णः कनीनिका' इत्यमरः । **भ्रूविक्रियायां** भ्रूविक्षेपे **विरतप्रसङ्गैः** प्रसक्तिरहितैः । **अविस्पन्दितपक्ष्ममालैः** अचलितपक्ष्मपङ्क्तिभिरधः प्रसृता मयूखा येषां तैः **अधोमयूखैः नेत्रैः** । त्रिनेत्रत्वाद्बहुवचनम् । **लक्ष्यीकृतघ्राणं** नासाग्रनिविष्टदृष्टिमित्यर्थः । करणान्यवहिष्कृत्य स्थाणुवन्निश्चलात्मकः । आत्मानं हृदये ध्यायेन्नासाग्रन्यस्तलोचनः '॥ इति योगसारे ॥

**अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम् ।**
**अन्तश्चराणां मरुतां निरोधान्निवातनिष्कम्पमिव प्रदीपम् ॥ ४८ ॥**

१ उद्बद्ध, आबद्ध, आविद्ध. २ करा, कर्णावतंस०. ३ मृगत्वचम्. ४ भ्रुवोः क्रि०. ५ विगत. ६ लक्षीकृत. ७ निर्वाण, निर्वात.

अवृष्टीति ॥ [ अन्तश्चराणां ] अन्तश्चरन्तीत्यन्तश्चराः तेषां मरुतां प्राणादीनां निरोधात् हेतोः अवृष्टिसंरम्भम् अविद्यमानवर्षसंभ्रमम् अम्बुवाहम् इव स्थितम् । एतेन प्राणनिरोधः सूचितः । अनुत्तरङ्गम् अनुद्भूततरङ्गम् अपामाधारं ह्रदं इव स्थितम् । एतेनापाननिरोधः सूचितः । तथा [ निवातनिष्कम्पम् ] निवाते निर्वातदेशे निष्कम्पं निश्चलं प्रदीपम् इव स्थितम् । एतेन शेषवायुनिरोधः सूचितः । ' निवातावाश्रयावातौ ' इत्यमरः ॥

**कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।**
**मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं ग्लपयन्तमिन्दोः ॥४९॥**

कपालेति ॥ [ कपालनेत्रान्तरलब्धमार्गैः ] कपालनेत्रान्तरेण ब्रह्मकरोटिनेत्रविवरेण लब्धमार्गैः शिरस्तः ब्रह्मरन्ध्रात् । ' पञ्चम्यास्तसिल् ' । उदितैः उद्भूतैः ज्योतिःप्ररोहैः तेजोङ्कुरैः [ मृणालसूत्राधिकसौकुमार्यां ] मृणालसूत्राधिकं सौकुमार्यं मार्दवं यस्यास्तां बालस्य इन्दोः शिरश्चन्द्रस्य लक्ष्मीं ग्लपयन्तम् ॥

**मनो नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।**
**यमक्षरं क्षेत्रविदो विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥ ५० ॥**

मन इति ॥ [ नवद्वारनिषिद्धवृत्ति ] नवभ्यो द्वारेभ्यो निषिद्धा निवर्तिता वृत्तिः संचारो यस्य तत्तथोक्तम् । [ समाधिवश्यं ] समाधिना प्रणिधानेन वश्यं वशंगतम् । यत्प्रत्ययः । ' प्रणिधानं समाधानं समाधिश्च समाश्रयः । ' इति हलायुधः । मनः हृदि हृदयाख्येऽधिष्ठाने व्यवस्थाप्य । तथा च वसिष्ठः—'यतो निर्याति विषयान्यस्मिंश्चैव प्रलीयते । हृदयं तद्विजानीयान्मनसः स्थितिकारणम् ॥' इति । क्षेत्रविदः क्षेत्रज्ञाः पुरुषाः यं न क्षरति इति अक्षरम् अविनाशिनं विदुः विदन्ति । ' विदो लटो वा ' इति झेर्जुस् । तम् आत्मानम् आत्मनि स्वस्मिन् अवलोकयन्तं साक्षात्कुर्वन्तम् । स्वातिरेकेण परमात्मनोऽभावादिति भावः ॥

**स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम् ।**
**नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥ ५१ ॥**

स्मर इति ॥ स्मरः कामः तथाभूतं पूर्वोक्तरूपं मनसा अपि अधृष्यम् अयुग्मनेत्रं विषमाक्षम् अदूरात् पश्यन् । [ साध्वससन्नहस्तः ] साध्वसेन सन्नहस्तो विश्लथपाणिः सन् । स्वहस्तात् स्रस्तं शरं चापम् अपि चापं च न अलक्षयत् न विवेद । भीतो मुह्यतीति भावः ॥

**निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।**
**अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ ५२ ॥**

निर्वाणेति ॥ अथ निर्वाणेन नाशेन भूयिष्ठं निर्वाणभूयिष्ठम् । नष्टप्रायमित्यर्थः । अस्य स्मरस्य वीर्यं बलं वपुर्गुणेन सौन्दर्येण संधुक्षयन्ती इव पुनरुज्जीवयन्तीव

१ भार्यान् बालस्य रश्मीन्. २ द्वारि. ३ वेद-ब्रह्म-विदः. ४ स्वि-खिन्न.

स्थिता **वनदेवताभ्यां** सखीभूताभ्याम् **अनुप्रयाता** अनुगता **स्थावरराजकन्या** पार्वती **अदृश्यत** दृष्टा ॥

तामेवाह चतुर्भिः—

**अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।**
**मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥ ५३ ॥**

अशोकेति ॥ [ **अशोकनिर्भर्त्सितपद्मरागम्** ] अशोकपुष्पेण निर्भर्त्सितास्तिरस्कृताः पद्मरागा येन तत्तथोक्तम् । [ **आकृष्टहेमद्युतिकर्णिकारम्** ] आकृष्टहेमद्युतीनि आहृतस्वर्णाभरणवर्णानि कर्णिकाराणि यस्मिंस्तत्तथोक्तम् । [ **मुक्ताकलापीकृतसिन्धुवारं** ] मुक्ताकलापीकृतानि सिन्धुवाराणि निर्गुण्डीकुसुमानि यस्मिंस्तत् । ' सिन्धुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि । ' इत्यमरः । वसन्तपुष्पाण्येवाभरणं [ **वसन्तपुष्पाभरणं** ] **वहन्ती** ॥

**आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।**
**पर्याप्तपुष्पस्तबकावनम्रा संचारिणी पल्लविनी लतेव ॥ ५४ ॥**

आवर्जितेति ॥ **स्तनाभ्यां किंचिद् आवर्जिता** ईषदानमिता **इव** । तरुणार्कस्य राग इव रागो यस्य तत् [ **तरुणार्करागं** ] बालार्कारुणमित्यर्थः । उपमानपूर्वपदो बहुव्रीहिरुत्तरपदलोपश्च । **वासो वसाना** आच्छादयन्ती । अत एव **पर्याप्तपुष्पस्तबकावनम्रा पल्लविनी** किसलयवती **संचारिणी लतेव** । स्थितेति शेषः ॥

**स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरदामकाञ्चीम् ।**
**न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥५५**

स्रस्तामिति ॥ **स्थानविदा** निक्षेपयोग्यस्थानवेदिना **स्मरेण न्यासीकृतां** निक्षेपीकृताम् । [ **कार्मुकस्य** ] कर्मणि प्रभवतीति कार्मुकं धनुः । ' कर्मण उकञ् ' इत्युकञ्प्रत्ययः । तस्य । **द्वितीयां मौर्वीम् इव** स्थिताम् । अत्र हि न्यस्ता मौर्व्युत्तरत्र हरवैरनिर्यातनायोपयुज्यत इति भावः । **नितम्बात्स्रस्तां** चलितां [ **केसरदामकाञ्चीम्** ] केसरदाम बकुलमाला सैव काञ्ची तां **पुनः पुनः अवलम्बमाना** हस्तेन धारयन्ती ॥

**सुगन्धिनिःश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।**
**प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥ ५६ ॥**

सुगन्धीति ॥ [ **सुगन्धिनिःश्वासविवृद्धतृष्णं** ] सुगन्धिभिर्निःश्वासैर्विवृद्धतृष्णम् [ **बिम्बाधरासन्नचरं** ] बिम्बतुल्योऽधरो बिम्बाधरः । ' वृत्तौ मध्यपदलोपः स्यात् ' इति वामनः । तस्यासन्नचरं संनिकृष्टचरं **द्विरेफं** भृङ्गं **प्रतिक्षणं** [ **संभ्रमलोलदृष्टिः** ] संभ्रमेण लोलदृष्टिश्चलाक्षी सती **लीलारविन्देन निवारयन्ती** ॥

---

१ आकृष्ट. २ सिन्दुवारम्. ३ सुजात–संजात–पुष्प॰ ४ पल्लविता. ५ अवरोपयन्ती॰ ६ पुष्प. ७ द्वितीयमौर्वीमिव. ८ स्तम्भितलो॰.

**तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम्[1] ।**
**जितेन्द्रिये शूलिनि पुष्पचापः[2] स्वकार्यसिद्धिं[3] पुनराशशंसे[4] ॥ ५७ ॥**

तामिति ॥ [ सर्वावयवानवद्याम् ] सर्वावयवेष्वनवद्यामगर्ह्याम् । 'अवद्यपण्य-' इति निपातः । रतेः कामकलत्रस्य अपि ह्रीपदं लज्जानिमित्तम् । आदधानाम् । न्यूनतामावहन्तीमित्यर्थः । तां पार्वतीं वीक्ष्य पुष्पचापः कामः जितेन्द्रिये । दुर्जयेऽपीत्यर्थः । शूलिनि शिवे विषये स्वकार्यसिद्धिं पुनः आशशंसे चकमे । पूर्वं साध्वससन्नहस्तः ( ३।५१ ) इत्यादिना कार्यसिद्धेरुन्मूलितत्वाभिधानादिह पुनरित्युक्तम् ॥

**भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।**
**योगात्स चान्तः[6] परमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम[5] ॥ ५८ ॥**

भविष्यत इति ॥ उमा च भविष्यतः पत्युः शंभोः प्रतिहारभूमिं द्वारदेशं समाससाद । 'स्त्री द्वार्द्वारं प्रतीहारः' इत्यमरः । स शंभुः च अन्तः [ परमात्मसंज्ञम् ] परमात्मेति संज्ञा यस्य तत् परं मुख्यम् । 'परं दूरान्यमुख्येषु' इति यादवः । ज्योतिः दृष्ट्वा साक्षात्कृत्य योगात् ध्यानात् । 'योगः संनहनोपायध्यानसंगतियुक्तिषु ।' इत्यमरः । उपारराम उपारतः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् ॥

**ततो भुजङ्गाधिपतेः फणाग्रैरधः[7] कथंचिद्धृतभूमिभागः ।**
**शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥ ५९ ॥**

तत इति ॥ ततः भुजङ्गाधिपतेः शेषस्य फणाग्रैः अधः भूमेरधः कथंचित् अतियत्नेन धृतभूमिभागः धृतो भूमिभागः स्वोपवेशनभूभागो यस्य स तथोक्तः । वायुधारणाहितलाघवनिवृत्त्या भगवतो गुरुत्वादिति भावः । शनैः कृता प्राणानां प्राङ्निरुद्धानां विमुक्तिः पुनः संचारो येन स कृतप्राणविमुक्तिः ईशः निबिडं दृढं पर्यङ्कबन्धं वीरासनं बिभेद शिथिलीचकार ॥

**तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।**
**प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम्[8] ॥ ६० ॥**

तस्मा इति ॥ अथ नन्दी तस्मै भगवते । क्रियाग्रहणाच्चतुर्थी । प्रणिपत्य नमस्कृत्य शुश्रूषया सेवया निमित्तेन उपेताम् सेवार्थमागतामित्यर्थः । शैलसुतां शशंस निवेदयामास । भर्तुः स्वामिनः [ भ्रूक्षेपमात्रानुमतप्रवेशां ] भ्रूक्षेपमात्रेण भ्रूसंज्ञयैवानुमतप्रवेशामङ्गीकृतप्रवेशाम् एनां शैलसुतां प्रवेशयामास च ॥

**तस्याः सखीभ्यां प्रणिपातपूर्वं[9] स्वहस्तलूनः शिशिरात्ययस्य ।**
**व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥ ६१ ॥**

---

१ ह्रीमतिमा०, ह्रीतिमिवा. २ पुष्प-केतुः-धन्वा. ३ स्वकर्म. ४ आशशंस. ५ उपासितुं सा च पिनाकपाणिम्. ६ अन्तर्गतमा०. ७ फणाभिः. ८ अनुमित. ९ पत्य०, त्य मूर्ध्ना.

तस्या इति ॥ **तस्याः** पार्वत्याः **सखीभ्यां** पूर्वोक्ताभ्यां [**स्वहस्तलूनः**] स्वहस्तेन लूनः उपचितः **पल्लवभङ्गभिन्नः** किसलयशकलमिश्रः **शिशिरात्ययस्य** वसन्तस्य संबन्धी **पुष्पोच्चयः** पुष्पप्रकरः । 'हस्तादाने चेरस्तेये' इति घञ्विषयत्वात्कवीनामयं प्रामादिकः प्रयोगः इति वल्लभः । **त्र्यम्बकपादमूले** प्रणिपातपूर्वं नमस्कारपूर्वकं **व्यकीर्यत** विक्षिप्तः ॥

**उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।**
**चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥ ६२ ॥**

उमेति ॥ **उमा अपि** [**नीलालकमध्यशोभि**] नीलालकानां मध्ये शोभत इति तथोक्तम् । अलकन्यस्तमित्यर्थः । **नवकर्णिकारं विस्रंसयन्ती** [**कर्णच्युतपल्लवेन**] कर्णात् च्युतः पल्लवो यस्य तेन कर्णच्युतपल्लवेन **मूर्ध्ना वृषभध्वजाय प्रणामं चकार** । क्रियाग्रहणात्संप्रदानत्वम् ॥

**अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।**
**न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ॥ ६३ ॥**

अनन्येति ॥ **सा** कृतप्रणामा देवी **भवेन** हरेण । अन्यां न भजतीति तम् **अनन्यभाजम्** । 'भजो ण्विः' इति ण्विप्रत्ययः । सर्वनाम्नो वृत्तिमात्रे पूर्वपदस्य पुंवद्भावः । **पतिमाप्नुहीति तथ्यं** सत्यम् **एव अभिहिता** उक्ता । उत्तरत्र तथैव संभवादिति भावः । अभिदधातेर्ब्रुवर्थस्य दुहादित्वादप्रधाने कर्मणि क्तः । तथा हि । **ईश्वरव्याहृतयः** महापुरुषवाक्यः **कदाचित्** अपि **लोके** भुवने । 'लोकस्तु भुवने जने' इत्यमरः ॥ **विपरीतं** विसंवादिनम् **अर्थम्** अभिधेयं **न पुष्णन्ति** न बोधयन्तीत्यर्थः ॥

**कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।**
**उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥ ६४ ॥**

काम इति ॥ **कामस्तु बाणावसरं प्रतीक्ष्य** उमासंनिधानादयमेव बाणप्रयोगसमय इति ज्ञात्वा पतङ्गेन तुल्यं **पतङ्गवत्** शलभवत् । 'समौ पतङ्गशलभौ' इत्यमरः । 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः । **वह्निमुखं विविक्षुः** प्रवेष्टुमिच्छुः । विशतेः सन्नन्तादुप्रत्ययः । उमायाः समक्षमक्ष्णः समीपम् **उमासमक्षम्** । 'अव्ययीभावे शरत्प्रभृतिभ्यः' इति समासान्तोऽच्प्रत्ययः । [**हरबद्धलक्ष्यः**] हरे बद्धलक्ष्यः सन् । [**शरासनज्यां**] शरासनस्य ज्यां मौर्वीं **मुहुः आममर्श** परामृष्टवान् ॥

**अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।**
**विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥ ६५ ॥**

अथेति ॥ **अथ गौरी** । तपोऽस्यास्तीति तपस्वी । 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । तस्मै **तपस्विने गिरिशाय ताम्ररुचा** रक्तवर्णेन **करेण भानुमतः** अंशुमतः **मयूखैः विशोषितां** [**मन्दाकिनीपुष्करबीजमालाम्**]

१ भव्यम्. २ वाक्. ३ लक्ष्य.

मन्दाकिन्याः पुष्कराणि पद्मानि तेषां बीजानि तेषां मालां जपमालिकाम् उपानिन्ये समर्पितवती ॥

**प्रतिग्रहीतुं प्रणयिप्रियत्वात्त्रिलोचनस्तामुपचक्रमे च ।**
**संमोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥**

प्रतिग्रहीतुमिति ॥ **त्रिलोचनः च प्रणयिप्रियत्वाद्** अर्थिप्रियत्वात् **ताम्** अक्षमालां **प्रतिग्रहीतुं** स्वीकर्तुम् **उपचक्रमे** । पुष्पं धनुर्यस्य स **पुष्पधन्वा** कामः **च** । 'वा संज्ञायाम्' इत्यनङादेशः । संमोह्यतेऽनेनेति **संमोहनं नाम** । नामेति प्रसिद्धौ । **अमोघं बाणं** सायकं **धनुषि समधत्त** संहितवान् ॥

**हरस्तु किंचित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥६७॥**

हर इति ॥ **हरस्तु** हरोऽपि **चन्द्रोदयारम्भे अम्बुराशिः इव किंचित्** ईषत् **परिलुप्तधैर्यः** । न तु प्राकृतजनवदत्यन्तलुप्तधैर्य इति भावः । [ **बिम्बफलाधरोष्ठे** ] बिम्बफलतुल्योऽधरोष्ठो यस्य तस्मिन् **उमामुखे विलोचनानि व्यापारयामास** । त्रिभिरपि लोचनैः साभिलाषमद्राक्षीदित्यर्थः । एतेन भगवतो रतिभावोदय उक्तः ॥

**विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।**
**साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥६८॥**

विवृण्वतीति ॥ **शैलसुतापि स्फुरद्बालकदम्बकल्पैः** विकसत्कोमलनीपसदृशैः पुलकितैरित्यर्थः । 'ईषदसमाप्तौ—' इत्यादिना कल्पप्प्रत्ययः । **अङ्गैः भावं** रत्याख्यं **विवृण्वती** प्रकाशयन्ती **चारुतरेण पर्यस्तविलोचनेन** व्रीडाविभ्रान्तनेत्रेण **मुखेन** असाचि साचि संपद्यमाना **साचीकृता** तिर्यक्कृता । 'तिर्यगर्थे साचि तिरः' इत्यमरः । **तस्थौ** । ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः । न केवलं हरस्यैव देव्या अप्युदितो रतिभाव इति भावः ॥

**अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।**
**हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥**

अथेति ॥ **अथ** अयुग्मानि नेत्राणि यस्य सः **अयुग्मनेत्रः** त्रिनेत्रः **वशित्वात्** जितेन्द्रियत्वात् **इन्द्रियक्षोभं** पूर्वोक्तमिन्द्रियविकारं **पुनर्बलवत्** दृढं **निगृह्य** निवार्य **स्वचेतोविकृतेः** स्वचित्तविकारस्य **हेतुं** कारणं **दिदृक्षुः** द्रष्टुमिच्छुः **दिशाम् उपान्तेषु दृष्टिं ससर्ज** प्रसारयामास ॥

**स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।**
**ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥७०॥**

---

१ परिवृत्त. २ क्वचित्, कुचद्वा. ३ साचिक्रियाचा०. ४ निषक्त. ५ ईषत्स०. ६ वक्री.

स इति ॥ स भगवान् [ **दक्षिणापाङ्गनिविष्टमुष्टिं** ] दक्षिणापाङ्गे निविष्टा स्थिता मुष्टिर्यस्य तं **नतांसम्** [ **आकुञ्चितसव्यपादम्** ] आकुञ्चितः सव्यपादो यस्य तम् । आलीढाख्यस्थानके स्थितमित्यर्थः । **चक्रीकृतचारुचापं** मण्डलीकृतसौम्यकोदण्डं **प्रहर्तुम् अभ्युद्यतम् आत्मयोनिं** मनोभवं **ददर्श** । आलीढलक्षणमाह यादवः— 'स्थानानि धान्विनां पञ्च तत्र वैशाखमस्त्रियाम् । वितस्त्यन्तरगौ ( त्रिवितस्त्यन्तरौ ) पादौ मण्डलं तोरणाकृती ॥ समानौ ( अन्वर्थं ) स्यात्समपदमालीढं तु ततोऽग्रतः । दक्षिणे वाममाकुञ्च्य प्रत्यालीढं विपर्यये ॥' इति ॥

**तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।**
**स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥७१॥**

तप इति ॥ [ **तपःपरामर्शविवृद्धमन्योः** ] तपःपरामर्शेन तपस आस्कन्दनेन विवृद्धमन्योः प्रवृद्धकोपस्य [ **भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य** ] भ्रूभङ्गेण दुष्प्रेक्ष्यं दुर्दर्शं मुखं यस्य । **तस्य** हरस्य **तृतीयाद् अक्ष्णः स्फुरन्** उद्दीप्यमानः **उदर्चिः** उद्भूतज्वालः **कृशानुः** अग्निः **सहसा** अतर्कितमेव । 'अतर्किते तु सहसा' इत्यमरः । **निष्पपात किल** निश्चक्राम खलु ॥

**क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।**
**तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥७२॥**

क्रोधमिति ॥ हे **प्रभो** स्वामिन् **क्रोधं संहर संहर** निवर्तय निवर्तय । 'चापले द्वे भवत इति वक्तव्यम्' इति वार्तिकेन द्वित्वम् । 'संभ्रमेण प्रवृत्तिश्चापलम्' इति काशिका । **इति** एवं **मरुतां** देवानां **गिरः** वाचः **खे** व्योम्नि **यावत् चरन्ति** प्रवर्तन्ते **तावत्** तत्कालमेव भवस्य नेत्राज्जन्म यस्य स **भवनेत्रजन्मा** । 'अवज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपदः' इति वामनः । **स वह्निः मदनं** भस्मैवावशेषो यस्य तं **भस्मावशेषं चकार** । ददाहेत्यर्थः ॥

**तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।**
**अज्ञातभर्तृव्यसना मुहूर्तं कृतोपकारेव रतिर्बभूव ॥ ७३ ॥**

तीव्रेति ॥ **तीव्राभिषङ्गप्रभवेण** अतिदुःसहाभिभवसंभवेन । 'अभिषङ्गस्त्वभिभवे सङ्ग आक्रोशनेऽपि च ।' इति वैजयन्ती । **इन्द्रियाणां** चक्षुरादीनां **वृत्तिं** व्यापारं **संस्तम्भयता** प्रतिबध्नता **मोहेन** मूर्छया कर्त्रा । **रतिः** मदनभार्या । **मुहूर्तम्** [ **अज्ञातभर्तृव्यसना** ] अज्ञातं भर्तृव्यसनं भर्तृनाशो यया सा तथोक्ता सती **कृतोपकारा इव बभूव** । सहसा दुःखोपनिपातान्मुमूर्छेत्यर्थः । मोहेन दुःखसंवेदनाभावात्तस्योपकारकत्वोक्तिः ॥

**तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।**
**स्त्रीसंनिकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥ ७४ ॥**

---

१ दुष्प्रेक्ष्य. २ कोपं. ३ अथाशु. ४ रुज्य, वदह्य. ५ परिहर्तुकामः सोन्तऽर्दधे.

तमिति ॥ **तपस्वी** तपोनिष्ठः **भूतपतिः** शिवः **तपसः विघ्नम्** अन्तरायभूतं **तं** कामम् **आशु वज्रः** अशनिः **वनस्पतिं** वृक्षम् **इव अवभज्य** भङ्क्त्वा **स्त्रीसंनिकर्षं** स्त्रीसंनिधानं **परिहर्तुमिच्छन्**। तस्यानर्थहेतुत्वादिति भावः। **सभूतः** सगणः सन् **अन्तर्दधे** ॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथंचित् ॥ ७५ ॥

शैलात्मजेति ॥ **शैलात्मजा** पार्वती **अपि उच्छिरसः** उन्नतशिरसो महतः **पितुः अभिलाषं** हरो वरोऽस्त्विति मनोरथं **ललितं** सुन्दरम् **आत्मनः वपुः च व्यर्थं** निष्फलं **समर्थ्य** विचार्य **सख्योः समक्षं** पुरः **इति च** हेतुना अधिकं जातलज्जा [ **अधिकजातलज्जा** ]। समानजनसमक्षमवमानस्यातिदुःसहत्वादिति भावः। **शून्या** निरुत्साहा सती **कथंचित्** कृच्छ्रेण भवनस्याभिमुखी [ **भवनाभिमुखी** ] **जगाम** ॥

संपादि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत्पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद्वेगदीर्घीकृताङ्गः ॥ ७६ ॥

सपदीति ॥ **सपदि अद्रिः** हिमवान् [ **रुद्रसंरम्भभीत्या** ] रुद्रस्य संरम्भात्कोपाद्भीत्या। 'संरम्भः संभ्रमे कोपे' इति विश्वः। **मुकुलिताक्षीं** निमीलितनेत्राम्। 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः। 'षिद्गौरादिभ्यश्च' इति ङीष्। अनुकम्पितुमर्हाम् **अनुकम्प्याम्**। 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः। **दुहितरं दोर्भ्यामादाय** [ **दन्तलग्नां** ] दन्तयोर्लग्नां **पद्मिनीं** नलिनीं **बिभ्रत् सुरगज इव** [ **वेगदीर्घीकृताङ्गः** ] वेगेन रयेण दीर्घीकृताङ्ग आयतीकृतशरीरः सन्। पन्थानं प्रतिगता मार्गानुसारिणी गतिर्यस्य स **प्रतिपथगतिः आसीत्** ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनी-
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे
महाकाव्ये मदनदहनः नाम तृतीयः सर्गः ॥

---

१ समीक्ष्य. २ अभिमुखं. ३ अथ स. ४ दीर्घीकृतात्मा–ताभ्रः. ५ मदननिग्रहः.

मूर्च्छिता रतिरित्युक्तम् । संप्रति तद्वृत्तान्तमेवाह—

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥ १ ॥

अथेति ॥ **अथ** अनन्तरं मोहो मूर्च्छा परमयनमाश्रयो यस्याः सा **मोहपरायणा** मोहैकशरणा **सती** । 'परायणमभिप्रेते तत्परे परमाश्रये ।' इति यादवः- **विवशा** मूढत्वान्निश्चेष्टा **कामवधूः** रतिः । [ **असह्यवेदनम्** ] असह्या दुःसहा वेदना यस्मिंस्तत्तथोक्तम् । विधवाया गतभर्तृकाया भावो वैधव्यम् । नवं च तद्वैधव्यं चेति **नववैधव्यम्** । नवग्रहणं दुःसहत्वद्योतनार्थम् । **प्रतिपादयिष्यता** अनुभावयिष्यता । क्रियार्थक्रियायां लृट् । **विधिना** दैवेन । 'विधिर्विधाने दैवे च' इत्यमरः । **विबोधिता** । वैधव्यानुकूलोऽयं विधिरिति भावः । अस्मिन्सर्गे वियोगिनीवृत्तानि— 'विषमे ससजा गुरुः समे सभरा लोऽथ गुरुर्वियोगिनी ।' इति लक्षणात् ॥

अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥ २ ॥

अवेति ॥ **सा** रतिः [ **प्रलयान्तोन्मिषिते** ] प्रलयान्ते मूर्च्छावसाने । 'प्रलयो नष्टचेष्टता' इत्यमरः । उन्मिषिते उन्मीलिते **विलोचने** । अवधानं परं प्रधानं ययोस्ते **अवधानपरे** दिदृक्षयावहिते **चकार** । द्रष्टव्याभावात्तु न विवेदेत्याह—नेति ॥ **प्रियं** कामम् **अतृप्तयोः** तृप्तिं न गतयोः । नित्यदिदृक्षमाणयोरित्यर्थः । **तयोः** लोचनयोः । दर्शनक्रियापेक्षया संबन्धे षष्ठी । अत्यन्तविलुप्तं दर्शनं स्वलोचनयोः करणयोर्यस्य कर्मभूतस्य तम् **अत्यन्तविलुप्तदर्शनं** सन्तं **न विवेद** न ज्ञातवती । प्रियनाशापरिज्ञानाद्दिदृक्षां चक्रे इति तात्पर्यार्थः ॥

अयि जीवितनाथ जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥ ३ ॥

अयीति ॥ अयीति प्रश्ने । ' अयि प्रश्नानुनययोः ' इति विश्वः । **अयि जीवितनाथ जीवसि** प्राणिषि कच्चिद् **इति अभिधाय उत्थितया तया** रत्या **पुरः** अग्रे **क्षितौ** पुरुषस्य आकृतिरिवाकृतिर्यस्य तत् **पुरुषाकृति केवलं** एकं **हरकोपानलभस्म ददृशे** दृष्टम् । न तु पुरुष इति भावः ॥

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥ ४ ॥

अथेति ॥ **अथ** भस्मदर्शनानन्तरम् **पुनरेव विह्वला** विक्लवा **वसुधालिङ्गनधूसरस्तनी** वसुधालिङ्गनेन क्षितिलुण्ठनेन धूसरौ धूसरवर्णौ स्तनौ कुचौ यस्याः

१ निमग्न । २ कृतिः. ३ धूसराकृतिः.

सा तथोक्ता । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । **विकीर्णमूर्धजा** विकीर्णा विक्षिप्ता मूर्धजाः केशाः यस्याः सा तथोक्ता **सा** रतिः **स्थलीं** वनभूमिम्। तत्रत्यान्प्राणिन इत्यर्थः । 'जानपदकुण्डगोणस्थल'—इत्यादिना ङीष् । **समदुःखां** स्वतुल्यशोकां **कुर्वती इव विललाप** परिदेवितवती । 'विलापः परिदेवनम्' इत्यमरः ॥

**उपमानमभूद्विलासिनां करणं यत्तव कान्तिमत्तया ।**
**तदिदं गतमीदृशीं दशां न विदीर्ये कठिनाः खलु स्त्रियः ॥ ५ ॥**

उपेति ॥ **तव यत्करणं** गात्रम् । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।' इत्यमरः । **कान्तिमत्तया** सौन्दर्येण हेतुना **विलासिनां** विलसनशीलानां कामिनाम् । 'वौ कषलस'—इत्यादिना घिनुण्प्रत्ययः । उपमीयते येन तद् **उपमानम् अभूत्** । **तत् करणम् इदम् ईदृशीं दशाम्** अवस्थां **गतं** प्राप्तम् । भस्मीभूतमित्यर्थः । तथापि **न विदीर्ये** न विदीर्णा भवामि । कर्तरि लट् । तथा हि—**स्त्रियः कठिनाः खलु** । कठिनत्वादविदीर्यमाणत्वमित्यर्थः । कारणात्कार्यसमर्थनरूपोऽर्थान्तरन्यासः । 'धीरसंचारिणी दृष्टिर्गतिर्गोवृषभाञ्चिता । स्मितपूर्वं तथालापो विलास इति कीर्तितः ॥' इति ॥

**क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।**
**नलिनीं क्षतसेतुबन्धनो जलसंघात इवासि विद्रुतः ॥ ६ ॥**

क्वेति ॥ हे प्रिय । **क्षतसेतुबन्धनः** भग्नसेतुबन्धनः **जलसंघातः** जलौघः **नलिनीमिव** । जलैकायत्तजीवितामिति शेषः । **त्वदधीनजीवितां** त्वदायत्तप्राणां **मां क्व नु विनिकीर्य** कुत्र वा निक्षिप्य **क्षणभिन्नसौहृदः** क्षणत्यक्तसौहार्दः सन् । **विद्रुतः** पलायितः **असि** । नु विषादे । यथा पद्मिनीं परित्यज्य वारिपूरो गच्छति तथा मां विहाय गतोऽसीति । सौहृदस्य सेतुरुपमानम् । सेतुसौहृदयोः स्थितिहेतुत्वेन साम्यम् । सुहृदो भावः सौहृदम् । युवादित्वादण्प्रत्ययः । 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृदादेशः । अणि हृद्भावान्न 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । हृद्भूतस्याण्विधाने तूभयपदवृद्धिः स्यात् । यथा सुहृदो भावः सौहार्दमिति । तदेवाह वामनः—'सौहृददौर्हृदशब्दावाणि हृद्भावात्' इति ॥

**कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।**
**किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥ ७ ॥**

कृतेति ॥ हे प्रिय त्वं मे मम **विप्रियम्** अप्रियं **कृतवान् न असि** । **मया च ते** तव **प्रतिकूलम्** अप्रियं **न कृतम्** । परस्परजीवितस्य परस्पराधीनत्वात्कुतः परिभवशङ्केति भावः । **अकारणं** निष्कारणम् **एव** । परस्परापकाररूपकारणाभावेऽपीत्यर्थः । क्रियाविशेषणमेतत् । **विलपन्त्यै** । त्वद्दर्शनार्थिन्या अपीति भावः । **रतये किं** कर्थं **दर्शनं न दीयते** । क्रियाग्रहणाच्चतुर्थी ॥

---

१ च दीर्ये.

विप्रियमाशङ्कते—

**स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।**
**च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा[1] ॥ ८ ॥**

स्मरसीति ॥ हे **स्मर** । **गोत्रस्खलितेषु** नामव्यत्यासेषु । अन्यस्त्रीनाम्ना ममाह्वानेषु । 'गोत्रं नाम्न्यचले कुले' इति विश्वः । **मेखलागुणैः बन्धनं स्मरसि उत स्मरसि वा** । 'विकल्पे किं किमूत च' इत्यमरः । च्युतकेशरैर्भ्रष्टकिञ्जल्कैर्दूषिते ईक्षणे येषु तानि [ **च्युतकेशरदूषितेक्षणानि** ] **अवतंसोत्पलताडनानि** । सधूलिक्षेपताडनानीत्यर्थः । **स्मरसि वा** । अपकारस्मरणादिदमदर्शनमिति भावः ॥

**हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।**
**उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ ९ ॥**

हृदय इति ॥ **हृदये वससि इति** स्मरवाक्यानुवादः । इत्येवंरूपं **मत्प्रियं यदवोचः** उक्तवानसि । ब्रूञो लुङि 'वच उम्' इत्युमागमः । **तत्कैतवम् अवैमि** मिथ्येति मन्ये । **इदं** वचनम् **उपचारपदं** परस्य रञ्जनार्थं यदसत्यभाषणं स उपचारस्तस्य पदं स्थानम् । कैतवस्थानमिति यावत् । **न चेत् त्वमनङ्गः** अशरीरः **कथं रतिः अक्षता** अविनष्टा । आश्रयनाशेऽप्याश्रितमविनष्टमिति विरोधादिति भावः ॥

न च मे कश्चिद्विचारः किं तु लोकः शोच्यत इत्याह—

**परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।**
**विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥ १० ॥**

परलोकेति ॥ [ **परलोकनवप्रवासिनः** ] परलोकं प्रति नवप्रवासिनः अचिरप्रोषितस्य । अनेनानुगमनकालानतिपातः सूच्यते । **तव पदवीं** मार्गं **अहं प्रतिपत्स्ये** । त्वामनुगमिष्यामीत्यर्थः । अतो मे नास्ति विचार इति भावः । किं तु **विधिना** दैवेन **एष जनः** लोकः **वञ्चितः** प्रतारितः । **देहिनां सुखं त्वदधीनं** त्वय्यधीनं **खलु** । अधिशब्दस्य शौण्डादिकत्वात् 'सप्तमी शौण्डैः' इति समासः । 'अध्युत्तरपदात्' इति खप्रत्ययः । एवमन्यत्रापि । सुखप्रदाभावे कुतः सुखमिति भावः ॥

तदेवाह—

**रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।**
**वसतिं प्रिय कामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥ ११ ॥**

रजनीति ॥ हे **प्रिय** । [ **रजनीतिमिरावगुण्ठिते** ] रजनीतिमिरेण अवगुण्ठिते आवृते **पुरमार्गे घनशब्दविक्लवाः** गर्जितभीताः **प्रियाः** अभिसारिकाः **कामिनां वसतिं प्रापयितु त्वदृते** त्वां विना । 'अन्यारादितरर्ते'—इत्यादिना पञ्चमी । **कः ईश्वरः** शक्तः । न कश्चिदित्यर्थः । न हि कामान्धानां भीतिरस्तीति भावः ॥

---

[1] च.

**नयनान्यरुणानि घूर्णयन्वचनानि स्खलयन्पदे पदे।**
**असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना॥ १२॥**

नयनानीति॥ **अरुणानि नयनानि घूर्णयन्** भ्रमयन्। तथा **पदे पदे** प्रतिपदम्। वीप्सायां द्विरुक्तिः। **वचनानि स्खलयन्** विपर्यासयन्। **प्रमदानां वारुणीमदः** मद्यमदः **अधुना त्वयि असति विडम्बना** अनुकृतिमात्रम्। मदनाभावे मदस्य निष्फलत्वादिति भावः। तथा च शिशुपालवधे—'तां मदो दयितसङ्गमभूषः' (१०। ३३) इति॥

**अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः।**
**बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति॥ १३॥**

अवगम्येति॥ हे **अनङ्ग** अशरीर। **प्रियबन्धोः** प्रियसखस्य **तव वपुः** शरीरं **कथीकृतम्** अकथा कथा संपद्यमानं कृतं शब्दमात्रावशिष्टम् **अवगम्य** ज्ञात्वा **निष्फलोदयः**। उद्दीप्याभावादुद्दीपनवैफल्यमिति भावः। **निशाकरः** चन्द्रः **बहुले** कृष्णपक्षे **गते अपि तनुतां** कार्श्यं **दुःखं** यथा तथा कृच्छ्रात् **मोक्ष्यति**। वृथा वृद्धिरिति दुःखायिष्यत इत्यर्थः॥

**हरितारुणचारुबन्धनः कलपुंस्कोकिलशब्दसूचितः।**
**वद संप्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति॥ १४॥**

हरितेति॥ [ **हरितारुणचारुबन्धनः** ] हरितं च अरुणं च। 'वर्णो वर्णेन' इति तत्पुरुषः। हरितारुणं चारु बन्धनं वृन्तं पुङ्खश्च यस्य तथोक्तः। [ **कलपुंस्कोकिलशब्दसूचितः** ]। कलेन मधुरेण पुंस्कोकिलशब्देन पुरुषकोकिलनादेन सूचितोऽनुमापितश्च, चूतचर्वणकार्यत्वात्कलशब्दस्येति भावः। **नवचूतप्रसवः** नवचूतकुसुमं **संप्रति कस्य बाणतां** शरत्वं **गमिष्यति वद**। अन्यस्य पुष्पबाणस्याभावादिति भावः॥

**अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये[1] धनुषो नियोजिता।**
**विरुतैः[2] करुणस्वनैः[3]रियं गुरुशोकामनुरोदितीव माम्॥ १५॥**

अलीति॥ **त्वया अनेकशः** बहुशः **धनुषः** कार्मुकस्य **गुणकृत्ये** मौर्वीकार्ये गुणवत्कर्मणि च **नियोजिता** अधिकृता **इयम् अलिपङ्क्तिः करुणस्वनैः** दीनस्वनैः **विरुतैः** कूजितैः **गुरुशोकां** दुर्भरदुःखाम्। 'गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे।' इति शब्दार्णवः। **माम् अनुरोदिति इव**। उपसर्गात्सकर्मकत्वम्। 'रुदादिभ्यः सार्वधातुके' इतीडागमः।

**प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः।**
**रतिदूतिपदेषु[4] कोकिलां मधुरालापनिसर्गपण्डिताम्[5]॥ १६॥**

1 कृत्ये. 2 विततैः. 3 स्वरैः. 4 दूत. 5 कोकालम्...पण्डिताम्.

प्रतिपद्येति ॥ तावत्पुनरपि मनोहरं वपुः शरीरं प्रतिपद्य प्राप्य उत्थितः सन् [ मधुरालापनिसर्गपण्डिताम् ] । मधुरालापेषु प्रियोक्तिषु निसर्गपण्डितां स्वभावप्रगल्भां कोकिलां रतिदूतिपदेषु सुरतदूतीस्थानेषु आदिश आज्ञापय । प्रगल्भानामेव दौत्याधिकार इति भावः । ङीबन्तस्यापि दूतीशब्दस्य छन्दोभङ्गभयाद् ह्रस्वः । 'अपि माषं मषं कुर्याच्छन्दोभङ्गे त्यजेद्गिरम् ।' इति केचित् । 'उणादयो बहुलम्' इति बहुलग्रहणाद् ह्रस्व इति वल्लभः ॥

**शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।**
**सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे ॥ १७ ॥**

शिरसेति ॥ स्मर । शिरसा प्रणिपत्य याचितानि सवेपथूनि सकम्पानि । 'ट्वितोऽथुच्' इत्यथुच्प्रत्ययः । सात्त्विकान्तरोपलक्षणमेतत् । 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥' इति । उपगूढानि आलिङ्गनानि च । 'नपुंसके भावे क्तः । तानि अनुभूतप्रकाराणि ते रहः एकान्ते सुरतानि च संस्मृत्य मे शान्तिः न अस्ति । अत्र समानकर्तृकत्वं दुर्घटम् समानक्रियापेक्षास्तीति केचित् ॥

**रचितं रतिपण्डित त्वया स्वयमङ्गेषु ममेदमार्तवम् ।**
**ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥ १८ ॥**

रचितमिति ॥ हे रतिपण्डित रतिकुशल त्वया मम अङ्गेषु अवयवेषु स्वयं रचितम् । ऋतुरस्य प्राप्तः आर्तवं वासन्तम् । 'ऋतोरण्' इत्यण्प्रत्ययः । कुसुमप्रसाधनं पुष्पाभरणम् इदम् ध्रियते अवतिष्ठते । 'धृञ् अवस्थाने' इति धातोस्तौदादिकात्कर्तरि लट् । तव तत् प्रसाधकं चारु सुन्दरं वपुः तु न दृश्यते ॥

**विबुधैरसि यस्य दारुणैरसमाप्ते परिकर्मणि स्मृतः ।**
**तमिमं कुरु दक्षिणेतरं चरणं निर्मितरागमेहि मे ॥ १९ ॥**

विबुधैरिति ॥ दारुणैः क्रूरैः । प्राणान्तिके कर्मणि नियोगादिति भावः । विबुधैः देवैः । अनभिज्ञत्वं च ध्वन्यते । यस्य मच्चरणस्य परिकर्मणि प्रसाधने । 'परिकर्म प्रसाधनम्' इत्यमरः । असमाप्ते सति स्मृतः असि । तमिमं दक्षिणेतरं वामं मे चरणं निर्मितरागं रचितलाक्षारागं कुरु । एहि आगच्छ ॥

**अहमेत्य पतङ्गवर्त्मना पुनरङ्काश्रयिणी भवामि ते ।**
**चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे दिवि ॥ २० ॥**

अहमिति ॥ अहं पतङ्गवर्त्मना शलभमार्गेण । अग्निप्रवेशेनेत्यर्थः । 'पतङ्गः शलभे चाभौ मार्जारेऽर्के शरे खगे ।' इति वैजयन्ती । एत्य आगत्य पुनः ते अङ्काश्रयिणी उत्सङ्गवर्तिनी भवामि संप्रत्येव भविष्यामि । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् ।

१ नवं. २ स्वमनङ्ग०, राप यन्मुदा०-तदिमं. ३ प्रति०. ४ श्रयिणी. ५ विलुप्यसे; विकल्प्यसे.

हे प्रिय । दिवि स्वर्गे चतुरैः सुरकामिनीजनैः अप्सरोगणैः यावन्न विलोभ्यसे विलोभयिष्यसे । 'यावत्पुरानिपातयोर्लट्' इति लट् ॥

**मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति मे ।**
**वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥ २१ ॥**

मदनेनेति ॥ हे **रमण** । **त्वामनुयामि यद्यपि** अनुगमिष्याम्येव । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । 'यद्यपीत्यवधारणे' इति केशवः । किं तु **रतिः मदनेन विनाकृता** । वियोजिता सतीत्यर्थः । सुप्सुपेति समासः । **क्षणमात्रं जीविता किल इति इदं वचनीयं** निन्दा **मे** मम **व्यवस्थितं** स्थिरमभूत् ॥

**क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।**
**सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥ २२ ॥**

क्रियतामिति ॥ [ **परलोकान्तरितस्य** ] परलोकेऽन्तरितस्य व्यवहितस्य । मृतस्येत्यर्थः । **ते** तव **मया अन्त्यमण्डनं कथं** केन प्रकारेण **क्रियताम्** । क्रियतामित्यत्र कामचारे लोट् बोध्यः । हुतदग्धस्य ते यथेच्छमण्डनमपि न संभवतीत्यर्थः । कुतः । **अङ्गेन च जीवितेन च समं** सह एव **अतर्किताम्** अविचारितां **गतिं गतोऽसि** । इह मृतशरीरमपि नास्ति कस्य मण्डनमिति भावः ॥

**ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।**
**मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥ २३ ॥**

ऋजुतामिति ॥ **शरम् ऋजुताम्** आर्जवं **नयतः** [ **उत्सङ्गनिषण्णधन्वनः** ] उत्सङ्गे निषण्णमङ्कगतं धनुर्यस्य तस्य । 'धनुषश्च' इत्यनङादेशः । **ते** तव **मधुना** वसन्तेन **सह** । 'मधुर्दैत्ये वसन्ते च चैत्रे च' इति विश्वः । **सस्मितां कथाम्** आलापं तथा **यत् नयनोपान्तविलोकितम्** अपाङ्गवीक्षणम् । ते इत्यनुषङ्गः । तत् **च स्मरामि** ॥

**क्व नु ते हृदयंगमः सखा कुसुमायोजितकार्मुको मधुः ।**
**न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥ २४ ॥**

क्वेति ॥ हृदयं गच्छतीति **हृदयंगमः** हृद्यः । 'खच्प्रकरणे गमेः सुप्युपसंख्यानम्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । **ते** तव **सखा** [ **कुसुमायोजितकार्मुकः** ] कुसुमैरायोजितमारचितं कार्मुकं येन । कार्मुकनिर्माता **मधुः** वसन्तः **क्व नु** क्व वा । गत इति शेषः । अथ वा **सः अपि उग्ररुषा** तीव्रकोपेण **पिनाकिना** ईश्वरेण [ **सुहृद्गतां** ] सुहृदा मदनेन गतां प्राप्तां **गतिम्** । भस्मतामित्यर्थः । **न गमितः खलु** न प्रापितः किम् । 'जिज्ञासानुनये खलु' इत्यमरः ॥

---

१ जीवतीति. २ भ्रियते. ३ कत्वरितस्य. ४ निषङ्ग, निषक्त; ५ विलोकितानि च. ६ तत्.

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ २५ ॥

अथेति ॥ अथ तैः परिदेविताक्षरैः विलापवचनैः हृदये दिग्धशरैः विषलिप्तमुखैः शरैः इव आहतः सन् । 'विषाक्ते दिग्धलिप्तकौ' इत्यमरः । मधुः वसन्तः आतुराम् आपन्नां रतिम् अभ्युपपत्तुम् अनुग्रहीतुम् । आश्वासयितुमित्यर्थः । 'अभ्युपपत्तिरनुग्रहः' इत्यमरः । आत्मानं पुरः अदर्शयत् । आविरभूदित्यर्थः ॥

तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥ २६ ॥

तमिति ॥ सा रतिः तं मधुम् अवेक्ष्य दृष्ट्वा भृशं रुरोद । स्तनौ संबाध्य स्तनसंबाधम् । 'परिक्लिश्यमाने च' इति णमुल् । उरः जघान ताडितवती च । तथा हि । स्वजनस्य अग्रतः दुःखं [ विवृतद्वारं ] विवृतमपसारितं द्वारं कपाटं यस्य तत् इव उपजायते आविर्भवति । उच्छृङ्खलं प्रवर्तत इत्युत्प्रेक्षाभिप्रायः ॥

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥ २७ ॥

इतीति ॥ दुःखमस्याः संजातं दुःखिता । संजातदुःखेत्यर्थः । तारकादित्वादितच् । सा रतिः एनं वसन्तम् इत्युवाच च । चकारः पूर्वोक्तसमुच्चयार्थः । हे वसन्त पश्य । सुहृदः त्वत्सखस्य किं स्थितं किमुपस्थितम् । तद् इदं कपोतकर्बुरं पारावतशबलं कणशः चूर्णीभूतम् । अल्पार्थाच्छस्प्रत्ययः । भस्म पवनैः विकीर्यते विक्षिप्यते । पश्य भस्मीभूतस्ते सुहृदित्यर्थः ॥

अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥ २८ ॥

अयीति ॥ अयि स्मर संप्रति दर्शनं देहि । एष माधवः वसन्तः पर्युत्सुकः त्वद्दर्शनोत्कण्ठितः । त्वामप्यनादृतवतोऽस्य को माधव इत्याशङ्क्याह—नृणां पुरुषाणां दयितासु प्रेम अनवस्थितम् अस्थिरम् । चलमित्यर्थः । सुहृज्जने प्रेम तु न चलं खलु ॥

ईदृशाः सुहृदः कति न सन्तीत्याशङ्क्य न कोऽपीत्याह —

अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतन्तुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः ॥ २९ ॥

अमुनेति ॥ ननु मदन । पार्श्ववर्तिना सहचरेण अमुना वसन्तेन ससुरासुरं सुरासुरसहितं जगत् बिसतन्तुगुणस्य मृणालसूत्रमौर्वीकस्य [ पेलवपुष्पप-

१ दिग्धफलैः. २ इवार्दितः; वार्पितः. ३ अभ्यवप०. ४ गुरु. ५ सुहृदं. ६ यद्, ७ प्रकीर्यते. ८ कापित्थक०; पाण्डुरम्. ९ सुहृत्सु चंचलम्. १० कोमल, पेशल.

त्रिणः ] पेलवानि कोमलानि पुष्पाण्येव पत्त्रिणो बाणा यस्य तस्य तव **धनुषः आज्ञां कारितम्** । जगदाज्ञाकारितेत्यर्थः । 'हृक्रोरन्यतरस्याम्' इति जगतः कर्मत्वम् ॥

**गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।**
**अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम् ॥ ३० ॥**

गत इति ॥ **स ते सखा अनिलाहतः** वायुताडितः **दीपः इव गत एव न निवर्तते** । **अहमस्य** दीपायमानस्य **दशा** वर्तिः **इव** । तिष्ठामीति शेषः । 'दशा वर्ताववस्थायां वस्त्रान्ते स्युर्दशा अपि ।' इति विश्वः । कुतः । **अविषह्यव्यसनेन** सोढुमशक्यदुःखप्रकर्षेण **धूमितां** संजातधूमां **मां पश्य** । धूमवत्त्वान्नष्टदीपदशासाम्यं धूमश्च व्यसनमेवेत्यर्थः । वर्तिरपि दीपे नष्टे धूमिता भवति ॥

**विधिना कृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।**
**अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥ ३१ ॥**

विधिनेति ॥ **ननु** वसन्त **कामवधे** मदनवधे **मां विमुञ्चता** वर्जयता । अमारयतेत्यर्थः । **विधिना** दैवेन । विशसति हिनस्तीति विशसो घातुकः । पचाद्यच् । विशसस्य कर्म वैशसम् । युवादित्वादण्प्रत्ययः । **अर्धवैशसम्** अर्धवधः **कृतम्** । 'अर्धो वा एष आत्मनो यत्पत्नी' इति श्रुतेः । पत्युः स्वस्य चाश्रयाश्रयीभूतयोरेकपदार्थत्वाभिप्रायेणार्धोक्तिः । तथा चैकदेशवधे देशान्तरस्यापि वधनियमनान्मामपि विधिरघ्नन्नेव हतवानिति तात्पर्यम् । एतदेवोपपादयति—**अनपायिनि** अनपायित्वेन विश्वस्ते **संश्रयद्रुमे** आश्रयवृक्षे **गजभग्ने** सति **वल्लरी** लता **पतनाय** भवतीति शेषः । पतितुमेव सालमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ॥

**तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।**
**विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥ ३२ ॥**

तदिति ॥ **तत्** तस्मात्कारणादुक्तप्रकारेण । अन्यथापि मरणस्यावश्यंभावादित्यर्थः । **अनन्तरं भवता इदं** वक्ष्यमाणं **बन्धुजनप्रयोजनं** बन्धुकृत्यं **क्रियताम्** । प्रार्थनायां लोट् । तदेवोपदिशति—**ननु** वसन्त । **विधुरां** विवशां **मां ज्वलनातिसर्जनात्** अग्निदानात् **पत्युः अन्तिकं प्रापय** । अग्निप्रवेशनं कारयेत्यर्थः ॥

कर्तव्यश्चायमर्थः स्त्रीणामित्याह—

**शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते ।**
**प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥ ३३ ॥**

शशिनेति ॥ **कौमुदी** चन्द्रिका **शशिना सह याति** । शशिन्यस्तमिते स्वयं नश्यतीत्यर्थः । **तडित्** सौदामनी **मेघेन सह प्रलीयते** प्रणश्यति । कर्तरि लट् । **प्रमदा**

१ व्यसनप्रधूमिताम्. २ मध. ३ वधेऽपि मु०. ४ अनघापि हि; अक्षतापि हि. ५ संश्रिता द्रुमे. ६ दनु. ७ भर्तुः. ८ विलीयते.

स्त्रियः पतिवर्त्म गच्छन्तीति **पतिवर्त्मगाः** पतिमार्गानुगामिन्यः **इति** एतत् **विचेतनैः** अल्पचेतनैः **अपि** । अविवेकिभिरपीत्यर्थः । नाथस्तु पृथग्जनैरिति पपाठ । **प्रतिपन्नं** ज्ञातं **हि** । 'अलवणा यवागूः ' ' अनुदरा कन्या ' इतिवदल्पत्वाभिप्रायेण विचेतनैरपीति निर्देशः । पतिवर्त्मगा इत्यत्र स्मृतिः—' आर्तार्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥ ' इति ॥

**अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।**
**नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥ ३४ ॥**

अमुनेति ॥ **अमुना** पुरोवर्तिना **सुभगेन** शोभनेन **प्रियगात्रभस्मना एव** । एवकारो मण्डनान्तरनिवृत्त्यर्थः । **कषायितस्तनी** रञ्जितस्तनी । ' रागे क्वाथे कषायोऽस्त्री निर्यासे सौरभे रसे । ' इति वैजयन्ती । **नवपल्लवसंस्तरे यथा** नवपल्लवतल्प इव **विभावसौ** वह्नौ **तनुं** शरीरं **रचयिष्यामि** । निधास्यामीत्यर्थः ॥

**कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।**
**कुरु संप्रति तावदाशु मे प्रणिपाताञ्जलियाचितश्चिताम् ॥ ३५ ॥**

कुसुमेति ॥ हे **सौम्य** साधो । **त्वम् आवयोः** रतिपञ्चबाणयोः **बहुशः** बहुवारं **कुसुमास्तरणे** पुष्पशयने **सहायतां गतः** । **संप्रति** [ **प्रणिपाताञ्जलियाचितः** ] प्रणिपाताञ्जलिना याचितः अञ्जलिपूर्वकं प्रार्थितः सन्नित्यर्थः । **आशु तावत् मे चितां** काष्ठचयं **कुरु** कुरुष्व । यथेह तथामुत्रोपकर्तव्यं मित्रेणेत्यर्थः ॥

**तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।**
**विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना ॥ ३६ ॥**

तदन्विति ॥ **तत्** चिताकरणम् **अनु** अनन्तरं मय्यर्पितं **मदर्पितं ज्वलनम्** अग्निं **दक्षिणवातवीजनैः** मलयमारुतसंचारणैः **त्वरयेः** । त्वरितं ज्वलयेत्यर्थः । त्वराहेतुमाह—**ते** तव **विदितं खलु** । ' मतिबुद्धिपूजार्थेभ्यश्च ' इति वर्तमाने क्तः । तद्योगात्कर्तरि षष्ठी । **यथा** येन प्रकारेण **स्मरः मां विना क्षणम् अपि न उत्सहते** न हृष्यति । तथा त्वया ज्ञातमेवेत्यर्थः ॥

**इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।**
**अविभज्य परत्र तं[3] मया सहितः पास्यति ते स बान्धवः ॥ ३७ ॥**

इतीति ॥ **अपि च इति** एवं **विधाय** कृत्वा **नौ** आवाभ्याम् **एक एव सलिलस्याञ्जलिः दीयताम्** । **तम् अञ्जलिं स ते बान्धवः** सखा स्मरः **परत्र** परलोके **मया सहितः अविभज्य पास्यति** ॥

**परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।**
**निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥ ३८ ॥**

---

१ विनि० याचितां. २ मद्विना. ३ तत्.

परलोकेति ॥ किं च । माधव वसन्त । परलोकविधौ पिण्डोदकादिकर्मणि स्मरम् उद्दिश्य [ विलोलपल्लवाः ] विलोलाः पल्लवाः यासु ताः सहकारमञ्जरीः चूतवल्लरीः निवपेः देहि । हि यस्मात्कारणात् ते सखा स्मरः [ प्रियचूतप्रसवः ] प्रियाः चूतप्रसवा यस्य स तथोक्तः ॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥ ३९ ॥

इतीति ॥ इति [ देहविमुक्तये ] देहस्य विमुक्तये शरीरस्य विसर्गाय स्थिताम् । कृतनिश्चयामिति यावत् । रतिम् आकाशभवा सरस्वती अशरीरा वाक् ह्रदशोषविक्लवां ह्रदस्य जलाधारस्य शोषेण विक्लवां शफरीं प्रोष्ठीम् । ' प्रोष्ठी तु शफरी द्वयोः ' इत्यमरः । प्रथमा वृष्टिः वर्षम् इव अन्वकम्पयत् अनुकम्पितवती । सदयमुवाचेत्यर्थः । ' कृपा दयानुकम्पा स्यात् ' इत्यमरः ॥

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि ॥ ४० ॥

कुसुमेति ॥ हे कुसुमायुधपत्नि रते । तव भर्ता चिरात् चिरं दुर्लभः न भविष्यति । किं त्वचिरमेव सुलभो भविष्यतीत्यर्थः । शृणु । तत्कर्मेति शेषः । येन कर्मणा स ते भर्ता [ हरलोचनार्चिषि ] हरलोचनस्यार्चिर्ज्वाला । ' ज्वालाभासो न पुंस्यर्चिः ' इत्यमरः । तस्मिन् शलभत्वं गतः । ' समौ पतङ्गशलभौ ' इत्यमरः ॥

तदेव कर्मोपाचष्टे—

अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥ ४१ ॥

अभिलाषमिति ॥ उदीरितेन्द्रियः प्रेरितेन्द्रियः । स्मरेणेति शेषः । प्रजापतिः ब्रह्मा स्वसुतायां सरस्वत्याम् अभिलाषम् अनुरागम् अकरोत् । अथ तेन प्रजापतिना विक्रियाम् इन्द्रियविकारं निगृह्य निरुध्य अभिशप्तः सन् । एतत्फलम् दाहात्मकं स्वकर्मफलम् अन्वभूत् ॥

शापावधिरपि तेनैवोक्त इत्याह श्लोकद्वयेन—

परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति ॥ ४२ ॥

इति चाह स धर्मयाचितः स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥ ४३ ॥

परिणेष्यतीति ॥ इतीति च ॥ [ धर्मयाचितः ] धर्मेण धर्माख्यप्रजापतिना याचितः प्रार्थितः स ब्रह्मा भगवान् तपसा करणेन [ तत्प्रवणीकृतः ] तस्यां पार्वत्यां प्रवणीकृ-

१ स्थिराम्. २ विह्वलाम्. ३ अन्वकम्पत. ४ हरलोचनार्चिषाम्. ५ स योजयिष्यति, समथयिष्यति. ६ ०चारिणि. ७ स्मरशापान्तभवां, सधर्मचारिणीं स्मरशापान्तभवा सरस्वती.

तोऽभिमुखीकृतः **हरः** शिवः **यदा पार्वतीं परिणेष्यति** उद्वक्ष्यति । **तदा उपलब्धसुखः** प्राप्तानन्दः सन् । **स्मरं** कामं **स्वेन वपुषा नियोजयिष्यति ।** संगमयिष्यति । **इति** एवं [ **स्मरशापावधिदां** ] स्मरशापस्यावधिदामवसानदायिनीं **सरस्वतीं** वाचं **च आह** । एवं शापावधिमप्युक्तवानित्यर्थः । ननु तथा क्रुद्धस्य कथमीदृशी शान्तिरत आह—**वशिनः** जितेन्द्रियाः **च अम्बुधराः च अशनेः अमृतस्य च** इति **उभयोः योनयः** प्रभवाः । वशिपक्षेऽशन्यमृतशब्दौ कोपप्रसादपरौ । अन्यत्र वैद्युताग्न्युदकपरौ ॥ युग्मकम् ॥

**तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।**
**रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥ ४४ ॥**

तदिति ॥ हे **शोभने तत्** तस्मात्कारणात् [ **भवितव्यप्रियसंगमं** ] भवितव्यो भविष्यन्प्रियसंगमो यस्य तत्तथोक्तम् **इदं वपुः परिरक्ष** । तथा हि । **रविपीतजला नदी तपात्यये** प्रावृषि । ' प्रावृट् तपात्यये ' इति हलायुधः । **पुनः ओघेन** प्रवाहेण **युज्यते** संगच्छते **हि** ॥

**इत्थं रतेः किमपि भूतमदृश्यरूपं मन्दीचकार मरणव्यवसायबुद्धिम् ।**
**तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनामाश्वासयत्सुचरितार्थपदैर्वचोभिः ॥ ४५ ॥**

इत्थमिति ॥ **इत्थम्** अनेन प्रकारेण **अदृश्यरूपं किमपि भूतं** कश्चित्प्राणी । ' युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु । ' इत्यमरः । **रतेः** मदनदाराणां **मरणव्यवसायबुद्धिं** मरणोद्योगबुद्धिं **मन्दीचकार** । निवारयामासेत्यर्थः । ' मूढाल्पापटुनिर्भाग्या मन्दाः ' इत्यमरः । अथ **कुसुमायुधबन्धुः** वसन्तः **च तत्प्रत्ययात्** तस्मिन्भूते विश्वासात् । 'प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु । ' इत्यमरः । **एनां** रतिं [ **सुचरितार्थपदैः** ] सुष्ठु चरितार्थानि पदानि येषां तैः **वचोभिः** वाक्यैः **आश्वासयत्** । सर्वथा ते देवताप्रसादात्प्रियसंगमो भविष्यतीत्यादिवचनैरस्या दुःखमपाचकारेत्यर्थः ॥

**अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयांबभूव ।**
**शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥ ४६ ॥**

अथेति ॥ **अथ** अनन्तरं [ **व्यसनकृशा** ] व्यसनेन दुःखेन कृशा **मदनवधूः** रतिः **उपप्लवान्तं** विपदवधिं [ **किरणपरिक्षयधूसरा** ] किरणपरिक्षयेण धूसरा मलिना **दिवातनस्य** दिनभवस्य । ' सायंचिरम् '–इत्यादिना ट्युप्रत्ययः । **शशिनः** चन्द्रस्य **लेखा प्रदोषं** रात्रिम् **इव परिपालयांबभूव** प्रतीक्षांचक्रे । पुष्पिताग्रावृत्तम् । ' अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । ' इति लक्षणात् ॥

**इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया**
**संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ**
**कुमारसंभवे महाकाव्ये रतिविलापः नाम चतुर्थः सर्गः ॥**

---

१ अपि वीत० २ पूर्यते. ३ एताम्. ४ समभिवृद्धरसैः. ५ प्रतिपाल०. ६ रेखा. ७ दिनान्तम्.

# पञ्चमः सर्गः ।

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥ १ ॥

तथेति ॥ पर्वतस्यापत्यं स्त्री **पार्वती तथा** तेन प्रकारेण अक्ष्णोः समीपे **समक्षं** पुरतः । 'अव्ययं विभक्तिसमीपसमृद्धि'-इत्यादिनाव्ययीभावः । **मनोभवं** मन्मथं **दहता** भस्मीकुर्वता **पिनाकिना** ईश्वरेण [ **भग्नमनोरथा** ] भग्नः खण्डितो मनोरथः अभिलाषो यस्याः सा तथोक्ता **सती हृदयेन** मनसा **रूपं** सौन्दर्यं **निनिन्द** । धिङ् मे रूपं यद्धरमनोहरणाय नालमिति गर्हितवतीत्यर्थः । युक्तं चैतदित्याह-तथा हि । **चारुता** सौन्दर्यं **प्रियेषु** पतिषु विषये [ **सौभाग्यफला** ] सौभाग्यं प्रियवाल्लभ्यं फलं यस्याः सा तथोक्ता । सौन्दर्यस्य तदेव फलं यद्भर्तृसौभाग्यं लभ्यते । नो चेद्विफलं तदिति भावः । अस्मिन्सर्गे वंशस्थं वृत्तम्—'जतौ तु वंशस्थमुदीरितं जरौ' इति लक्षणात् ॥

इयेष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः ॥ २ ॥

इयेषेति ॥ **सा** पार्वती **समाधिम्** एकाग्रताम् **आस्थाय** अवलम्ब्य **तपोभिः** वक्ष्यमाणनियमैः करणभूतैः **आत्मनः** स्वस्य **अवन्ध्यरूपतां** सफलसौन्दर्यं **कर्तुम् इयेष** इच्छति स्म । तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः । **अन्यथा** ततोऽन्यप्रकारेण **कथं वा** तत् **द्वयम् अवाप्यते** । किं तद् द्वयम् । तथाभूता विधा प्रकारो यस्य तत् **तथाविधं प्रेम** स्नेहः । येनार्धाङ्गहरा हरस्य भवेदिति भावः । **तादृशः पतिश्च** । यो मृत्युंजय इति भावः । द्वयमेव खलु स्त्रीणामपेक्षितं यद्भर्तृवाल्लभ्यं जीवद्भर्तृकत्वं चेति । तच्च तपश्चर्यैकसाध्यमिति निश्चिकायेत्यर्थः । अत्र मनुः-' यद्दुष्करं यद्दुरापं यद्दुर्गं यच्च दुस्तरम् । तत्सर्वं तपसा प्राप्यं तपो हि दुरतिक्रमम् ॥ ' इति ॥

निशम्य चैनां तपसे कृतोद्यमां सुतां गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥ ३ ॥

निशम्येति ॥ **मेना** मेनका च **गिरीशप्रतिसक्तमानसां** हरासक्तचित्तां **तपसे** तपश्चरणाय **कृतोद्यमां** कृतोद्योगां **सुतां निशम्य** श्रुत्वा **एनां** पार्वतीं **वक्षसा परिरभ्य** आलिङ्ग्य **महतः मुनिव्रतात्** तपसः **निवारयन्ती उवाच** । मुनिव्रतादित्यत्र यद्यपि मुनिव्रतस्य मेनकाया अनीप्सितत्वात् ' वारणार्थानामीप्सितः ' इति नापादानत्वं तथापि कृतोद्यमामिति मानसप्रवेशोक्तत्वात् ' ध्रुवमपायेऽपादानं ' इत्यपादानत्वमेव स्यात् । यथाह भाष्यकारः—' यच्च मिथ्या संप्राप्य निवर्तते तच्च ध्रुवमपायेऽपादानम् इति प्रसिद्धम् । ' इति ॥

---

१ प्रिये सुसौ०. २ कामतां. ३ तत्. ४ गिरीशं प्रति सक्त०, त्रिनेत्रं प्रतिसक्त.

सामान्यनिषेधमुक्त्वा विशेषनिषेधमाह—

**मनीषिताः सन्ति गृहेषु देवतास्तपः क्व वत्से क्व च तावकं वपुः ।**
**पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥ ४ ॥**

मनीषिता इति ॥ हे **वत्से** । मनस ईषिता इष्टाः **मनीषिताः** । शकन्ध्वादित्वात्साधुः । **देवताः** शच्यादयः **गृहेषु सन्ति** । त्वं ता आराधयेति शेषः । **तपः क्व** । तवेदं **तावकम्** । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यणप्रत्ययः । 'तवकममकावेकवचने' इति तवकादेशः । **वपुः च क्व** । तथा हि । **पेलवं** मृदुलं **शिरीषपुष्पं भ्रमरस्य** भृङ्गस्य **पदं** पदस्थितिं **सहेत** । **पतत्रिणः पुनः** पक्षिणस्तु पदं **न** सहेत । अतिसौकुमार्याद्दिव्योपभोगयोग्यं ते वपुर्न दारुणतपःक्षममित्यर्थः । अत्र दृष्टान्तालंकारः ॥

**इति ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् ।**
**क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत् ॥ ५ ॥**

इतीति ॥ **इति** एवम् **अनुशासती** उपदिशन्ती **मेना ध्रुवेच्छां** स्थिरव्यवसायां **सुतां** पार्वतीम् **उद्यमात्** उद्योगात्तपोलक्षणात् **नियन्तुं** निवारयितुं **न शशाक** समर्था नाभूत् । तथा हि । [ **ईप्सितार्थस्थिरनिश्चयं** ] इष्टार्थे इप्सितार्थे स्थिरनिश्चयं **मनः निम्नाभिमुखं पयः च कः प्रतीपयेत्** प्रतिकूलयेत् । प्रतिनिवर्तयेदित्यर्थः । निम्नप्रवणं पय इवेष्टार्थाभिनिविष्टं मनो दुर्वारमिति भावः । अत्र दीपकानुप्राणितः अर्थान्तरन्यासोऽलंकारः ॥

**कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।**
**अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥ ६ ॥**

कदाचिदिति ॥ अथ **कदाचित् मनस्विनी** स्थिरचित्ता **सा** पार्वती **मनोरथज्ञम्** अभिलाषाभिज्ञं **पितरं** हिमवन्तम् [ **आसन्नसखीमुखेन** ] आसन्नसख्याप्तसखी सैव मुखमुपायः । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ।' इति विश्वः । तेन । [ **फलोदयान्ताय** ] फलोदयः फलोत्पत्तिरन्तोऽवधिर्यस्य तस्मै **तपःसमाधये** तपोनियमार्थम् **आत्मनः** स्वस्य **अरण्यनिवासं** वनवासम् **अयाचत** । 'दुह्याच्–' इत्यादिना द्विकर्मकत्वम् ॥

**अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।**
**प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरी शिखरं शिखण्डिमत् ॥ ७॥**

अथेति ॥ **अथ गौरी** [ **अनुरूपाभिनिवेशतोषिणा** ] अनुरूपेण योग्येन अभिनिवेशेनाग्रहेण तुष्यतीति तथोक्तेन **गरीयसा** पूज्यतमेन **गुरुणा** पित्रा **कृताभ्यनुज्ञा** तपः कुर्विति कृतानुमतिः सती **पश्चात्** तपःसिद्ध्युत्तरकालं **प्रजासु**

१° तायार्चे, पिता अर्च. २ गृहेंअपि. ३ स्थिरे°, व्रते°, श्रुते°.

जनेषु **तदाख्यया** तस्या गौर्याः संज्ञया **प्रथितम्**। गौरीशिखरमिति प्रसिद्धमित्यर्थः। **शिखण्डिमत्**। न तु हिंस्रप्राणिप्रचुरमिति भावः। **शिखरं** शृङ्गं **जगाम** ययौ॥

**विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम्[1]।**
**बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति॥ ८॥**

विमुच्येति॥ **अहार्यनिश्चया** अनिवार्यनिश्चया **सा** गौरी [**विलोलयष्टिप्रविलुप्तचन्दनम्**] विलोलाभिश्चलाभिर्यष्टिभिः प्रतिसरैः प्रविलुप्तं प्रमृष्टं चन्दनं स्तनान्तरगतं येन तं तथोक्तं **हारं** मुक्तावलीं **विमुच्य** विहाय **बालारुणबभ्रु** बालार्कपिङ्गलं [**पयोधरोत्सेधविशीर्णसंहति**] पयोधरयोः स्तनयोरुत्सेधेनोच्छ्रायेण विशीर्णा विघटिता संहतिरवयवसंश्लेषो यस्य तत्तथोक्तं **वल्कलं** कण्ठलम्बि स्तनोत्तरीयभूतं **बबन्ध**। धारयामासेत्यर्थः॥

**यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम्।**
**न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते॥ ९॥**

यथेति॥ तस्या देव्या आननं **तदाननं प्रसिद्धैः** भूषितैः। 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः। रोहन्तीति रुहाः। 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः। शिरसि रुहास्तैः **शिरोरुहैः** मूर्धजैः **यथा मधुरं** प्रियम् **अभूत्**। 'स्वादुप्रियौ तु मधुरौ' इत्यमरः। **जटाभिः अपि एवं** मधुरमभूत्। तथा हि। **पङ्कजं** पद्मं **षट्पदश्रेणिभिः** भ्रमरपङ्क्तिभिः **एव न** किं तु सह शैवलासङ्गेन **सशैवलासङ्गम् अपि**। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः। **प्रकाशते**। शैवलेनापि शोभत एवेत्यर्थः॥

**प्रतिक्षणं सा कृतरोमविक्रियां[3] व्रताय मौञ्जीं त्रिगुणां[4] बभार याम्।**
**अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम्॥ १०॥**

प्रतीति॥ **सा** देवी **प्रतिक्षणं** क्षणे क्षणे **कृतरोमविक्रियां** पारुष्यात्कृतरोमाञ्चां **त्रिगुणां** त्रिरावृत्तां **यां मौञ्जीं** मुञ्जमयीं मेखलां **व्रताय** तपसे **बभार**। [**तत्पूर्वनिबद्धया**] तदेव पूर्वं प्रथमं यस्य तत्पूर्वं यथा तथा निबद्धया **तया** मौञ्ज्या **अस्याः** देव्याः [**रसनागुणास्पदम्**] रसनागुणस्यास्पदं स्थानं जघनम्। सह रागेण **सरागं** सलोहितम् **अकारि** कृतम्। सौकुमार्यातिशयादिति भावः॥

**विसृष्टरागादधरान्निवर्तितः[5] स्तनाङ्गरागारुणिताच्च कन्दुकात्[6]।**
**कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः॥ ११॥**

विसृष्टेति॥ **तया** देव्या **विसृष्टरागात्** त्यक्तलाक्षारसरञ्जनात् **अधरात्** अधरोष्ठात् **निवर्तितः**। निसृष्टरागात् इति पाठे नितरां त्यक्तलाक्षारागात्। रागत्यागेन निष्प्रयोजनत्वादिति भावः। तथा [**स्तनाङ्गरागारुणितात्**] स्तनाङ्गरागेणारुणितादरुणीकृतात् पतनसमये तस्य स्तनयोरुपरोधादिति भावः। **कन्दुकात् च** निवर्तितः [**कुशाङ्कु-**

१ दृष्टिः परिलुप्तचन्दना. २ चन्दना. ३ रूप. ४ द्विगुणाम्. ५ निसृष्ट. ६ कञ्चुकात्.

रादानपरिक्षताङ्गुलिः ] कुशाङ्कुराणामादानेन लवनेन परिक्षताः व्रणिताः अङ्गुल्यो यस्य स तथोक्तः करः पाणिः अक्षसूत्रप्रणयी अक्षमालासहचरः कृतः ॥

महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥ १२ ॥

महार्हेति ॥ [ महार्हशय्यापरिवर्तनच्युतैः ] महानर्हो मूल्यं यस्याः सा महार्हा श्रेष्ठा या शय्या तस्यां परिवर्तनेन लुण्ठनेन च्युतैर्भ्रष्टैः स्वकेशपुष्पैः अपि या देवी दूयते स्म क्लिश्यति स्म । पुष्पाधिकसौकुमार्यादिति भावः । सा देवी बाहुलतामुपधत्ते उपधानीकरोतीति बाहुलतोपधायिनी सती केवले संस्तरणरहिते स्थण्डिले भूमौ एव अशेत शयितवती । तथा निषेदुषी उपविष्टा च । 'क्वसुश्च' इति क्वसुः । ' उगितश्च ' इति ङीप् । भूमावेव शयनादिव्यवहारो न जातूपरीत्यर्थः ॥

पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप[1] इवार्पितं द्वयम्[2] ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥ १३ ॥

पुनरिति ॥ नियमस्थया व्रतस्थया तया देव्या द्वये अपि द्वयं पुनः ग्रहीतुं पुनरानेतुं निक्षेपः अर्पितमिव निक्षेपत्वेनार्पितं किमु । क्वचित् द्वयीषु इति प्रामादिकः पाठः । कुत्र द्वये किं द्वयमर्पितमित्याह--तन्वीषु लतासु विलास एव चेष्टितं विलासचेष्टितं हरिणाङ्गनासु विलोलदृष्टं चञ्चलावलोकितं च । व्रतस्थायां तस्यां तयोरदर्शनाल्लतादिषु दर्शनाच्चार्पितमिवेत्युत्प्रेक्षा न तु वस्तुतोऽर्पणमस्तीति भावः ॥

अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणै[4]र्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥ १४ ॥

अतन्द्रितेति ॥ सा देवी स्वयम् एव अतन्द्रिता असंजाततन्द्रा सती । तारकादित्वादितच्प्रत्ययः । वृक्षकान् स्वल्पवृक्षान् [ ' अल्पे ' इत्यल्पार्थे कप्रत्ययः । [ घटस्तनप्रस्रवणैः ] घटाविव स्तनौ तयोः प्रस्रवणैः प्रस्नुतपयोभिः व्यवर्धयत् । गुहः कुमारः अपि प्रथमाप्तजन्मनां प्रथमलब्धजन्मनाम् । अग्रजातानामित्यर्थः । येषां वृक्षकाणां संबन्धि पुत्रवात्सल्य सुतप्रेम न अपाकरिष्यति । उत्तरत्र कुमारोदयेऽपि न तेषु पुत्रवात्सल्यं निवर्तिष्यत इत्यर्थः ॥

अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥ १५ ॥

अरण्येति ॥ [ अरण्यबीजाञ्जलिदानलालिताः ] अरण्यबीजानां नीवारादीनामञ्जलयस्तेषां दानेन लालिताः हरिणाः च तस्यां देव्यां तथा विशश्वसुः विस्रब्धं जग्मुः । ' समौ विस्रम्भविश्वासौ ' इत्यमरः । यथा कुतूहलात् औत्सुक्यात् तदीयैः हरिणसबन्धिभिः नयनैः नेत्रैः करणैः । स्वकीये लोचने सखीनां पुरः

१ द्वयीषु. २ निक्षेपम्. ३ दृष्टिः. ४ प्रस्नविनी.

पुरतः । अनेन तेषां संबन्धसहत्वमुक्तम् । अमिमीत । अक्षिपरिमाणतारतम्यज्ञानाय मानं चकारेत्यर्थः । केचित्तु सा पार्वती तदीयैर्नैत्रैः कुतूहलात्पुरोऽग्रे वर्तमानानां सखीनां लोचने अमिमीत व्रतस्थत्वान्नात्मन इत्याहुः । ' माङ् माने ' इत्यस्माद्धातोर्लङ् । इयमेव खलु विश्वासस्य परा काष्ठा यदक्षिपीडनेऽपि न क्षुभ्यन्तीति भावः ॥

तपःप्रभावमाह—

**कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम्[1] ।**
**दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥ १६ ॥**

कृतेति ॥ **कृताभिषेकां** कृतस्नानां **हुतजातवेदसं** हुताग्निकाम् । कृतहोमामित्यर्थः । त्वचा वल्कलेनोत्तरासङ्गवतीमुत्तरीयवतीं **त्वगुत्तरासङ्गवतीम्** । अधीतमस्या अस्तीति **अधीतिनीं** स्तुतिपाठादि कुर्वतीम् । ' इष्टादिभ्यश्च ' इतीनिप्रत्ययः । **तां देवीं दिदृक्षवः** द्रष्टुमिच्छवः **ऋषयः** मुनयः **अभ्युपागमन्** समुपागताः । न चात्र कनिष्ठसेवादोष इत्याह—**धर्मवृद्धेषु वयः न समीक्ष्यते** न प्रमाणीक्रियते । सति धर्मज्यैष्ठ्ये वयोज्यैष्ठ्यं न प्रयोजकमित्यर्थः । तथा च मनुः—' न तेन वृद्धो भवति येनास्य पलितं शिरः । यो वा युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥ ' इति ॥

**विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि[2] ।**
**नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च[3] बभूव पावनम् ॥ १७ ॥**

विरोधीति ॥ [ **विरोधिसत्त्वोज्झितपूर्वमत्सरं** ] विरोधिभिः सत्त्वैर्गोव्याघ्रादिभिरुज्झितपूर्वमत्सरं त्यक्तपूर्ववैरम् । हिंसारहितमित्यर्थः । **द्रुमैः** [ **अभीष्टप्रसवार्चितातिथि** ] अभीष्टप्रसवेनेष्टफलेनार्चिताः पूजिताः अतिथयो यस्मिंस्तत्तथोक्तम् । [ **नवोटजाभ्यन्तरसंभृतानलं** ] नवानामुटजानां पर्णशालानामभ्यन्तरेषु संभृताः संचिता अनला अग्नयो यस्मिंस्तत्तथोक्तं **तत् च तपोवनं** पावयतीति **पावनं बभूव** । अहिंसातिथिसत्काराग्निपरिचर्याभिर्जगत्पावनं बभूवेत्यर्थः ॥

**यदा फलं पूर्वतपःसमाधिना[4] न तावता लभ्यममंस्त काङ्क्षितम् ।**
**तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥ १८ ॥**

यदेति ॥ **सा** देवी **यदा** यस्मिन् काले **तावता** तावत्प्रमाणेन **पूर्वतपःसमाधिना** ] पूर्वेणानुष्ठीयमानप्रकारेण तपोनियमेन **काङ्क्षितं फलं लभ्यं** लब्धुं शक्यं **न अमंस्त** अशक्यममंस्तेत्यर्थः । **तदा** तत्काले । अविलम्बेनेत्यर्थः । [ **स्वशरीरमार्दवं** ] स्वशरीरस्य मार्दवं मृदुत्वं सौकुमार्यम् **अनपेक्ष्य** अविगणय्य **महत्** दुश्चरं **तपः चरितुं** साधयितुं **प्रचक्रमे** उपचक्रमे ॥

**क्लमं ययौ कन्दुकलीलयापि[5] या तया मुनीनां चरितं व्यगाह्यत ।**
**ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च[6] ससारमेव च[7] ॥ १९ ॥**

१ निवीतिनीम्. २ संस्कृता०. ३ तत्र. ४ सर्वसमा समा०; सर्वसमाधिसाधनम्. ५ सेवया. ६ संनिभं,-धर्मि यत्. ७ हि.

क्रममिति ॥ या देवी कन्दुकलीलया कन्दुकक्रीडया अपि क्लमं ययौ ग्लानिं प्राप । तया देव्या मुनीनां चरितं तीव्रं तपः व्यगाह्यत प्रविष्टम् । अत्रोत्प्रेक्षते— ध्रुवम् अस्याः वपुः [ काञ्चनपद्मनिर्मितं ] काञ्चनपद्मेन सुवर्णकमलेन निर्मितं घटितम् । अत एव प्रकृत्या पद्मस्वभावेन मृदु च सुकुमारमपि काञ्चनस्वभावेन ससारं च कठिनं एव । तथा च तदुपादानकत्वाद्देव्या वपुषः सुकुमारस्यापि तीव्रतपःक्षमत्वमित्युत्प्रेक्षार्थः ॥

**शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा।**
**विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत॥ २० ॥**

शुचाविति ॥ शुचौ ग्रीष्मे शुचिस्मिता विशदमन्दहासा सुमध्यमा पार्वती ज्वलतां दीप्तिमतां चतुर्णां हविर्भुजाम् अग्नीनां मध्यगता सती । नेत्रे प्रतिहन्तीति तां नेत्रप्रतिघातिनीं प्रभां सावित्रं तेजः विजित्य । न विद्यतेऽन्यत्र दृष्टिर्यस्याः सा अनन्यदृष्टिः सती सवितारं सूर्यम् ऐक्षत ददर्श । 'ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ।' इति स्मरणात् । पञ्चाग्निमध्ये तपश्चचारेत्यर्थः । सवितैव पञ्चमोऽग्निः—'अग्निः सविता सवितैवाग्निः' इति श्रौतलिङ्गात् ॥

**तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।**
**अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् २१**

तथेति ॥ सवितुः सूर्यस्य गभस्तिभिः किरणैः तथा पूर्वोक्तप्रकारेण अतितप्तं संतप्तं तस्या इदं तदीयं मुखं कमलश्रियं कमलस्य शोभां दधौ प्राप । यथा रवितापात्कमलं न म्लायति प्रत्युत विकसति तथा तदीयं मुखमासीदिति भावः । किं तु अस्य मुखस्य दीर्घयोः अपाङ्गयोः केवलं नेत्रान्तयोरेव शनैः शनैः मन्दं मन्दं श्यामिकया कालिम्ना पदं स्थानं कृतम् । तयोः सौकुमार्यादित्यर्थः ॥

**अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।**
**बभूव तस्याः किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः॥२२॥**

अयाचितेति ॥ अयाचितोपस्थितम् अप्रार्थितोपनतं केवलम् अम्बु उदकं रसात्मकस्य अमृतमयस्य [ उडुपतेः ] उडूनां नक्षत्राणां पतिश्चन्द्रस्तस्य रश्मयः च तस्याः पार्वत्याः पारणाविधिः अभ्यवहारकर्म बभूव । तावन्मात्रसाधनकोऽभूदित्यर्थः । साध्यसाधनयोरभेदेन व्यपदेशः साधनान्तरव्यावृत्त्यर्थः । किल इति प्रसिद्धौ । [ वृक्षवृत्तिव्यतिरिक्तसाधनः ] वृक्षाणां या वृत्तिर्जीवनोपायस्तद्व्यतिरिक्तं साधनमुपायो यस्य स तथोक्तः पारणाविधिः न बभूव । वृक्षोऽप्ययाचितोपस्थितेन मेघोदकेनेन्दुकिरणैश्च जीवतीति प्रसिद्धम् । अम्बिकापि तावन्मात्रमवालम्बतेत्यर्थः ॥

**निकामतप्ता विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा ।**
**तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३ ॥**

---

१ तथाभितप्तं, तथापि तप्तम्. २ खलु. ३ वृक्षवृत्तिः, ४ साधनम्. ५ द्विविधेन. ६ च.

निकामेति ॥ **विविधेन** । पञ्चविधेनेत्यर्थः । **नभश्चरेण** खेचरेण । आदित्यरूपेणेत्यर्थः । **इन्धनसंभृतेन** काष्ठसमिद्धेन **वह्निना** [ **निकामतप्ता** निकामं अत्यन्तं तप्ता सा अम्बिका **तपात्यये** ग्रीष्मान्ते । प्रावृषीत्यर्थः । **नवैः वारिभिः उक्षिता** सिक्ता सती **भुवा** पञ्चाग्नितप्तया **सह ऊर्ध्वगम्** ऊर्ध्वप्रसृतम् **ऊष्माणं** बाष्पम् **अमुञ्चत्** । 'ग्रीष्मोष्मबाष्पा ऊष्माणः' इति यादवः ॥

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥२४॥**

स्थिता इति ॥ [ **प्रथमोदबिन्दवः** ] उदकस्य बिन्दवः उदबिन्दवः । 'मन्थौदन–' इत्यादिनोदकशब्दस्योदादेशः । प्रथमे उदबिन्दवः । प्रथमविशेषणाद्बिन्दूनां विरलत्वं बहुवचनान्नातिविरलत्वं च गम्यते । तथा च विरलत्वनाभ्यन्तरगमनयोर्निर्वाहः । **तस्याः** पार्वत्याः **पक्ष्मसु** नेत्रलोमसु **क्षणं स्थिताः** स्थितिं गताः । स्थिता इत्यनेन पक्ष्मणां सान्द्रत्वं क्षणमिति स्नैग्ध्यं च गम्यते । अनन्तरं [**ताडिताधराः**] ताडितो व्यथितोऽधर ओष्ठो यैस्ते तथोक्ताः । एतेनाधरस्य मार्दवं गम्यते । ततः [ **पयोधरोत्सेधनिपातचूर्णिताः** ] पयोधरयोः स्तनयोः उत्सेधे उपरिभागे निपातेन पतनेन चूर्णिता जर्जरिताः । कुचकाठिन्यादिति भावः । तदनु **वलीषु** उदररेखासु **स्खलिताः** । निम्नोन्नतत्वादिति भावः । इत्थं **चिरेण** न तु शीघ्रम् । प्रतिबन्धबाहुल्यादिति भावः । **नाभिं प्रपेदिरे** प्रविष्टाः । न तु निर्जग्मुः । एतेन नाभेर्गाम्भीर्यं गम्यते । अत्र प्रतिपदमर्थवत्त्वात्परिकरालंकारः ॥

**शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।**
**व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपःसाक्ष्य इव स्थिताः क्षपाः ॥२५॥**

शिलाशयामिति ॥ **निरन्तरासु** नीरन्ध्रासु अन्तरे मध्ये वातो यासां तादृश्यो या वृष्टयस्तासु **अन्तरवातवृष्टिषु** । न निकेते गृहे वसतीति **अनिकेतवासिनीम्** । अनावृतदेशवासिनीमित्यर्थः । शिलायां शेत इति **शिलाशयां** शिलातलशायिनीम् । 'अधिकरणे शेतेः' इत्यच्प्रत्ययः । **तां** पार्वतीं [ **महातपःसाक्ष्ये** ] साक्षाद्द्रष्टा साक्षी । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । तस्य कर्म साक्ष्यम् । महातपसः साक्ष्ये **स्थिताः क्षपाः तडिन्मयैः** विद्युद्रूपैः **उन्मिषितैः** अवलोकनैः **व्यलोकयन् इव** । इवेति चक्षुषा विलोकनमेवोत्प्रेक्ष्यते । साक्ष्यं तु 'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति प्रमाणसिद्धत्वान्नोत्प्रेक्ष्यमित्यनुसंधेयम् ॥

एवं वर्षासु विहितं तपःप्रकारमुक्त्वा संप्रति हेमन्ते तपश्चरणप्रकारमाह—

**निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।**
**परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥२६॥**

---

१ °रोत्सङ्ग°. २ चात्यन्त, अत्यर्थ°; अत्यर्थहिमोत्तरानिलाः.

निनायेति ॥ **सा** पार्वती । [ **अत्यन्तहिमोत्किरानिलाः** ] उत्किरन्ति क्षिपन्तीत्युत्किराः । 'इगुपधज्ञा–' इत्यादिना कः । अत्यन्तं हिमानामुत्किरा अनिला यासु ताः **सहस्यरात्रीः** पौषरात्रीः । 'पौषे तैषसहस्यौ द्वौ' इत्यमरः । [ **उदवासतत्परा** ] उदके वास उदवासः । 'पेषंवासवाहनाधिषु च' इत्युदादेशः । उदवासे तत्परा आसक्ता तथा [ **परस्पराक्रन्दिनि** ] परस्परमाक्रन्दिन्यन्योन्यमाक्रोशिनि **पुरः** अग्रे **वियुक्ते** विरहिणि । वियोगं प्राप्ते इति यावत् । चक्रवाकी च चक्रवाकश्च चक्रवाकौ तयोः **चक्रवाकयोः मिथुने** द्वन्द्वे **कृपावती** सती **निनाय** । दुःखिषु कृपालुत्वं महतां स्वभाव इति चक्रवाकमिथुने कृपा न तु कामितयेति वाच्यानवकाशः । 'अप्सु वासस्तु हेमन्ते क्रमशो वर्धयेत्तपः ।' इति मनुः ॥

**मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।**
**तुषारवृष्टिक्षतपद्मसंपदां सरोजसंधानमिवाकरोदपाम् ॥ २७ ॥**

सुखेनेति ॥ **सा** पार्वती **निशि** रात्रौ [ **पद्मसुगन्धिना** ] पद्मवत्सुगन्धिना सुरभिणा । 'गन्धस्येत्'—इत्यादिनेकारः । [ **प्रवेपमानाधरपत्रशोभिना** ] प्रवेपमानः कम्पमानोऽधर ओष्ठ एव पत्रं दलं तेन शोभत इति तथोक्तेन **मुखेन** [ **तुषारवृष्टिक्षतपद्मसंपदां** ] तुषारवृष्ट्या तुहिनवर्षेण क्षता नाशिताः पद्मसंपदो यासां तासाम् **अपां सरोजसंधानं** पद्मसंघट्टनम् **अकरोद् इव** । इत्युत्प्रेक्षालंकारः । पद्मान्तरं तुहिनेनोपहन्यते तन्मुखपद्मं तु न तथेति व्यतिरेकालंकारो व्यज्यते इत्युभयोः संकरः ॥

**स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।**
**तदप्यपाकीर्णमतः प्रियंवदां वदन्त्यपर्णेति च तां पुराविदः ॥२८॥**

स्वयमिति ॥ [ **स्वयंविशीर्णद्रुमपर्णवृत्तिता** ] स्वयं विशीर्णानि स्वतश्च्युतानि द्रुमपर्णान्येव वृत्तिर्जीवनं यस्य तस्य भावस्तत्ता **तपसः परा काष्ठा** परमुत्कर्षो **हि** । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः । **तया** देव्या **पुनः तत्** पर्णवर्तनम् **अपि अपाकीर्णम्** अपाकृतम् । **अतः** पर्णापाकरणाद्धेतोः । [ **प्रियंवदां** ] प्रियं वदतीति प्रियंवदा ताम् । 'प्रियवशे वदः खच्' इति खच्प्रत्ययः । 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः । **तां** पार्वतीं **पुराविदः** पुराणज्ञास्तपःकरणसमयेऽविद्यमानं पर्णभक्षणं यस्याः सा **अपर्णा इति वदन्ति च** । नामान्तरसमुच्चयार्थश्चकारः । स्वयं प्रियंवदाः परेषामपि प्रियवादभाजनानि भवन्तीति भावः । अत्र अपर्णाम् इत्यपपाठ इतिशब्दाभिहिते द्वितीयानुपपत्तेः । यथाह वामनः–'निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः परिगणनस्य प्रायिकत्वात्' इति ॥

**मृणालिकापेलवमेवमादिभिर्व्रतैः स्वमङ्गं ग्लपयन्त्यहर्निशम् ।**
**तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥ २९ ॥**

---

१ संतानं. २ पत्र. ३ प्रियंवदाः. ४ न्त्यपर्णा किल. ५ कोमल. ६ तदङ्गम्. ७ क्षपयन्ती.

मृणालिकेति ॥ **मृणालिकापेलवं** पद्मिनीकन्दकोमलं **स्वं** स्वकीयम् **अङ्गं** शरीरम् [**एवमादिभिः**] एवमुक्तप्रकारतोयाग्निमध्यवासव्रतमादिर्येषां तैः **व्रतैः** । अहश्च निशा च **अहर्निशम्** । समाहारे द्वन्द्वैकवद्भावः । अत्यन्तसंयोगे द्वितीया । **ग्लपयन्ती** कर्शयन्ती **सा** पार्वती **कठिनैः** । क्लेशसहैरित्यर्थः । **शरीरैः उपार्जितं** संपादितं **तपस्विनाम्** ऋषीणां **तपः दूरम्** अत्यन्तम् **अधश्चकार** । अतिशिश्ये इत्यर्थः । तपस्विभिरप्येवं तपः कर्तुं न शक्यत इति तात्पर्यार्थः ॥

**अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा[1] ।**
**विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः[2] प्रथमाश्रमो यथा ॥ ३० ॥**

अथेति ॥ **अथ** अनन्तरम् [**अजिनाषाढधरः**] अजिनं कृष्णमृगत्वक् । आषाढः प्रयोजनमस्येत्याषाढः पालाशदण्डः । 'पालाशो दण्ड आषाढः' इत्यमरः । 'विशाखाषाढादण्मन्थदण्डयोः' इत्यण्प्रत्ययः । तयोर्धरस्तथोक्तः । **प्रगल्भवाक्** प्रौढवचनः **ब्रह्ममयेन** वैदिकेन **तेजसा** । ब्रह्मवर्चसेनेत्यर्थः । **ज्वलन् इव** स्थितः । इवशब्दो निर्धारणार्थः । **कश्चिद्** अनिर्दिष्टः **जटिलः** जटावान् । ब्रह्मचारीति शेषः । पिच्छादित्वादिलच्प्रत्ययः । **शरीरबद्धः** बद्धशरीरः । शरीरवानित्यर्थः । आहिताग्न्यादिषु पाठात्साधुः । **प्रथमाश्रमः यथा** ब्रह्मचर्याश्रम इव । यथाशब्द इवार्थे । **तपोवनम्** । देव्या इति शेषः । **विवेश** प्रविष्टवान् ॥

**तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।**
**भवन्ति साम्येऽपि[3] निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः[4] क्रियाः॥३१॥**

तमिति ॥ अतिथिषु साध्वी **आतिथेयी** । 'पथ्यतिथि'–इत्यादिना ढञ्प्रत्ययः । 'टिड्ढाणञ्' इत्यादिना ङीप् । **पार्वती तं** ब्रह्मचारिणं **बहुमानपूर्वया** बहुमानः पूर्वो यस्यास्तया । गौरवपूर्वयेत्यर्थः । **सपर्यया** अर्चया । 'सपर्यार्चार्हणाः समाः' इत्यमरः । **प्रत्युदियाय** प्रत्युज्जगाम । कथं समानेऽपि तस्यास्तादृशी प्रतिपत्तिरत आह—**साम्ये** सति **अपि निविष्टचेतसां** स्थिरचित्तानां **वपुर्विशेषेषु** व्यक्तिविशेषेषु अतिशयितं गौरवं यासु ताः **अतिगौरवाः** अतिगौरवसहिताः **क्रियाः** चेष्टाः **भवन्ति** । प्रवर्तन्ते इत्यर्थः । साधवो न साम्याभिनिवेशिन इति भावः ॥

**विधिप्रयुक्तां परिगृह्य[5] सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।**
**उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥ ३२ ॥**

विधीति ॥ **स** ब्रह्मचारी [**विधिप्रयुक्तां**] विधिना प्रयुक्तामनुष्ठितां **सत्क्रियां** पूजां **परिगृह्य** स्वीकृत्य **क्षणं परिश्रमं** विश्रामं **च विनीय नाम** । नामेत्यपरमार्थे । अथ

---

२९–३० श्लोकयोर्मध्ये क्षेपकोऽयं दृश्यते—
सुराः समु(तदु–)द्वीक्ष्य नगेन्द्रकन्यया कृतं तपः शंभुवशक्रियाक्षमम् ।
ययाचिरे तं प्रणिपत्य दुःखिताः पतिं चमूनां सुतमाजिहेतुम्(हेतवे)॥

1 वर्चसा. 2 बन्धः. 3 म्येऽभिनि०. 4 आधि०. 5 प्रतिगृह्य.

**उमाम् ऋजुना एव** विलासरहितेनैव **चक्षुषा पश्यन् अनुज्झितक्रमः** अत्यक्तोचितपरिपाटीकः सन्। **वक्तुं प्रचक्रमे** प्रारेभे ॥

**अपि क्रियार्थं[1] सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि[2] ते ।**
**अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥ ३३**

अपीति ॥ अत्रापिशब्दः प्रश्ने । **क्रियार्थं** होमादिकर्मानुष्ठानार्थम् । समिधश्च कुशाश्च **समित्कुशम्** । 'जातिरप्राणिनाम्' इति द्वन्द्वैकवद्भावः । **सुलभम् अपि** सुलभं कच्चित् । **जलानि ते** तव **स्नानविधिक्षमाणि** स्नानक्रियायोग्यानि **अपि** कच्चित् । किं च **स्वशक्त्या** निजसामर्थ्यानुसारेण **तपसि प्रवर्तसे अपि** । देहमपीडयित्वा तपश्चरसि कच्चिदित्यर्थः । युक्तं च नामैतत् । **खलु** यस्मात् **शरीरम् आद्यं धर्मसाधनम्** । धर्मस्तु कायेन वाचा बुद्ध्या धनादिना च बहुभिः साध्यते । तेषु च वपुरेव मुख्यं साधनम् । सति देहे धर्मार्थकाममोक्षलक्षणाश्चतुर्वर्गाः साध्यन्ते । अत एव 'सततमात्मानमेव गोपायीत' इति श्रुतिः । 'अयथाबलमारम्भो निदानं क्षयसंपदाम् ।' इति भावः ॥

**अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।**
**चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥३४॥**

अपीति ॥ [ **त्वदावर्जितवारिसंभृतं** ] त्वयावर्जितेन सिक्तेन वारिणा संभृतं जनितम् **आसां वीरुधां** लतानां **प्रवालं** पल्लवम् **अनुबन्धि अपि** अनुस्यूतं किम् । **यत्** प्रवालं चिरोज्झितश्चिरकालत्यक्तो लाक्षारागो येन तत्तथापि पाटलम् । स्वभावरक्तमित्यर्थः । तेन **चिरोज्झितालक्तकपाटलेन ते** तव **दन्तवाससा** अधरेण । 'ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।' इत्यमरः । **तुलां** साम्यम् **आरोहति** । गच्छतीत्यर्थः । अत्र तुलाशब्दस्य सादृश्यवाचित्वात्तद्योगेऽपि 'तुल्यार्थैरतुलोपमाभ्याम्' इति न तृतीयाप्रतिषेधः तत्र सूत्रे सदृशवाचिन एव ग्रहणादिति ॥

**अपि प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु[3] ।**
**य उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षिसादृश्यमिव[5] प्रयुञ्जते ॥ ३५ ॥**

अपीति ॥ [ **करस्थदर्भप्रणयापहारिषु** ] करस्थान्दर्भान्प्रणयेन स्नेहेनापहरन्तीति ते तथोक्तेषु । सापराधेष्विति भावः । 'करस्थदर्भप्रणयापराधिषु' इति पाठे दर्भाणां प्रणयेन प्रार्थनयापराधिषु । **हरिणेषु** विषये **ते मनः प्रसन्नम् अपि** । न क्षुभितं किम् । सापराधेष्वपि न कोपितव्यं तपस्विभिरिति भावः । हे **उत्पलाक्षि ये** हरिणाः **प्रचलैः** चञ्चलैः **विलोचनैः** नेत्रैः **तवाक्षिसादृश्यं प्रयुञ्जते इव** अभिनयन्तीव । प्रसन्नत्वान्मृगनेत्राणि त्वन्नयनाभ्यां साम्यमुपयान्तीति भावः । 'उत्पलक्षेपचलैः' इति पाठान्तरे उत्पलक्षेपचलैः । भावानयने द्रव्यानयनमिति न्यायेन क्षिप्यमाणोत्पलचलैरित्यर्थः ॥

---

१ अपि. २ क्रियार्थे. ३ विधौ. ४ पराधिषु. ५ ०लाक्षेपचलैः. ६ सापत्न्यम्.

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथा हि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥ ३६ ॥

यदिति ॥ हे पार्वति रूपं सौम्याकृतिः पापवृत्तये पापाचरणाय न भवति । इति यदुच्यते । लोकैरिति शेषः । तद्वचः न व्यभिचरति न स्खलतीति अव्यभिचारि सत्यम् । 'यत्राकृतिस्तत्र गुणाः' । 'न सुरूपाः पापसमाचारा भवन्ति ।' इत्यादयो लोकवादा न विसंवादमासादयन्तीत्यर्थः । किमिति ज्ञायते–तथा हि । हे उदारदर्शने आयताक्षि । सुरूपे इत्यर्थः । अथ वा उन्नतज्ञाने । विवेकवतीत्यर्थः । ते तव शीलं सद्वृत्तम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । तपस्विनाम् अपि उपदिश्यते अनेनेत्युपदेशः प्रवर्तकं प्रमाणं तत्ताम् उपदेशतां गतं प्राप्तम् । मुनयोऽपि त्वां वीक्ष्य स्ववृत्ते प्रवर्तन्त इति भावः ॥

विकीर्णसप्तर्षिबलिप्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥ ३७ ॥

विकीर्णेति ॥ एष महीधरः हिमवान् । [ विकीर्णसप्तर्षिबलिप्रहासिभिः ] सप्त च ते ऋषयश्च सप्तर्षयः । 'दिक्संख्ये संज्ञायाम्' इति समासः । विकीर्णैः पर्यस्तैः सप्तर्षीणां संबन्धिभिर्बलिभिः । पुष्पोपहारैः प्रहसन्ति तैः तथोक्तैः दिवः अन्तरिक्षात् च्युतैः गाङ्गैः सलिलैः तथा न पावितः । अनाविलैः अकलुषैः त्वदीयैः चरितैः यथा सान्वयः सपुत्रपौत्रः पावितः पवित्रीकृतः ॥

अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि ।
त्वया मनोनिर्विषयार्थकामया यदेक एव प्रतिगृह्य सेव्यते ॥ ३८ ॥

अनेनेति ॥ हे भाविनि प्रशस्ताभिप्राये । अनेन कारणेन धर्मः सविशेषं सातिशयम् अद्य मे । [ त्रिवर्गसारः ] त्रयाणां धर्मकामार्थानां वर्गस्त्रिवर्गः । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।' इत्यमरः । तत्र सारः श्रेष्ठः प्रतिभाति । यत् यस्मात्कारणात् [ मनोनिर्विषयार्थकामया ] मनसो निर्विषयावर्थकामौ यस्यास्तया त्वया एकः धर्मः एव प्रतिगृह्य स्वीकृत्य सेव्यते । यत्त्वयार्थकामौ विहाय धर्म एवावलम्बितः । अतः सर्वेषां नः स श्रेयानिति प्रतिपद्यत इत्यर्थः ॥

संप्रति मनोरथं जिज्ञासुः प्रस्तौति—

प्रयुक्तसत्कारविशेषमात्मना न मां परं संप्रतिपत्तुमर्हसि ।
यतः सतां संनतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥ ३९ ॥

प्रयुक्तेति ॥ आत्मना त्वया प्रयुक्तः कृतः सत्कारविशेषः पूजातिशयो यस्य तं [ प्रयुक्तसत्कारविशेषं ] मां परम् अन्यं संप्रतिपत्तुम् अवगन्तुं न अर्हसि । हे संनतगात्रि संनताङ्गि । 'अङ्गगात्रकण्ठेभ्यः' इति वक्तव्यात् ङीष् । यतः कारणान्मनस

१ प्रवाहिभिः, प्रकाशिभिः. २ भामिनि. ३ सा प्र०. ४ यदा यथा.

ईषिभिः **मनीषिभिः** विद्वद्भिः । शकन्ध्वादित्वात्साधुः । **सतां संगतं** सख्यं सप्तभिः पदैरापद्यत इति **साप्तपदीनं** सप्तपदोच्चारणसाध्यम् **उच्यते** । तच्चावयोस्त्वत्कृतसत्कारप्रयोगादेव सिद्धमित्यर्थः । 'साप्तपदीनं सख्यम्' इति निपातनात्साधु ॥

**अतोऽत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।**
**अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥ ४० ॥**

अत इति ॥ हे **तपोधने अतः** सख्याद्धेतोः **अत्र** प्रस्तावे **बहुक्षमां** बहूक्तिसहाम् । यद्वा क्षमावतीम् । **भवतीं** त्वां **द्विजातिभावाद्** ब्राह्मत्वाद् **उपपन्नचापलः** सुलभधार्ष्ट्यः **अयं जनः** । स्वयमित्यर्थः । **किंचित्** प्रष्टुं मनो यस्य स **प्रष्टुमनाः** प्रष्टुकामः । 'तुंकाममनसोरपि' इति मकारलोपः । रहसि भवं **रहस्यं** गोप्यं **न चेत् प्रतिवक्तुम् अर्हसि** ॥

प्रष्टव्यमाह—

**कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।**
**अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥ ४१ ॥**

कुल इति ॥ **प्रथमस्य वेधसः** हिरण्यगर्भस्य **कुले** अन्ववाये **प्रसूतिः** उत्पत्तिः । 'यज्ञार्थं हि मया सृष्टो हिमवानचलेश्वरः' । इति ब्रह्मपुराणवचनात् । **वपुः** शरीरं **[ त्रिलोकसौन्दर्यं ]** त्रयाणां लोकानां सौन्दर्यम् **इव उदितम्** एकत्र समाहृतम् । **ऐश्वर्यसुखं** संपत्सुखम् **अमृग्यम्** अन्वेषणीयं न भवति । किं तु सिद्धमेवेत्यर्थः । **वयः नवम्** । यौवनमित्यर्थः । **अतः परम्** अतोऽन्यत् **किं तपःफलं स्यात् वद** अस्ति चेदिति शेषः । न किंचिदस्तीत्यर्थः ॥

**भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।**
**विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च कृशोदरि त्वयि ॥ ४२ ॥**

भवतीति ॥ **दुःसहात्** सोढुमशक्याद् **अनिष्टाद्** भर्त्रादिकृतात् **अपि मनस्विनीनां** धीरस्त्रीणाम् **ईदृशी** तपश्चरणलक्षणा **प्रतिपत्तिः** प्रवृत्तिः । 'प्रतिपत्तिस्तु गौरवे । प्राप्तौ प्रवृत्तौ प्रागल्भ्ये' इति केशवः । **भवति नाम** । नामेति संभावनायाम् । **[ विचारमार्गप्रहितेन ]** विचारमार्गे प्रहितेन **चेतसा** चित्तेन **तद्** अनिष्टं **च** हे **कृशोदरि त्वयि न दृश्यते** । विचार्यमाणे तदपि नास्त्यसंभावितत्वादित्यर्थः ॥

अनिष्टाभावमेव प्रपञ्चयति—

**अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।**
**पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥ ४३ ॥**

अलभ्येति ॥ हे **सुभ्रु** । **इयं** त्वदीया **आकृतिः** मूर्तिः **[ अलभ्यशोकाभि-**

१ अय. २ प्रतिगोप्तुम॰, प्रतिबोध–गोप–यिष्यसि. ३ वस्थितं, ॰वोर्जितम्. ४ तव. ५ तलोदरि, तनूदरि. ६ अनन्यशोभा. ७ परावमर्शः. ८ सूचिषु, सूतये.

**भवा ]** अलभ्यो लब्धुमनर्हः शोकेन भर्त्राद्यवमानजेन दुःखेनाभिभवस्तिरस्कारो यस्याः सा तथोक्ता । दृश्यत इति शेषः । असंभावितश्चायमर्थ इत्याह—**पितुः गृहे विमानना** अवमानः **कुतः** । न संभाव्यत एवेत्यर्थः । न चाप्यन्यस्माद्भावीत्याह—**पराभिमर्शः** परधर्षणं तु **तव न अस्ति** । **पन्नगरत्नसूचये** फणिशिरोमणिशलाकां ग्रहीतुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति चतुर्थी । **करं** हस्तं **कः प्रसारयेत्** । सुभ्रु इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वात् 'नेयङुवङ्स्थानावस्त्री' इति नदीसंज्ञाप्रतिषेधात् 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वत्वं नास्ति । तेन ह्रस्वः प्रामादिक इति केचित् । अन्ये तु 'अप्राणिजातेश्चारज्ज्वादीनाम्' इत्यत्र अलाबूः कर्कन्धूः इत्युकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकार एतस्मादेव ज्ञापकात्क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुः । अत एवाह वामनः—'ऊकारान्तादप्यूङ्प्रवृत्तेः इति ।' 'सुभ्रूः कुतस्तातगृहेऽवमाननम्' इति पाठान्तरकरणं तु साहसमेवोक्तोपपत्तिसंभवात् । अन्यत्रापि 'सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषिताम्' इत्यादिप्रयोगदर्शनाद्वंशस्थवृत्ते पादादौ जगणभङ्गप्रसङ्गाच्चेत्यलं गोष्ठीभिः ॥

**किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।**
**वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते ॥ ४४ ॥**

किमिति ॥ हे गौरि **किमिति** केन हेतुना **यौवने त्वया आभरणानि अपास्य** विहाय । वृद्धस्य भावो वार्धकम् । मनोज्ञादित्वाद् वुञ्प्रत्ययः । 'वार्धकं वृद्धसंघाते वृद्धत्वे वृद्धकर्मणि ।' इति विश्वः । तत्र शोभत इति **वार्धकशोभि वल्कलं धृतम्** । **प्रदोषे** रजनीमुखे स्फुटाः प्रकटाश्चन्द्रस्तारकाश्च यस्याः सा **स्फुटचन्द्रतारका विभावरी** रात्रिः **अरुणाय** सूर्यसुताय **कल्पते यदि** अरुणं गन्तुं कल्पते किम् । **वद** ब्रूहि । 'क्रियार्थोपपदस्य' इत्यादिना चतुर्थी । दीप्यमानशशाङ्कतारके प्रदोषे यद्यरुण उदेति ततो विभूषणापहारेण तव वल्कलधारणं संघटत इति भावः ॥

तपःप्रयोजनं निराकर्तुमाह—

**दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।**
**अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥**

दिवमिति ॥ **दिवं** स्वर्गं **प्रार्थयसे** कामयसे **यदि** तर्हि **श्रमः** तपश्चरणप्रयासः **वृथा** निष्फलः । यदि स्वर्गार्थं तप्यसे ततः श्रमं मा कार्षीः । कुतः । **तव पितुः** हिमवतः **प्रदेशाः देवभूमयः** । स्वर्गपदार्थाः तत्रत्या इत्यर्थः । **अथ उपयन्तारं** वरं प्रार्थयसे तर्हि **समाधिना** तपसा **अलम्** । न कर्तव्यमित्यर्थः । निषेध्यस्य निषेधं प्रति करणत्वात्तृतीया । तथा **हि** । **रत्नम्** । कर्तृ । **न अन्विष्यति** न मृगयते । ग्रहीतारमिति शेषः । किं तु **तत्** रत्नं **मृग्यते** । ग्रहीतृभिरिति शेषः । न हि वरार्थं त्वया तपसि वर्तितव्यं । किं तु तेनैव त्वदर्थमिति भावः ॥

---

१ विनिकीर्णता०, विनकीर्य ता०, ०तारके. २ अन्विच्छति.

वरवाचकाक्षरश्रवणानन्तरमेव देव्या उष्णोच्छ्वासमालक्ष्य प्रश्नेषु च प्रत्युत्तरमनुपलभ्य स्वयमेवाशङ्क्याह—

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥४६॥

निवेदितमिति ॥ **सोष्मणा निःश्वसितेन** निःश्वासवायुना **निवेदितम्** । चिन्तानुभावेनोष्णोच्छ्वासेन ते वरार्थित्वं सूचितमित्यर्थः । तर्हि किं प्रश्नव्यसनेनेत्याह । **मे मनः तु** तथापि **संशयम् एव गाहते** प्राप्नोति । कुतः । **ते** तव । 'कृत्यानां कर्तरि वा' इति षष्ठी । **प्रार्थयितव्यः** प्रार्थयितुमर्हः **एव न दृश्यते** । **प्रार्थितदुर्लभः** प्रार्थितो दुर्लभः स **कथं भविष्यति** । नास्त्येवेत्यर्थः ॥

अथ पतिप्रार्थनामेव सिद्धवत्कृत्वाह—

अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथलम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥४७॥

अहो इति ॥ **अहो** चित्रम् । **तव ईप्सितः** आप्तुमिष्टः **युवा कः अपि स्थिरः** कठिनः । वर्तत इति शेषः । कुतः । **यः** युवा **चिराय** चिरात्प्रभृति **कर्णोत्पलशून्यतां गते** प्राप्ते **कपोलदेशे** गण्डस्थले श्लथाः शिथिलबन्धना अत एव लम्बिन्यस्ताः **श्लथलम्बिनीः** [ **कलमाग्रपिङ्गलाः** ] कलमाः शालिविशेषास्तेषामग्राणि तद्वत्पिङ्गलाः **जटाः उपेक्षते** । यस्त्वामीदृशीं दृष्ट्वा न व्यथते स नूनं वज्रहृदय इत्यर्थः ॥

मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥ ४८॥

मुनिव्रतैरिति ॥ **मुनिव्रतैः** चान्द्रायणादिभिः [ **अतिमात्रकर्शिताम्** ] अतिमात्रमत्यन्तं कर्शितां कृशीकृतां [ **दिवाकराप्लुष्टविभूषणास्पदां** ] दिवाकरेण सूर्येणाप्लुष्टानि दग्धानि वातातपसंस्पर्शान्मृदुत्वाच्च श्यामीकृतानि विभूषणास्पदानि भूषणस्थानानि यस्यास्तां तथोक्ताम् । अत एव **दिवा** अहनि **शशाङ्कलेखामिव** स्थितां **त्वां पश्यतः सचेतसः** जीवतः **कस्य** पुंसः **मनः न दूयते** न परितप्यते । अपि तु सर्वस्यैवेत्यर्थः ॥

अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥ ४९ ॥

अवैमीति ॥ **तव प्रियं** वल्लभं **सौभाग्यमदेन** सौन्दर्यगर्वेण । कर्त्रा । **वञ्चितं** विप्रलब्धम् **अवैमि** वेद्मि **यः** । प्रियश्चतुरं मधुरमवलोकत इति **चतुरावलोकिनः अरालपक्ष्मणः** कुटिलरोम्णः । 'अरालं वृजिनं जिह्मम्' इत्यमरः । **अस्य**

१ बन्धिनीर्जटाः; बन्धलम्बिनीर्जटाः कपोले. २ करस्पृष्ट, रप्लुष्ट. ३ रेखा. ४ दीर्यते. ५ लक्ष्यं रविम०

त्वदीयस्य चक्षुषः आत्मीयं वक्त्रं मुखं चिरं लक्ष्यं विषयं न करोति । दृष्टिपथं न गच्छतीत्यर्थः । तदयं गर्वेण हतो निष्फलात्मलाभो जात इति भावः ॥

**कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।**
**तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥ ५० ॥**

कियदिति ॥ हे गौरि । कियत् किंप्रमाणकम् । किमवधिकमित्यर्थः । चिरं श्राम्यसि तपस्यसि । अत्यन्तसंयोगे द्वितीया । ममापि [ पूर्वाश्रमसंचितं ] पूर्वाश्रमः प्रथमाश्रमो ब्रह्मचर्याश्रमस्तत्र संचितं संपादितं तपः विद्यते । [ तदर्धभागेन ] अर्धश्चासौ भागश्च तेन तस्य तपसोऽर्धभागेनैकदेशेन काङ्क्षितम् इष्टं वरम् उपयन्तारं लभस्व । तं वरं साधु सम्यक् वेदितुं ज्ञातुम् इच्छामि च । यद्यसौ योग्यो भवति तदा ममापि संमतिरिति भावः ॥

**इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।**
**अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥ ५१ ॥**

इतीति ॥ इति इत्थं द्विजन्मना द्विजेन प्रविश्य अन्तर्गत्वा । आप्तवद्रहस्यमुद्राव्येत्यर्थः । अभिहिता उक्ता सा पार्वती मनोगतं हृदिस्थं वरं शंसितुं वक्तुं न शशाक समर्था नाभूत् । लज्जयेति शेषः । अथो अनन्तरं परिपार्श्ववर्तिनीं वयस्यां सखीं [ विवर्तितानञ्जननेत्रं ] विवर्तितं विचालितमनञ्जनं व्रतवशाद्वर्जितकज्जलं नेत्रं यास्मिन्कर्मणि तत्तथा ऐक्षत । नेत्रसंज्ञयैव प्रत्युत्तरं वाचयांचकारेत्यर्थः ॥

**सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।**
**यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥ ५२ ॥**

सखीति ॥ तस्याः पार्वत्या इयं तदीया सखी वयस्या तम् । ' वर्णः प्रशस्तिः ' इति क्षीरस्वामी । सोऽस्यास्तीति वर्णिनं ब्रह्मचारिणम् । ' वर्णाद्ब्रह्मचारिणि ' इतीनिप्रत्ययः । उवाच ब्रूते स्म । किमिति । हे साधो विद्वन् तव कुतूहलं चेत् । श्रोतुमस्तीति शेषः । तर्हि निबोध अवगच्छ । आकर्णयेत्यर्थः । ' बुध अवगमने ' इति धातोर्भौवादिकाल्लोट् । श्रोतव्यं किं तदाह—यस्मै लाभायेदं यदर्थम् । ' अर्थेन सह नित्यसमासः सर्वलिङ्गता चेति वक्तव्यम् ' इति वार्तिकनियमात्क्रियाविशेषणम् । एतया पार्वत्या अम्भोजं पद्मम् उष्णवारणम् आतपत्रम् इव वपुः शरीरं तपःसाधनं कृतम् । तपःप्रवृत्तिकारणमुच्यते श्रूयतामित्यर्थः ॥

' दृङ्मनःसङ्गसंकल्पा जागरः कृशताऽरतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश ॥ ' इति । तत्रास्याः काश्चिद्दशाः क्रममनादृत्यैव योजयति—इयमित्यादिभिः षड्भिः श्लोकैः—

**इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।**
**अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥ ५३ ॥**

---

१ निव० २ वाञ्छितं. ३ भामिनी.

इयमिति ॥ **मानिनी** इन्द्राणीप्रभृतीरतिशय्य वर्तितव्यमित्यभिमानवती **इयं** पार्वती **अधिश्रियः** अधिकैश्वर्यान् **महेन्द्रप्रभृतीन्** इन्द्रादींश्चतसृणां दिशामीशान् [ **चतुर्दिगीशान्** ] इन्द्रवरुणयमकुबेरान् । 'तद्धितार्थ'—इत्यादिनोत्तरपदसमासः । **अवमत्य** अवधूय **मदनस्य निग्रहात्** निवर्हणाद्धेतोः । अकामुकत्वादित्यर्थः । रूपेण सौन्दर्येण हार्यो वशीकरणीयो न भवतीति **अरूपहार्यं** पिनाकः पाणौ यस्य तं **पिनाकपाणिं** हरम् । 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' इति साधु । **पतिं** भर्तारम् **आप्तुम् इच्छति** । एतेन संकल्पावस्था सूचिता ॥

**असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।**
**इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥ ५४ ॥**

असह्येति ॥ **पुरा** पूर्वं [ **असह्यहुंकारनिवर्तितः** ] असह्येन सोढुमशक्येन हुंकारेण रौद्रेण निवर्तितः । अत एव **पुरारिं** हरम् **अप्राप्तमुखः** अप्राप्तफलः **विशीर्णमूर्तेः** नष्टशरीरस्य **अपि पुष्पधन्वनः** कामस्य **शिलीमुखः** बाणः **इमां** पार्वतीं **हृदि** [ **व्यायतपातम्** ] व्यायतः । सुदृढावगाढ इति यावत् । तादृक्पातः प्रहारो यस्मिन् कर्मणि तत्तथा **अक्षिणोत्** अकर्शत् । दग्धदेहस्यापि मार्गणो लग्नः । 'मृदुः सर्वत्र बाध्यते' इति भावः । अनेन 'विवृण्वती शैलसुतापि भावम्' ( ३।६८ ) इत्यत्रोक्तं चक्षुःप्रीतिमनःसङ्गाख्यमवस्थाद्वयमनन्तरावस्थोपयोगितयानूद्य कार्श्यावस्था सूचिता ॥

**तदा प्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।**
**न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥ ५५ ॥**

तदेति ॥ तदेति च्छेदः । **तदा प्रभृति** । तत आरभ्येत्यर्थः । सप्तम्यर्थस्यापि दाप्रत्ययस्य पञ्चम्यर्थे लक्षणा प्रभृतियोगे पञ्चमीनियमात् । **पितुः गृहे उन्मदना** उत्कटमन्मथा [ **ललाटिकाचन्दनधूसरालका** ] ललाटस्थालंकारो ललाटिका तिलकः । 'कर्णललाटात्कनलंकारे' इति कन्प्रत्ययः । तस्याश्चन्दनेन धूसरा धूसरवर्णा अलकाश्चूर्णकुन्तला यस्याः सा तथोक्ता । **बाला** पार्वती **जातु** कदाचिदपि [ **तुषारसंघातशिलातलेषु** ] तुषारसंघातास्तुषारघनास्त एव शिलास्तासां तलेषूपरिभागेषु **अपि निर्वृतिं** सुखं **न लभते स्म** । एतेनारत्यपरसंज्ञा विषयविद्वेषावस्था द्वादशावस्थापक्षे संज्वरश्च व्यज्यते ॥

**उपात्तवर्णे चरिते पिनाकिनः सबाष्पकण्ठस्खलितैः पदैरियम् ।**
**अनेकशः किंनरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥ ५६ ॥**

उपात्तेति ॥ **इयं पिनाकिनः** शंभोः **चरिते** त्रिपुरविजयादिचेष्टिते **उपात्तवर्णे** प्रारब्धगीतक्रमे । 'गीतक्रमे स्तुतौ वेदे वर्णशब्दः प्रयुज्यते ।' इति हलायुधः । [ **सबाष्पकण्ठस्खलितैः** ] सबाष्पे गद्गदे कण्ठे स्खलितैर्विशीर्णैः **पदैः** सुप्तिङन्तरूपैः । करणैः । [ **वनान्तसंगीतसखीः** ] वनान्ते संगीतेन निमित्तेन सखीर्वयस्याः

१ स्मरारिम्. २ अक्षणोत्. ३ ठदात्त. ४ कण्ठैः. ५ खांर्यरो०.

किंनरराजकन्यकाः अनेकशः बहुशः अरोदयत् अश्रुमोक्षमकारयत् । इत्थंचरितगानजनितमदनवेदनामेनां वीक्ष्य किंनर्योऽपि रुरुदुरिति भावः । अत्र वर्णस्खलनलक्षणकार्योक्त्या पुनः पुनस्तत्कारणीभूतमूर्च्छावस्थाप्रादुर्भावो व्यज्यतेऽन्यथा सखीरोदनानुपपत्तेरिति । द्वादशावस्थापक्षे तु प्रलापावस्था च व्यज्यते । 'प्रलापो गुणकीर्तनम्' इत्यालंकारिकाः ॥

त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत[1] ।
क नीलकण्ठ व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना ॥५७॥

त्रिभागेति ॥ [च] किं च इति चार्थः । [त्रिभागशेषासु] शिष्यत इति शेषः । कर्मणि घञ् । त्रिभ्यो भागेभ्यः शेषास्त्ववशिष्टासु । यद्वा रात्रेस्त्रियामत्वेन प्रसिद्धत्वात् तृतीयो भागस्त्रिभागः । संख्याशब्दस्य वृत्तिविषये पूरणार्थत्वमिष्यते । यथा शतांशः सहस्रांश इति । त्रिभागः शेषो यासां तासु निशासु क्षणं क्षणमात्रं नेत्रे निमील्य मीलयित्वा सहसा सद्यः हे नीलकण्ठ क व्रजसि कुत्र गच्छसि इति [ अलक्ष्यवाक् । अलक्ष्या निर्विषया वाग्वचनं यस्याः सा तथोक्ता । तथा [ असत्यकण्ठार्पितबाहुबन्धना ] असत्ये मिथ्याभूते कण्ठे अर्पितं बाहुबन्धनं यस्याः सा तथा सती व्यबुध्यत विबुद्धवती । एतेन जागरोन्मादौ सूचितौ ॥

स्वप्नसादृश्यप्रतिकृतिदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदाः । तत्र स्वप्नसंदर्शनमुक्त्वा प्रतिकृतिदर्शनमाह—

यदा[2] बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च[3] मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥

यदेति ॥ यदा यत इत्यर्थः । 'यदेति हेतौ' इत्युक्त्वा गणव्याख्यानेऽस्योदाहृतत्वात् । त्वं बुधैः मनीषिभिः सर्वगतः सर्वव्यापीति उच्यसे । तत इत्यध्याहारः । भावे रत्याख्ये तिष्ठतीति भावस्थम् । त्वय्यनुरागिणमित्यर्थः । इमं जनम् । इममित्यात्मनिर्देशः । कथं न वेत्सि न जानासि । इति मुग्धया मूढया । अकिंचित्करश्चित्रगतोपालम्भः इत्यजानानयेत्यर्थः । तया [ स्वहस्तोल्लिखितः ] स्वहस्तेनोल्लिखितश्चित्रे लिखितः चन्द्रशेखरः रहसि एकान्ते । सखीमात्रसमक्षमित्यर्थः । उपालभ्यत साधिक्षेपमुक्तः च । उक्तसमुच्चयार्थश्चकारः । यद्यपि रहसीत्युक्तं तथापि सखीसमक्षकरणाल्लज्जात्यागो व्यज्यत एव ॥

यदा च[4] तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती[5] ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥ ५९ ॥

यदेति ॥ जगत्पतेः तस्य ईश्वरस्य अधिगमे प्राप्तौ अन्यं विधिं उपायं विचिन्वती मृगयमाणा यदा न अपश्यत् तदा इयं पार्वती गुरोः पितुः अनुज्ञया अस्माभिः सह तपसे तपश्चरितुं तपोवनं प्रपन्ना प्राप्ता च ॥

---

१ विबुध्यते. २ यतः सदा. ३ चित्रे लि०, हस्तालि०. ४ हि. ५ वितन्वती.

**द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु दृष्टमेष्वपि ।**
**न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याः शशिमौलिसंश्रयः॥६०॥**

द्रुमेष्विति ॥ **सख्या** पार्वत्या **स्वयं** [ **कृतजन्मसु** ] कृतं जन्म येषां तेषु । स्वयं रोपितेष्वित्यर्थः । [ **तपःसाक्षिषु** ] तपसः साक्षिषु साक्षाद्द्रष्टृषु **एषु द्रुमेषु अपि फलं दृष्टं** लब्धम् । जनितमित्यर्थः । **अस्याः** पार्वत्याः **च शशिमौलिसंश्रयः** चन्द्रशेखरविषयः **मनोरथः** तु **प्ररोहाभिमुखः** अङ्कुरोन्मुखः **अपि न दृश्यते** । 'प्ररोहस्त्वङ्कुरः' इति वैजयन्ती । स्वयं रोपितवृक्षफलकालेऽप्यस्या मनोरथस्य नाङ्कुरोदयोऽप्यस्ति । फलाशा तु दूरापास्तेत्यर्थः ॥

**न वेद्मि स प्रार्थितदुर्लभः कदा सखीभिरस्रोत्तरमीक्षितामिमाम् ।**
**तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥ ६१ ॥**

नेति ॥ प्रार्थितः सन्दुर्लभः **प्रार्थितदुर्लभः स** देवः **तपःकृशां** तपसा कृशां क्षीणामत एव **सखीभिः अस्रोत्तरम्** अश्रु प्रधानं यथा भवति तथा **ईक्षिताम् इमां** नः **सखीं** [ **तदवग्रहक्षतां** ] तस्येन्द्रस्यावग्रहेणानावृष्ट्या क्षतां पीडिताम् । 'वृष्टिर्वर्षे तद्विघातेऽवग्राहावग्रहौ समौ ।' इत्यमरः । 'अवे ग्रहो वर्षप्रतिबन्धे' इत्यप् प्रत्ययः । **सीतां** कृष्टभुवम् । 'सीता लाङ्गलपद्धतिः' इत्यमरः । **वृषा** वासवः **इव** । 'वासवो वृत्रहा वृषा' इत्यमरः ॥ **कदा अभ्युपपत्स्यते** कदा अनुग्रहीष्यति **न वेद्मि** । अत्र वाक्यार्थः कर्म । तदवग्रहक्षतामित्यत्रावग्रहक्षतामित्यनेनैव गतार्थत्वे तत्पदस्य वैयर्थ्यापत्तेस्तदिति भिन्नं पदं वेद्मीत्यस्य कर्मेति युक्तमुत्पश्यामः ॥

**अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।**
**अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥ ६२ ॥**

अगूढेति ॥ **इङ्गितज्ञया** पार्वतीहृदयाभिज्ञया । 'इङ्गितं हृद्गतो भावः' इति सज्जनः । **तया** गौरीसख्या **इति** एवम् **अगूढसद्भावं** प्रकाशितसदभिप्रायं यथा तथा **निवेदितः** ज्ञापितः । [ **नैष्ठिकसुन्दरः** ] निष्ठा मरणमवधिर्यस्य स नैष्ठिको यावज्जीवब्रह्मचारी । सुन्दरो विलासी । नैष्ठिकश्चासौ सुन्दरश्चेति तथोक्तः । द्वयोरन्यतरस्य विशेषणत्वविवक्षायां विशेषणसमासः । किं तु नैष्ठिकत्वविशेषणेन कामित्वविरोधः । अथ वा देवस्यालौकिकमहिमत्वादुभयं तात्त्विकमिति न विरोधः । [ **अव्यञ्जितहर्षलक्षणः** ] अभ्यञ्जितं हर्षलक्षणं मुखरागादि हर्षलिङ्गं यस्य तथाभूतः सन् । **अयि** गौरी । अयीति कोमलामन्त्रणे । **इदं** त्वत्सखीभाषितम् **एवम्** । सत्यं किमित्यर्थः । **परिहासः** केलिर्वा । 'द्रवकेलिपरीहासाः' इत्यमरः । **इति** एवम् **उमाम् अपृच्छत** पृष्टवान् ॥

**अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।**
**कथंचिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥ ६३ ॥**

१ बद्धम्. २ अस्राकुल; अस्रान्तरवीं०, अश्रान्त-अस्रान्त-निरी०. ३ अभ्यवप०. ४ अपाद०. ५ मण्डलम्.

अथेति ॥ **अथ** अनन्तरम् **अद्रेः तनया** पार्वती **मुकुलीकृताङ्गुली** संपुटीकृताङ्गुली । अग्रश्चासौ हस्तश्चेति समाधानाधिकरणसमासः । 'हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदात्' इति वामनः । तस्मिन् **अग्रहस्ते [स्फटिकाक्षमालिकाम्]** स्फटिकानामक्षमालिकां जपमालिकाम् **समर्पयन्ती** आमुञ्चती **कथंचित्** महता कष्टेन **चिरव्यवस्थापितवाक्** चिरेण स्वीकृतवाक् । एतेन लज्जोपरोधो व्यज्यते । **मिताक्षरं** परिमितवर्णं यथा तथा **अभाषत** बभाषे ॥

किमुवाचेत्याह—

**यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥ ६४ ॥**

यथेति ॥ हे **वेदविदां वर** वैदिकश्रेष्ठ । **त्वया यथा श्रुतं** सम्यक्श्रुतम् । श्रुतार्थमेवाह—**अयं जनः** । स्वयमित्यर्थः । **[उच्चैःपदलङ्घनोत्सुकः]** उच्चैःपदस्य शिवलाभरूपोन्नतस्थानस्य लङ्घने आक्रमणे उत्सुकः । किमत्रायुक्तमित्यत्राह—**इदं तपः [तदवाप्तिसाधनं]** तदवाप्तेस्तस्योच्चैःपदस्यावाप्तेः प्राप्तेः साधनं **किल** । किलेत्यलीके । अतितुच्छत्वादसाधकमेवेत्यर्थः । तर्हि त्यज्यतामित्याशङ्क्य दुराशा मां न मुञ्चतीत्याशयेनाह—**मनोरथानां** कामानाम् **अगतिः** अविषयः **न विद्यते** । न हि स्वशक्तिपर्यालोचनया कामाः प्रवर्तन्त इति भावः ॥

**अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।**
**अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥ ६५ ॥**

अथेति ॥ **अथ वर्णी** ब्रह्मचारी । 'वर्णिनो ब्रह्मचारिणः' इत्यमरः । **आह** । उवाचेत्यर्थः । 'आहेति भूतार्थे लट्प्रयोगो भ्रान्तिमूलः' इत्याह वामनः । किमित्याह—**महेश्वरः** महादेवः **विदितः** । मया ज्ञायत इत्यर्थः । बुद्ध्यर्थत्वाद्वर्तमाने क्तप्रत्ययः । तद्योगात्षष्ठी च । येन त्वं प्राग्भग्नमनोरथा कृतेति भावः । **पुनरेव त्वं** तमीश्वरमर्थयते **तदर्थिनी** एव तत्कामैव **वर्तसे** । तत्प्रभावमनुभूयापीति भावः । अनुसरणे को दोषस्तत्राह—**[अमङ्गलाभ्यासरतिं]** अमङ्गलाभ्यासे अमङ्गलाचारे रतिर्यस्य तं तथोक्तं **तम्** ईश्वरं **विचिन्त्य** विचार्य **तवानुवृत्तिम्** अनुसरणं **कर्तुं न उत्सहे च** । नानुमन्तुं शक्नोमीत्यर्थः ॥

**अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।**
**करेण शंभोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥ ६६ ॥**

अवस्त्विति ॥ अवस्तुनि तुच्छवस्तुनि निर्बन्धोऽभिनिवेशः परं प्रधानं यस्यास्तस्याः संबुद्धिः **अवस्तुनिर्बन्धपरे** पार्वति । **[आमुक्तविवाहकौतुकः]** आमुक्तमासञ्जितं विवाहे यत्कौतुकं हस्तसूत्रं तद्यस्य सः **ते अयं करः** । 'कौतुकं मङ्गले हर्षे

१ पुर एव. २ रतम्. ३ नु. ४ भुजेन.

हस्तसूत्रे कुतूहले ।' इति शाश्वतः । **वलयीकृताहिना** भूषणीकृतसर्पेण **शंभोः** महादेवस्य **करेण** करणभूतेन [ **तत्प्रथमावलम्बनं** ] तदेव प्रथमं तत्प्रथमम् । अपरिचितत्वादतिभयंकरमिति भावः । तच्च तदवलम्बनं ग्रहणं चेति **कथं नु सहिष्यते** । न कथंचिदपि सहिष्यत इत्यर्थः । अग्रतो यद्भावि तद्दूरेऽवतिष्ठतां प्रथमं करग्रह एव दुःसह इति भावः ॥

**त्वमेव तावत्परिचिन्तय स्वयं कदाचिदेते यदि योगमर्हतः ।**
**वधूदुकूलं[1] कलहंसलक्षणं गजाजिनं शोणितबिन्दुवर्षि च ॥ ६७ ॥**

त्वमेवेति ॥ हे गौरि । **त्वम् एव स्वयम्** आत्मना । **तावत्** इति मानार्थे । यावन्मात्रं विचारणीयं तावन्मात्रमित्यर्थः । इदमेवोदाहृतं च गणव्याख्याने । **परिचिन्तय** पर्यालोचय । किमिति । **कलहंसलक्षणं** कलहंसचिह्नम् । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । वध्वा नवोढाया दुकूलं **वधूदुकूलम्** । 'वधूः स्नुषा नवोढा स्त्री' इति विश्वः । तथा [ **शोणितबिन्दुवर्षि** ] शोणितबिन्दून्वर्षतीति तथोक्तम् । आर्द्रमित्यर्थः । **गजाजिनं च** कृत्तिवासश्च । तत्पिनाकिनः इत्याशयः । **एते कदाचित्** जात्वपि **योगं** संगतिम् **अर्हतः यदि** अर्हतः किम् । एतत्त्वमेव चिन्तयेति पूर्वेणान्वयः । पाणिग्रहणकाले वधूवरयोर्वस्त्रान्तग्रन्थिः क्रियते । कृत्तिवाससा पाणिपीडने तु दुकूलधारिण्यास्तव स कथं संघटिष्यत इति भावः ॥

**चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते[3] ।**
**अलक्तकाङ्कानि पदानि पादयोर्विकीर्ण[4]केशासु परेतभूमिषु ॥ ६८ ॥**

चतुष्केति ॥ [ **चतुष्कपुष्पप्रकरावकीर्णयोः** ] चतुष्के गृहविशेषे यः पुष्पप्रकरस्तत्रावकीर्णयोर्न्यस्तयोः । कुसुमास्तृतदिव्यभवनभूसंचाराचितयोरित्यर्थः । **तव पादयोः अलक्तकाङ्कानि** लाक्षारञ्जितानि **पदानि** पादाकाराणि पादन्यासचिह्नानि । 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोः' इति विश्वः । विकीर्णा विक्षिप्ताः केशाः शवशिरोरुहा यासु तासु **विकीर्णकेशासु** । 'अतत्स्थं तत्र दृष्टं च' इति वचनात् 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति विकल्पान्न ङीष् । **परेतभूमिषु** प्रेतभूमिषु । श्मशानेष्वित्यर्थः । **परः अपि** शत्रुरपि **कः नाम अनुमन्यते** । न कोऽपीत्यर्थः । नामेति कुत्सायाम् । पिनाकपाणिपाणिग्रहणे तस्य परेतभूसंचारित्वेन साहचर्यात्तवापि तत्र संचारोऽवश्यंभावीति भावः ॥

**अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि[5] यत् ।**
**स्तनद्वयेऽस्मिन्हरिचन्दनास्पदे[6] पदं चिताभस्मरजः करिष्यति ॥ ६९ ॥**

अयुक्तेति ॥ **त्रिनेत्रवक्षः** । त्र्यम्बकालिङ्गनमित्यर्थः । **तव** तत्संबन्धितया **सुलभम् अपि** सुप्रापं च । भवतीति शेषः । तवेति शेषे षष्ठी । 'न लोकाव्यय-' इत्या-

---

१ स्वतः; द्वयं. २ च सहं०; क्व च हं०... क्व चाजिनं...तत्. ३ अनुमंस्यते. ४ प्रकीर्ण. ५ भवेत्. ६ अङ्किते.

दिना कृद्योगलक्षणषष्ठ्या निषेधात् । **अतः परम्** अस्मात्त्रिनेत्रवक्षोलाभादन्यद् **अयुक्तरूपम्** अत्यन्तायुक्तं **किं वद** । न किंचिदित्यर्थः । 'प्रशंसायां रूपप्' इति रूपप्प्रत्ययः । कुतः । **यत्** यस्मात्कारणात् **हरिचन्दनास्पदे** हरिचन्दनस्यास्पदे स्थानभूते **अस्मिन् स्तनद्वये [ चिताभस्मरजः ]** चिताभस्म श्मशानभस्म तदेव रजश्चूर्णम् । कर्तृ । **पदं करिष्यति** पदं निधास्यति । भर्तुर्भवस्य भस्माङ्गरागादिति भावः ॥

**इयं च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया ।**
**विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ७०**

इयमिति ॥ **इयं च ते** तव **पुरतः** आदावेव **अन्या विडम्बना** । परिहास इत्यर्थः । का सेत्यत्राह—**ऊढया** परिणीतया । वहेः कर्मणि क्तः । **वारणराजहार्यया त्वया अधिष्ठितम्** आरूढं वृद्धमुक्षाणं **वृद्धोक्षम्** । 'अचतुर–' इत्यादिना निपातः । **विलोक्य महाजनः** साधुजनः **स्मेरमुखः** स्मितमुखः **भविष्यति** उपहसिष्यति **यत्** । इयमिति पूर्वेण संबन्धः । स्मेरेति 'नमिकम्पिस्म्यज–' इत्यादिना रप्रत्ययः ॥

**द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी।७१।**

द्वयमिति ॥ **पिनाकिनः** ईश्वरस्य **समागमप्रार्थनया** प्राप्तिकामनया । क्रियमाणयेति शेषः । **संप्रति द्वयं शोचनीयतां** शोच्यत्वं **गतम्** । किं तदाह—**सा** प्रागेव हरशिरोगता । अत्र सेति प्रसिद्धार्थत्वान्न यच्छब्दापेक्षा । तदुक्तं काव्यप्रकाशे—'प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यदुपादानं नापेक्षते ।' इति । **कान्तिमती** । नित्ययोगे मतुप् । **कलावतः** चन्द्रस्य **कला** षोडशो भागः **च** । **अस्य लोकस्य नेत्रकौमुदी** । नेत्रानन्दिनीत्यर्थः । **त्वं च** । कान्तिमतीत्वनेत्रकौमुदीत्वविशेषणयोरुभयत्राप्यन्वयः । प्रागेकैव शोच्या । संप्रति तु त्वमप्यपरेति द्वयं शोच्यमिति पिण्डितार्थः । शोच्यत्वं च निकृष्टाश्रयणादिति भावः ॥

'कन्या वरयते रूपं माता वित्तं पिता श्रुतम् । बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥' इति लोकानामाभाषणम् । तत्र किंचिदपि नास्तीत्याह—

**वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।**
**वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने॥७२॥**

वपुरिति ॥ **वपुः** तवादस्य विरूपाणि विकृतरूपाण्यक्षीणि नेत्राणि यस्य तद् **विरूपाक्षम्** । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति षच्प्रत्ययः । वैरूप्यं च त्रिनेत्रत्वादिति क्षीरस्वामी । अतो न सौन्दर्यवार्तापीत्यर्थः । **[ अलक्ष्यजन्मता ]** अलक्ष्यम-

१ भार्यया. २ कपालिनः. ३ कलात्मनः.

ज्ञातं जन्म यस्य तस्य भावस्तत्ता । कुलमपि न ज्ञायत इत्यर्थः । 'अलक्षिता जनिः' इति पाठे जनिरुत्पत्तिरलक्षिता न ज्ञाता । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । **वसु** वित्तं **दिगम्बरत्वेन एव निवेदितम्** । नास्तीति ज्ञापितमित्यर्थः । यदि वित्तं भवति तदा कथं दिगम्बरो भवति । अतो ज्ञेयं निर्धनोऽयमिति । किंबहुना । हे **बालमृगाक्षि** पार्वति **वरेषु** वोढृषु । 'वरौ जामातृवोढारौ' इति विश्वः । **यत्** रूपवित्तादिकं **मृग्यते** कन्यातद्बन्धुभिरन्विष्यते **तत् त्रिलोचने** त्र्यम्बके **व्यस्तम् एकम् अपि** । समस्तं मा भूदिति भावः । **अस्ति किम्** । नास्त्येवेत्यर्थः ॥

**निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।**
**अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥७३॥**

निवर्तयेति ॥ **अस्माद् असदीप्सितात्** अनिष्टमनोरथात् **मनः निवर्तय** निवारय । [ **तद्विधः** ] सा पूर्वोक्ता विधा प्रकारो यस्य तथोक्तः । अमङ्गलशील इत्यर्थः । **क्व** । महदन्तरमित्यर्थः । **पुण्यलक्षणा** प्रशस्तभाग्यचिह्ना **त्वं च क्व** । अतो न तवायमर्ह इत्यर्थः । तथा हि । **साधुजनेन** । 'साधुर्वार्धुषिके चारौ सज्जने चाभिधेयवत् ।' इति विश्वः । **श्मशानशूलस्य** श्मशानभूमिनिखातस्य मध्यशङ्कोः **वैदिकी** वेदोक्ता । यूपो नाम पशुबन्धनसाधनभूतः संस्कृतदारुविशेषस्तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारः **यूपसत्क्रिया न अपेक्ष्यते** नेष्यते । यथा श्मशानशूले यूपसत्क्रिया न क्रियते तथा त्वमपि तस्मै न घटस इति तात्पर्यार्थः ॥

**इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।**
**विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥ ७४ ॥**

इतीति ॥ **इति** एवं प्रकारेण **द्विजातौ** द्विजे **प्रतिकूलवादिनि** सति । [ **प्रवेपमानाधरलक्ष्यकोपया** ] प्रवेपमानेन चञ्चलेनाधरोष्ठेन लक्ष्यः अनुमेयः कोपः क्रोधो यस्यास्तथोक्तया **तया** पार्वत्या **उपान्तलोहिते** प्रान्तरक्ते **विलोचने** [ **विकुञ्चितभ्रूलतं** ] विकुञ्चिते कुटिलिते भ्रूलते यस्मिंस्तत्तथा । सभ्रूभङ्गमित्यर्थः । **तिर्यक्** साचि **आहिते** निहिते । अनादरात्तिर्यगैक्ष्यतेत्यर्थः ॥

**उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।**
**अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥**

उवाचेति ॥ अथ **एनं** ब्रह्मचारिणं **उवाच च** । किमिति । **परमार्थतः** तत्त्वतः **हरं न वेत्सि** न जानासि **नूनम्** । कुतः । **यतः माम् एवम्** उक्तया रीत्या **आत्थ** ब्रवीषि । 'ब्रुवः पञ्चानामादितः—' इति रूपसिद्धिः । अज्ञानादेवायं शिवद्वेषस्तवेत्याशयेनाह—**मन्दाः** मूढाः । 'मूढाल्पापटुनिर्भाग्या मन्दाः' इत्यमरः । लोकसामान्यमितरजनसाधारणं न भवति इति **अलोकसामान्यम् अचिन्त्यहेतुकं** दुर्बोधका-

१ अपेक्षते साधुजनो न वैदिकीं...हि यूपसत्क्रियाम्. २ निकु..—भ्रूलतया.

रणकं महात्मनां चरितं द्विषन्ति हेत्वपरिज्ञानाद्दूषयन्ति । विद्वांसस्तु कोऽप्यत्र हेतुरस्तीति बहु मन्यन्त इत्यर्थः ॥

संप्रति ' अमङ्गलाभ्यासरतिम् ( ५।६५ ) इत्याद्युक्तदूषणजातं विपदित्यादिभिः षड्भिः श्लोकैः परिहर्तुमारभते—

**विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।**
**जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥७६॥**

विपदिति ॥ **विपत्प्रतीकारपरेण** । अनर्थपरिहारार्थिनेत्यर्थः । ' उपसर्गस्य घञ्यमनुष्ये बहुलम् ' इति दीर्घः । **भूतिसमुत्सुकेन** ऐश्वर्यकामेन **वा मङ्गलं** गन्धमाल्यादिकं **निषेव्यते** । शरणे रक्षणे साधुः शरण्यः । ' तत्र साधुः ' इति यत्प्रत्ययः । ' शरणं गृहरक्षित्रोः ' इत्यमरः । जगतः शरण्यस्तस्य **जगच्छरण्यस्य निराशिषः** निरभिलाषस्य **सतः** शिवस्य । ' आशीरुरगदंष्ट्रायां विप्रवाक्याभिलाषयोः । ' इति शाश्वतः । [ **आशोपहतात्मवृत्तिभिः** ] आशया तृष्णयोपहता दूषितात्मवृत्तिरन्तःकरणवृत्तिर्यैर्षां तैः **एभिः** मङ्गलैः **किम्** । वृथेत्यर्थः । पूर्वं मङ्गलमित्येकवचनस्य जात्यभिप्रायत्वादेभिरिति बहुवचनेन परामर्शो न विरुध्यते । इष्टावाप्त्यनिष्टपरिहारार्थिनो हि मङ्गलाचारानिर्बन्धः । तदुभयासंसृष्टस्य तु यथाकथंचिदास्ताम् । को दोष इत्यर्थः । एतेन ' अमङ्गलाभ्यासरतिम् ' ( ५।६५ ) इत्युक्तं प्रत्युक्तम् ॥

**अकिंचनः सन्प्रभवः स संपदां त्रिलोकनाथः पितृसद्मगोचरः ।**
**स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥**

अकिंचन इति ॥ **स** हरः । न विद्यते किंचनं द्रव्यं यस्य सः **अकिंचनः** दरिद्रः **सन् संपदां** प्रभवत्यस्मादिति **प्रभवः** कारणम् । **पितृसद्मगोचरः** श्मशानाश्रयः सन् [ **त्रिलोकनाथः** ] त्रयाणां लोकानां नाथः । ' तद्धितार्थ—'इत्यादिनोत्तरपदसमासः । **स** देवो **भीमरूपः** भयंकराकारः सन् **शिवः** सौम्यरूप **इति उदीर्यते** उच्यते । अतः **पिनाकिनः** हरस्य [ **याथार्थ्यविदः** ] यथाभूतोऽर्थो यथार्थस्तस्य भावो याथार्थ्यं तत्त्वं तस्य विदः **न सन्ति** । लोकोत्तरमहिम्ना निर्लेपस्य यथाकथंचिदवस्थानं न दोषायेति भावः । एतेन ' अवस्तुनिर्बन्धपरे ' ( ५।६६ ) इति परिहृतं वेदितव्यम् ॥

देवस्य लौकिकमलौकिकं च प्रसाधनं नास्तीत्याशयेनाह—

**विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।**
**कपालि वा स्यादथ वेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥ ७८ ॥**

---

१ किमाभिः. २ स लोकनाथः. ३ याथात्म्य. ४ अथ चन्द्रशेखरम्.

विभूषणेति ॥ विश्वं मूर्तिर्यस्येति **विश्वमूर्तेः** अष्टमूर्तेः शिवस्य **वपुः** शरीरं भूषणैरु-द्भासत इति **विभूषणोद्भासि** स्यात् । **पिनद्धभोगि** आमुक्तभुजङ्गमं **वा** स्यात् । पिनद्धेति नह्यतेरपिपूर्वात्कर्मणि क्तः । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।' इत्यकारलोपः । **गजाजिनालम्बि** स्यात् । अथ **वा दुकूलधारि** स्यात् । कपालमस्यास्तीति **कपालि** ब्रह्मशिरःकपालशेखरं **वा स्यात्** । अथ **इन्दुशेखरं वा** स्यात् । **न अवधार्यते** न निर्धार्यते । सर्वं संभवतीत्यर्थः । एतेन 'त्वमेव तावत्' (५।६७) श्लोकोक्तं प्रत्युक्तमिति ज्ञेयम् ॥

'अयुक्तरूपं किमतःपरं वद' इति (५।६९) श्लोकोक्तं प्रत्याह—

**तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।**
**तथा हि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥**

तदङ्गेति ॥ [ **तदङ्गसंसर्गम्** ] तस्य शिवस्याङ्गं तस्य संसर्गम् **अवाप्य** आसाद्य [ **चिताभस्मरजः** ] चिताभस्मैव रजो **विशुद्धये कल्पते** । अलं पर्याप्नोतीत्यर्थः । अलमर्थयोगात् 'नमःस्वस्तिस्वाहा'–इत्यादिना चतुर्थी । **ध्रुवं** शोधकत्वं प्रमाणसिद्धमित्यर्थः । प्रमाणमेवाह–**तथा हि** । प्रसिद्धमेवेत्यर्थः [ **नृत्याभिनयक्रियाच्युतं** ] नृत्ये ताण्डवे योऽभिनयोऽर्थव्यञ्जकचेष्टाविशेषः स एव क्रिया तया निमित्तेन च्युतं पतितम् । चिताभस्मरजः इति शेषः । **अम्बरौकसां** देवानां **मौलिभिः विलिप्यते** ध्रियते । अशुद्धं चेत्कथमिन्द्रादिभिर्ध्रियेतेत्यर्थापत्तिरनुमानं वा प्रमाणमित्यर्थः ॥

यदुक्तम् 'दिगम्बरत्वेन निवेदितं वसु' (५।७२) 'इयं च तेऽन्या पुरतो विडम्बना' (५।७०) इत्यादि च तत्रोत्तरमाह—

**असंपदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।**
**करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोरुणाङ्गुली ॥८०॥**

असंपद इति ॥ [ **प्रभिन्नदिग्वारणवाहनः** ] प्रभिन्नो मदस्रावी दिग्वारणो दिग्गजो वाहनं यस्य सः । ऐरावतेनोढ इत्यर्थः । **वृषा** देवेन्द्रः **असंपदः** दरिद्रस्य **वृषेण गच्छतः** वृषभारूढस्य **तस्य** ईश्वरस्य **पादौ मौलिना** मुकुटेन **उपगम्य** प्रणम्येत्यर्थः । [ **विनिद्रमन्दाररजोरुणाङ्गुली** ] विनिद्राणां विकसितानां मन्दाराणां कल्पतरुकुसुमानां रजोभिः परागैररुणा अङ्गुलयो ययोस्तौ तथोक्तौ **करोति** । दिग्गजारोहिणामिन्द्रादीनामपि वन्द्यस्येन्दुमौलेः किं संपदा वृषारोहणे वा को दोष इत्यर्थः ॥

यदुक्तम् 'अलक्ष्यजन्मता' (५।७२) इति तत्रोत्तरमाह—

**विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।**
**यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥८१॥**

---

१ संस्पर्शम्. २ जोऽपि शु०. ३ नृत्ता. ४ विलुप्यते. ५ उपम्य. ६ विवृण्वता.

विवक्षतेति ॥ **च्युतात्मना** नष्टस्वभावेनात एव **दोषं** दूषणं **विवक्षता** वक्तुमिच्छता **अपि त्वया ईशं प्रति एकम्** अलक्ष्यजन्मता इत्येतदेकम् । वच इत्यर्थः । **साधु भाषितं** सम्यगुक्तम् । कुतः । **यम्** ईश्वरम् **आत्मभुवः अपि** ब्रह्मणोऽपि । 'ब्रह्मात्मभूः सुरज्येष्ठः' इत्यमरः । **कारणम् आमनन्ति** उदाहरन्ति । विद्वांस इति शेषः । 'पाघ्राध्मास्थाम्नादाण्'—इत्यादिना मनादेशः । **स** ईश्वरः **कथं लक्ष्यप्रभवः** लक्ष्यजन्मा **भविष्यति** । अनादिनिधनस्य भगवतः कारणशङ्का कलङ्कश्च नान्विष्यत इत्यर्थः ॥

**अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।**
**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥ ८२ ॥**

अलमिति ॥ अथ वा **विवादेन** कलहेन **अलम्** । **त्वया तावत् यथा** येन प्रकारेण **स** ईश्वरः **श्रुतः अशेषं** कात्स्न्र्येन **तथाविधः** तावत्प्रकारः एव **अस्तु** । **मम मनः** तु **अत्र** ईश्वरे [ **भावैकरसं** ] भावः शृङ्गार एकोऽद्वितीयो रस आस्वाद्यो यस्य तत्तथा **स्थितम्** । तथा हि । **कामवृत्तिः** स्वेच्छाव्यवहारी **वचनीयम्** अस्थानसङ्गापवादं **नईक्षते** न विचारयति । न हि स्वेच्छासंचारिणो लोकापवादाद्बिभ्यतीति भावः ॥

**निवार्यतामालि किमप्ययं बटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।**
**न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥ ८३ ॥**

निवार्यतामिति ॥ हे **आलि** सखि । 'आलिः सखी वयस्या च' इत्यमरः । **स्फुरितोत्तराधरः** स्फुरणभूयिष्ठोष्ठः **अयं बटुः** माणवकः **पुनः किम् अपि विवक्षुः** वक्तुमिच्छुः । ब्रुवः सन्नन्तादुप्रत्ययः । **निवार्यताम्** । तर्हि वक्तुमेव कथं न ददासीत्याह–तथा हि । **यः महतः** पूज्यान् **अपभाषते** अपवदति **न केवलं** स पापभाक् भवति । किं तु **तस्मात्** अपभाषमाणात्पुरुषात् **यः शृणोति सोऽपि पापभाक्** । भवतीति शेषः । अत्र स्मृतिः—'गुरोः प्राप्तः परीवादो न श्रोतव्यः कथंचन । कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥' इति ॥

संप्रति गन्तव्यपक्षमाश्रयते—

**इतो गमिष्याम्यथ वेति वादिनी चचाल बाला स्तनभिन्नवल्कला ।**
**स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥ ८४ ॥**

इत इति ॥ **अथ वा इतः** अन्यत्र **गमिष्यामि इति वादिनी** वदन्ती [ **स्तनभिन्नवल्कला** ] स्तनाभ्यां भिन्नवल्कला रयवशात्कुचस्खलत्चीरा **बाला** पार्वती **चचाल** । **वृषराजकेतनः** वृषभध्वजः **च स्वरूपम् आस्थाय** निजरूपमाश्रित्य **कृतस्मितः** सन् । **तां** पार्वतीं **समाललम्बे** जग्राह ॥

---

१ श्रुतम्. २ तादृक्. ३ वशं. ४ स्थिरम्. ५ व्यसौ. ६ तोन्नताधरः. ७ महतां–तो–विभाषते. ८ सा च. ९ रय. १० आधाय.

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि—
निक्षेपणाय[1] पदमुद्धृतमुद्वहन्ती[2] ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ ८५ ॥

तमिति ॥ तं देवं वीक्ष्य वेपथुमती सरसाङ्गयष्टिः स्विन्नगात्री । महादेवदर्शनेन देव्याः सात्त्विकभावोदय उक्तः । निक्षेपणाय अन्यत्र विन्यासाय उद्धृतम् उत्क्षिप्तं पदम् अङ्घ्रिम् उद्वहन्ती । शैलाधिराजतनया पार्वती [ मार्गाचलव्यतिकराकुलिता ] मार्गेऽचलस्तस्य व्यतिकरेण समाहत्या । अवरोधनेनेति यावत् । आकुलिता संभ्रमिता सिन्धुः नदी इव । 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् ।' इत्यमरः । न ययौ न तस्थौ । लज्जयेति भावः । वसन्ततिलकावृत्तमेतत् ॥

अद्य प्रभृत्यवनताङ्गि[3] तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लमसुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते[4] ॥ ८६ ॥

अद्येति ॥ चन्द्रमौलौ शिवे । हे अवनताङ्गि पार्वति अद्य प्रभृति अस्माद्दिनादारभ्येत्यर्थः । प्रभृतियोगादद्येति सप्तम्यर्थवाचिना पञ्चम्यर्थो लक्ष्यते । तव तपोभिः क्रीतः । 'दासृ दाने' । दासते आत्मानं ददातीति दासः । अस्मि इति वादिनि वदति सति सा देवी अह्नाय सपदि । 'स्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुतम् ।' इत्यमरः । नियमजं तपोजन्यं क्लमं क्लेशं उत्ससर्ज । फलप्राप्त्या क्लेशं विसस्मारेत्यर्थः । तथा हि क्लेशः फलेन फलसिद्ध्या पुनर्नवतां विधत्ते । पूर्ववदेवाक्लिष्टतामापादयतीत्यर्थः । सफलः क्लेशो न क्लेश इति भावः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनी-
समाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमार-
संभवे महाकाव्ये तपःफलोदयो नाम पञ्चमः सर्गः ॥

---

१ निक्षेप एव. २ मर्पयन्ती. ३ त्यनवमाङ्गि. ४ पिधत्ते.

# षष्ठः सर्गः ।

अथ विश्वात्मने गौरी संदिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥

अथेति ॥ अथ देवदेवानुग्रहानन्तरं गौरी पार्वती विश्वमात्मा स्वरूपं यस्येति विश्वस्यात्मेति वा विश्वात्मने शिवाय मिथः रहसि । 'मिथोऽन्योन्यं रहस्यपि' इत्यमरः । सखीं संदिदेश अतिससर्ज । क्रियामात्रप्रयोगेऽपि संप्रदानत्वाच्चतुर्थी । किमिति । भूभृतां नाथः हिमवान् मे मम दाता सन् । प्रमाणीक्रियताम् इति । दातृत्वेन प्रमाणीक्रियतामित्यर्थः । प्रार्थनायां लोट् । पित्रा दीयमानायाः परिग्रहो मम महाननुग्रह इति भावः ॥

तया व्याहृतसंदेशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्यासे मधौ परभृतोन्मुखी ॥ २ ॥

तयेति ॥ तया सख्या । सखीमुखेनेत्यर्थः । व्याहृतसंदेशा उक्तवाचिका । प्रिये हरविषये निभृता निश्चला । परमासक्तेत्यर्थः । सा गौरी मधौ वसन्ते निभृता स्थिरा परभृतया कोकिलयोन्मुखी मुखरा परभृतोन्मुखी । मुखशब्देनाभिभाषणव्यापारो लक्ष्यते । तथा च परभृतामुखेन व्याहरन्तीत्यर्थः । परभृतेति क्रियाशब्दाविवक्षायाम् 'जातेरस्त्री'—इति ङीष्प्रत्ययो न भवति । तयेत्युपमेयस्य व्यस्तत्वादुपमानवाचि परभृताशब्दस्य समासः सोढव्यः । अथ वा भृद्भरणम् । संपदादित्वात्क्विप् । परैर्भृद्यस्यास्तया परभृतेति व्यासेन व्याख्येयम् । पदमञ्जरीकारस्तु परैर्भ्रियत इति कर्मणि क्विपमाह । चूतयष्टिः चूतशाखा इव अभ्यासे अन्तिके बभौ । 'सदेशाभ्याससविधसमर्यादसवेशवत् । उपकण्ठान्तिकाभ्यर्णाभ्यग्रा अप्यभितोऽव्ययम् ॥' इत्यमरः ॥

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीञ्ज्योतिर्मयान्सप्त सस्मार स्मरशासनः ॥ ३ ॥

स इति ॥ स प्रकृतः । [ स्मरशासनः ] शास्तीति शासनः । बहुलग्रहणात्कर्तरि ल्युट् । स्मरस्य शासनः ईश्वरः तथा इति प्रतिज्ञाय । तथा करिष्यामीत्युक्त्वेत्यर्थः । उमां कथम् अपि कृच्छ्रेण विसृज्य । तत्र गाढानुरागत्वादिति भावः । ज्योतिर्मयान् तेजोरूपान् सप्त ऋषीन् आङ्गिरःप्रभृतीन् सस्मार स्मृतवान् ॥

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः[1] सपदि प्रादुरासन्पुरः प्रभोः ॥ ४ ॥

---

१ अत्र वसिष्ठपत्नीमात्रस्यागमनवर्णनं तत्पातिव्रत्यस्यान्यपत्नीपातिव्रत्येभ्यो व्यतिरेकं द्योतयितुम् । एवं हि पुराणप्रसिद्धिः—सप्तर्षीणां पुरा पत्नीरकामयत पावकः । विज्ञातवृत्ता स्वाहाथ तासां रूपेण पावकम् ॥ रमयामास सुचिरं न शशाक मनागपि । यत्नैररुन्धतीरूपं ग्रहीतुं मुनयस्ततः ॥ अन्ये तु तत्यजुः पत्नीः—इति ना० प०

त इति ॥ ते तप एव धनं येषां ते **तपोधनाः** सप्तर्षयः **प्रभामण्डलैः** तेजः-पुञ्जैः **व्योम** आकाशं **द्योतयन्तः** प्रकाशयन्तः । अरुन्धत्या सह वर्तन्त इति **सारु-न्धतीकाः** सन्तः । 'नद्यृतश्च' इति कप् । **सपदि प्रभोः** ईश्वरस्य **पुरः** पुरोभागे **प्रादुरासन्** प्रत्यक्षा बभूवुः ॥

इतः परं षड्भिः श्लोकैस्तानेव मुनीन् वर्णयति—

**आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।**
**व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥**

आप्लुता इति ॥ [ **तीरमन्दारकुसुमोत्किरवीचिषु** ] उत्किरन्ति विक्षिपन्ती-त्युत्किराः । 'इगुपध'—इत्यादिना कप्रत्ययः । तीरे ये मन्दाराः कल्पवृक्षास्तेषां कुसुमानामु-त्किरा वीचयस्तरङ्गा येषां तेषु । [ **दिङ्नागमदगन्धिषु** ] दिङ्नागानां दिग्गजानां मद-गन्धो येष्विति तथोक्तेषु **व्योमगङ्गाप्रवाहेषु** आकाशगङ्गास्रोतःसु **आप्लुताः** स्नाताः ॥

**मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।**
**रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाश्रिताः ॥ ६ ॥**

मुक्तेति ॥ [ **मुक्तायज्ञोपवीतानि** ] मुक्तानां मौक्तिकानां यज्ञोपवीतानि । मुक्ता-मयानीत्यर्थः । **बिभ्रतः** दधानाः । हेममयानि वल्कलानि येषां ते **हैमवल्कलाः** । रत्नमयान्यक्षसूत्राणि येषां ते **रत्नाक्षसूत्राः** । **प्रव्रज्यां** प्रव्रजनम् । 'व्रजयजोर्भावे क्यप्' इति क्यप् । **आश्रिताः कल्पवृक्षा इव** स्थिताः । अत्र चतुर्थाश्रमवाचिना प्रव्रज्याशब्देन वानप्रस्थाश्रमो लक्ष्यते । 'जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः' ( ६।३४ ) इति सपत्नीकत्वाभिधानात् 'सुतविन्यस्तपत्नीकस्तया वानुगतोऽपि सन् ।' इति वानप्रस्थ-स्योभयथा स्मरणात् ॥

**अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।**
**सहस्ररश्मिना साक्षात्सप्रणाममुदीक्षिताः ॥ ७ ॥**

अध इति ॥ **अधःप्रस्थापिताश्वेन** सूर्यमण्डलोपरिवर्तित्वात्सप्तर्षिमण्डलस्येति भावः । **समावर्जितकेतुना** तन्मण्डलाघातशङ्कया नामितध्वजेन **सहस्ररश्मिना** सूर्येण **साक्षात्** स्वयमेव **सप्रणामम् उदीक्षिताः** । गमनाभ्यनुज्ञादानपर्यन्तमित्यर्थः । भगवतः सूर्यस्याप्युपास्या इति भावः ॥

**आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।**
**महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥**

आसक्तेति ॥ पुनः किंविधाः । **प्रलयापदि** कल्पान्तसंकटे **आसक्तबाहुलतया** दंष्ट्रायामिति शेषः । **उद्धृतया** । दंष्ट्रयेति शेषः । **भुवा सार्धं** धरण्या सह **महावराह-दंष्ट्रायां विश्रान्ताः** । महाप्रलयेऽप्यविनाशिन इत्यर्थः ॥

---

१ कुसुमोत्कर. २ आकाशगङ्गास्रोतःसु. ३ हेम. ४ प्रव्रज्याः...आस्थिताः. ५ शश्वत्. ६ उद्धतया.

सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम्।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः॥ ९ ॥

सर्गेति॥ **विश्वयोनेः** ब्रह्मणः **अनन्तरं [सर्गशेषप्रणयनात्]** सर्गशेषस्य प्रणयनात्। ब्रह्मसृष्टावशिष्टसृष्टेः करणाद्धेतोरित्यर्थः। **पुराविद्भिः** पुराणवेदिभिर्व्यासादिभिः **पुरातनाः धातारः इति कीर्तिताः**। विश्वयोनेरिति संबन्धमात्रे षष्ठी तस्यानन्तरमिति भाष्ये दर्शनात्। अपादानत्वविवक्षायां तु पञ्चमी। अयमदःशब्दो यथाशब्दानुवृत्तादनन्तरस्येति शाबरभाष्ये दर्शनात्। तथा 'अथातो धर्मजिज्ञासा वेदाध्यायादनन्तरम्' इत्याचार्याः। कविश्च 'पुराणपत्रापगमादनन्तरम्' इति। एवमन्यत्रापि द्रष्टव्यम्॥

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम्।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः॥ १० ॥

प्राक्तनानामिति॥ **प्राक्तनानां** जन्मान्तरभवानां **विशुद्धानां** निर्मलानां **परिपाकं** फलदानोन्मुखत्वं **उपेयुषां** गतानां **तपसां फलानि उपभुञ्जानाः अपि तपस्विनः** तपोनिष्ठाः। प्रारब्धभोगिनो निस्पृहाश्चेति भावः॥ कुलकम्॥

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती॥ ११ ॥

तेषामिति॥ **तेषाम्** ऋषीणां **मध्यगता साध्वी** पतिव्रता। अत एव **पत्युः** वसिष्ठस्य **[पादार्पितेक्षणा]** पादयोरर्पितेक्षणा निविष्टदृष्टिः **अरुन्धती साक्षात्** प्रत्यक्षा **तपःसिद्धिः इव**। तेषामेवेति शेषः। तेषां मध्यगतेति लिङ्गवचनादिसाम्यादियमुपमा॥ **बहु** भूयिष्ठं **बभासे** भाति स्म॥

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्॥ १२ ॥

तामिति॥ **ईश्वरः** भगवान् **ताम्** अरुन्धतीं **मुनीन् च अगौरवभेदेन** समानप्रतिपत्त्या **अपश्यत्** दृष्टवान्। न चायमविवेक इत्याह—**हि** यस्मात् **स्त्री पुमान् च इति एषा अनास्था** स्त्रीपुंसभेदो न विवक्षितः। किं तु **सतां** साधूनां **वृत्तं** चरित्रमेव **महितं** पूज्यम्। 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।' इति भावः॥

तद्दर्शनादभूच्छंभोर्भूयान्दारार्थमादरः।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्॥ १३ ॥

तदिति॥ **तद्दर्शनात्** अरुन्धतीदर्शनात् **शंभोः दारार्थं** दारपरिग्रहार्थम् **आदरः भूयान्** बहुतर **अभूत्**। ननु दाराः कुत्रोपयुज्यन्त इत्यत्राह—**धर्म्याणां** धर्मादनपेतानाम्। 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः। **क्रियाणाम्** इज्यादीनां सत्यः पतिव्रताः पत्न्यः **सत्पत्न्यः**। 'पत्युर्नो यज्ञसंयोगे' इति ङीप्। नकारश्च। **मूलकारणं खलु**॥

---

१ भूयः, दारक्रिया०. २ साधनम्; दाम्पत्यं मूलसाधनम्.

धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥

धर्मेणेति ॥ धर्मेण दारसंजिघृक्षालक्षणेन अपि । कर्त्रा । शर्वे ईश्वरे पार्वतीं प्रति पदं कारिते सति । 'हृक्रोरन्यतरस्याम्' इति शर्वस्याणिकर्तुः कर्मत्वम् । पूर्वापराधभीतस्य कामस्य मनः उच्छ्वसितम् । पुनरुज्जीवनावकाशो भवतीति सप्रत्याशमभूदित्यर्थः ॥

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥

अथेति ॥ अथ अनूचानाः साङ्गवेदप्रवक्तारः । 'अनूचानः प्रवचने साङ्गेऽधीती गुरोस्तु यः ।' इत्यमरः । 'उपेयिवाननाश्वाननूचानश्च' इति निपातः । [ प्रीतिकण्टकितत्वचः ] प्रीत्या कण्टकिताः पुलकितास्त्वचो येषां ते तथोक्ताः । ते सर्वे मुनयः जगद्गुरुं हरं मानयित्वा पूजयित्वा इदं वक्ष्यमाणम् ऊचुः ॥

यद्ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥

यदिति ॥ ब्रह्म वेदः । 'वेदस्तत्त्वं तपो ब्रह्म' इत्यमरः । सम्यक् नियमपूर्वकम् आम्नातम् अधीतमिति यत् । अग्नौ विधिना हुतम् इति यत् । तपः चान्द्रायणादिकं तप्तम् इति च यत् । तस्य अध्ययनेज्यातपोरूपस्य आश्रमत्रयसाध्यस्य कृत्स्नस्यापि कर्मण इत्यर्थः । समुदायाभिप्रायकमेकवचनमन्यथा आनुस्यान्वयप्रसङ्गात् । न च नपुंसकैकवद्भावः अनपुंसकेनेति नियमात् । फलं कार्यम् अद्य नः अस्माकं विपक्वम् । सुनिष्पन्नमित्यर्थः । कर्मणि क्तः । 'पचो वः' इति निष्ठातस्य वत्वम् ॥

तदेव फलमाह—

यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥

यदिति ॥ यत् यस्मात्कारणात् जगताम् अध्यक्षेण अधिपेन त्वया वयं मनोरथस्य अभिलाषस्य अविषयम् अगोचरम् आत्मनः स्वस्य मनोविषयं मनोदेशम् आरोपिताः प्रापिताः । तस्माद्विपक्वं फलमिति पूर्वेण संबन्धः । सकलजगदन्वेष्यस्य भगवतोऽपि वयमन्वेष्या अभाम इति परमोत्कृष्टा वयमिति भावः ॥

तदेवोपपादयति—

यस्य चेतसि वर्तेथाः स तावत्कृतिनां वरः ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥

१ प्रथमे. २ पूजयित्वा; प्रणिपत्य. ३ किलं वचः. ४ अध्ययधय. ५ विश्वयोनेः.

यस्येति ॥ यस्य जनस्य चेतसि वर्तेथाः । येन स्मर्यस इत्यर्थः । स तावत् एव कृतिनां कृत्यकृत्यानां वरः श्रेष्ठः । [ब्रह्मयोनेः] ब्रह्मणो वेदस्य वेधसो वा योनेः कारणस्य । यद्वा वेदप्रमाणकस्य । तव चेतसि यः वर्तते । त्वया स्मर्येत इत्यर्थः । किं पुनः । स कृतिनां वर इति किमु वक्तव्यमित्यर्थः ॥

सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात्तव ॥ १९ ॥

सत्यमिति ॥ अर्कात् सूर्यात् च सोमात् चन्द्रात् च परम् उच्चैः पदं स्थानम् अध्यास्महे तिष्ठामः । वयमिति शेषः । सत्यम् । 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । अद्य तु तव । कर्तुः । [स्मरणानुग्रहात्] स्मरणमेवानुग्रहः प्रसादस्तस्माद्धेतोः । ताभ्याम् अर्केन्दुभ्याम् उच्चैस्तरम् अत्युच्चं पदम् । अध्यास्महे इति संबन्धः । उच्चैस्तरमिति द्रव्यप्रकर्षत्वाप्नामुप्रत्ययः ॥

त्वत्संभावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥

त्वदिति ॥ वयं त्वया संभावितं सत्कृतं त्वत्संभावितम् आत्मानम् आत्मस्वरूपं बहु अधिकं यथा तथा मन्यामहे । तथा हि । उत्तमादरः सत्पुरुषकर्तृकः सत्कारः स्वगुणेषु विषये प्रायः प्रायेण भूम्ना प्रत्ययं विश्वासम् आधत्ते जनयति । सर्वस्यापि महाजनपरिग्रह एव पूज्यताहेतुरित्यर्थः ॥

या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसंभवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥ २१ ॥

येति ॥ हे विरूपाक्ष । त्वदनुध्यानसंभवा त्वत्कर्तृकस्मरणजन्या नः अस्माकं या प्रीतिः सा प्रीतिः तुभ्यं किमावेद्यते किमर्थं निवेद्यते । तथा हि । देहिनां प्राणिनाम् अन्तरात्मा अन्तर्यामी असि । सर्वसाक्षिणा त्वयास्मत्प्रीतिरनावेदितापि ज्ञायत एव यतस्ततो न बुद्धबोधनं संभवतीति भावः ॥

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥ २२ ॥

साक्षादिति ॥ हे देव साक्षात् प्रत्यक्षेण दृष्टः असि । अञ्जसा पुनः तत्त्वतस्तु त्वां वयं न विद्मः । दृश्यमानस्य रूपस्यातात्त्विकत्वादिति भावः । अतः प्रसीद अनुगृहाण । आत्मानं निजस्वरूपं कथय । न चाकथितं तत्सुबोधमित्याह—धियां बुद्धीनां पथि न वर्तसे । अतस्त्वयैव त्वद्रूपं कथनीयमित्यर्थः ॥

---

१ नित्यं. २ तरां. ३ तस्मात्. ४ विशालाक्ष. ५ तव निध्यान. ६ आख्यायते. ७ नो विद्मः पुनः.

तात्त्विकं रूपं तावदास्तां न दृश्यमानमपि रूपं तत्त्वतो रूपयितुं शक्यमित्याह—

किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्ता भागः कतम एष ते ॥ २३ ॥

किमिति ॥ हे देव । एष दृश्यमानः ते भागः मूर्तिः किम् । येन भागेन व्यक्तं प्रपञ्चं सृजसि सः । यत्तदोर्नित्यसंबन्धात्सर्वत्र तच्छब्दोऽध्याहार्यः । उत येन भागेन तत् व्यक्तं बिभर्षि पालयसि स वा । अथ यः भागः । तस्य विश्वस्य संहर्ता स वा । किमादयः संदेहे । कतमः ब्रह्मविष्णुमहेश्वरेष्वयं कतमः भागः तदुच्यतामित्यर्थः ॥

ननु हर इत्येवं निश्चयात्कथमयं संशयस्तत्राह—

अथ वा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥ २४ ॥

अथ वेति ॥ अथ वा । हे देव सुमहती । गुह्यतमत्वादतिदुर्लभेत्यर्थः । एषा प्रार्थना निजरूपनिरूपणप्रार्थना तिष्ठतु । किंतु [ चिन्तितोपस्थितान् ] चिन्तितेन चिन्तिताः वोपस्थिताः चिन्तितोपस्थितास्तान् नः अस्मान् तावत् शाधि आज्ञापय किं करवाम । प्रार्थनायां लोट् । अलमप्रस्तुतेन प्रस्तुते तावन्नियुङ्क्ष्वेत्यर्थः ॥

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन्प्रभां तन्वीं प्रत्याह परमेश्वरः ॥ २५ ॥

अथेति ॥ अथ परमेश्वरः मौलिगतस्य इन्दोः तन्वीम् अल्पाम् । कलामात्रत्वादिति भावः । प्रभां कान्तिं विशदैः शुभ्रैः दशनांशुभिः उपचिन्वन् वर्धयन् प्रत्याह । प्रत्युवाचेत्यर्थः ॥

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थंभूतोऽस्मि सूचितः ॥ २६ ॥

विदितमिति ॥ हे मुनयः काश्चित् अपि मे प्रवृत्तयः व्यापाराः स्वार्थाः न भवन्ति यथा तथा वः युष्माकं विदितम् । वाक्यार्थः कर्म । बुद्ध्यर्थत्वाद्वर्तमाने क्तः । तद्योगात्षष्ठी । प्रवृत्तिपारार्थ्ये प्रमाणमाह—ननु अष्टाभिः मूर्तिभिः इत्थंभूतः इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः । 'भू प्राप्तौ' इति धातोः कर्तरि क्तः । सूचितः ज्ञापितः अस्मि । मत्स्वमूर्तिचेष्टया स्वपारार्थ्यमनुमेयमित्यर्थः ॥

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥ २७ ॥

सोऽहमिति ॥ सः परार्थवृत्तिः अहं तृष्णातुरैः चातकैः वृष्टिं विद्युत्वान् मेघः इव अरिविप्रकृतैः शत्रुपीडितैः देवैः प्रसूतिं पुत्रोत्पादनं प्रति याचितः । याचतेर्दुहादित्वादप्रधाने कर्मणि क्तः ॥

---

१ अथो यस्तस्य.

**अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।**
**उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥ २८ ॥**

अत इति ॥ **अतः** सुरप्रार्थितत्वाद्धेतोः **आत्मजन्मने** पुत्राय । पुत्रमुत्पादयितुमित्यर्थः । 'क्रियार्थोपपदस्य-' इत्यादिना चतुर्थी । **पार्वतीं यजमानः** यष्टा । 'पूङ्यजोः शानन्' इति शानन्प्रत्ययः । **हविर्भोक्तुः** अग्नेः **उत्पत्तये अरणिम्** अग्निमन्थनदारुविशेषम् **इव** । 'निर्मन्थ्यदारुणि त्वरणिर्द्वयोः' इत्यमरः । **आहर्तुं** संग्रहीतुं **मिच्छामि** ॥

**तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।**
**विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ २९ ॥**

तामिति ॥ **अस्मदर्थे** अस्मत्प्रयोजने निमित्ते सति **युष्माभिः तां** पार्वतीं **हिमालयः** हिमवान् **याचितव्यः** । याचेर्दुहादित्वादप्रधाने कर्मणि तव्यप्रत्ययः । आवश्यकं चैतदित्याह— [ **सदनुष्ठिताः** ] सद्भिः सत्पुरुषैरनुष्ठिताः संघटिताः **संबन्धाः** यौनादयो **विक्रियायै** वैकल्योत्पादनाय **न कल्पन्ते** न पर्याप्नुवन्ति । न समर्था इत्यर्थः । अलमर्थयोगाच्चतुर्थी ॥

न चाहं लौल्यात्स्त्रियमिच्छामि किं तु देवोपकाराय । यद्येवं निखिलदेवेषु विद्यमानेषु हिमगिरेः शिलाभूतस्य कन्यापरिणयेच्छा कथमित्युक्ते स एव मे श्लाघ्यसंबन्धोऽत्रभवान्हिमवानित्याह—

**उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।**
**तेन योजितसंबन्धं वित्त मामप्यवञ्चितम् ॥ ३० ॥**

उन्नतेनेति ॥ **उन्नतेन** प्रांशुना प्रसिद्धेन च **स्थितिमता** प्रतिष्ठावता **भुवः धुरं** भारम् **उद्वहता** । निर्वाहकेणेत्यर्थः । **तेन** हिमवता [ **योजितसंबन्धं** ] योजितः संघटितः संबन्धो यौनसंबन्धो यस्य तं **माम् अपि अवञ्चितम्** अव्यामोहितं **वित्त** जानीत । 'विद ज्ञाने' इति धातोर्लोट् ॥

तर्हि स किं वाच्य इत्याशङ्क्याह—

**एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।**
**भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥ ३१ ॥**

एवमिति ॥ **कन्यार्थं** कन्याप्रदानाय **स** हिमवान् **एवं वाच्यः इति वः** युष्मभ्यं **न उपदिश्यते** । कुतः **हि** यस्मात् **साधवः** विद्वांसः [ **भवत्प्रणीतं** ] भवद्भिः प्रणीतं स्मृतिरूपेण निबद्धम् **आचारम् आमनन्ति** उपदिशन्ति । न हि स्वयमुपदेष्टारः परोपदेशमपेक्षन्त इत्यर्थः ॥

**आर्याप्यरुन्धती तत्र व्यापारं कर्तुमर्हति ।**
**प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥ ३२ ॥**

---

१ उत्पादाय. २ हिमाचलः. ३ साहाय्यम्.

आर्येति ॥ **आर्या** पूज्या **अरुन्धती अपि तत्र** विवाहकृत्ये **व्यापारं** साहाय्यं **कर्तुम् अर्हति** । तथा हि । **प्रायेण** प्राचुर्येण **एवंविधे कार्ये** विवाहादिकार्ये । दुर्घट इत्यर्थः । **पुरन्ध्रीणां** कुटुम्बिनीनाम् । ' स्यात्तु कुटुम्बिनी । पुरन्ध्री ' इत्यमरः । **प्रगल्भता** चातुर्यम् । स्त्रीप्रधानेषु कृत्येषु स्त्रीणामेव घटनापाटवमिति भावः ॥

**तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।**
**महाकोशीप्रपातेऽस्मिन्संगमः पुनरेव नः ॥ ३३ ॥**

तदिति ॥ **तत्** तस्मात्कारणात् **ओषधिप्रस्थं** नाम **हिमवत्पुरं** हिमवन्नगरं **सिद्धये** कार्यसिद्ध्यर्थं **प्रयात** गच्छत । **अस्मिन्** पुरोवर्तिनि [ **महाकोशीप्रपाते** ] महाकोशी नाम तत्रत्या काचित् नदी तस्याः प्रपाते भृगौ एव । सा नदी यत्र पतति तस्मिन्नित्यर्थः । ' प्रपातस्त्वतटो भृगुः ' इत्यमरः । **नः** अस्माकं **पुनः संगमः** । अस्त्विति शेषः । भवत्समागमं प्रतिपालयन्नहमिहैव निवत्स्यामीत्यर्थः ॥

**तस्मिन्संयमिनामाद्ये जाते परिणयोन्मुखे ।**
**जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥ ३४ ॥**

तस्मिन्निति ॥ **संयमिनां** योगिनाम् **आद्ये तस्मिन्** ईश्वरे **परिणयोन्मुखे** विवाहोत्सुके **जाते** सति प्रजापतेरिमे **प्राजापत्याः** । ब्रह्मपुत्रा इत्यर्थः । **तपस्विनः** मुनयः [ **परिग्रहव्रीडां** ] परिग्रहैः पत्नीनिर्व्रीडाम् । गार्हस्थ्यनिमित्तामित्यर्थः । ' पत्नीपरिजनादानमूलशापाः परिग्रहाः ' इत्यमरः । **जहुः** तत्यजुः । जहातेर्लिटि रूपम् । न हि समानगुणदोषेषु व्रीडागमोऽस्तीति भावः ॥

**ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।**
**भगवानपि संप्राप्तः प्रथमोद्दिष्टमास्पदम् ॥ ३५ ॥**

तत इति ॥ **ततः** अनन्तरं **मुनिमण्डलं** मुनिसमूहः **परमम् इति उक्त्वा** ओम् इत्युक्त्वा । अनुमन्येत्यर्थः । अव्ययमेतत् । ' ओमेवं परमं मतम् ' इत्यमरः । **प्रतस्थे** । **भगवान्** ईश्वरः **अपि प्रथमोद्दिष्टं** पूर्वसंकेतितम् **आस्पदं** स्थानं महाकोशीप्रपातं **संप्राप्तः** ॥

**ते चाकाशमसिश्यामम् उत्पत्य परमर्षयः ।**
**आसेदुरोषधिप्रस्थं मनसा समरंहसः ॥ ३६ ॥**

त इति ॥ **मनसा समरंहसः** मनस्तुल्यवेगा **ते परमर्षयः च** । पूर्वश्लोकोक्तेश्वरसमुच्चयार्थश्चकारः । [ **असिश्यामं** ] असिवच्छ्यामं नीलं **आकाशं** खं प्रति **उत्पत्य ओषधिप्रस्थं** हिमवत्पुरम् **आसेदुः** । सद्यः प्रापुरित्यर्थः ॥

---

१ कोशी. २ पुनरस्तु. ३ वत्सुके. ४ तपोधनाः. ५ प्रमाणम्. ६ संक्रान्तः. ७ आश्रमम्. ८ स आ०, अथा. ९ मुनिपुंगवाः.

इतः परं दशभिः श्लोकैरोषधिप्रस्थमेव वर्णयति—

**अलकामतिवाह्यैव वसतिं वसुसंपदाम् ।**
**स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥ ३७ ॥**

अलकामिति ॥ **वसुसंपदां** धनसमृद्धीनां **वसतिं** स्थानम् **अलकां** कुबेरनगरीम् **अतिवाह्य** । परिच्छिद्येति यावत् । उपनिवेशितम् इव स्थितम् । तथा [ **स्वर्गाभिष्यन्दवमनम्** ] स्वर्गस्याभिष्यन्दोऽतिरेकः । अतिरिक्तजन इति यावत् । तस्य वमनं निःसारणं **कृत्वा उपनिवेशितमिव** स्थितम् । उभयत्रापि कौटिल्यः— 'भूतपूर्वमभूतपूर्वं वा जनपदं परदेशापवाहेन स्वदेशाभिष्यन्दवमनेन वा निवेशयेत् । ' इति । अलकाऽमरावत्यतिशयितसमृद्धिकमित्यर्थः ॥

**गङ्गास्रोतःपरिक्षिप्तं वप्रान्तर्ज्वलितौषधि ।**
**बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥ ३८ ॥**

गङ्गेति ॥ [ **गङ्गास्रोतःपरिक्षिप्तं** ] गङ्गायाः स्रोतोभिः प्रवाहैः परिक्षिप्तं परिवेष्टितम् । तैरेव सपरिखमित्यर्थः । [ **वप्रान्तर्ज्वलितौषधि** ] वप्रश्चयः । प्राकारचैत्यमिति यावत् । ' स्याच्चयो वप्रमास्त्रियाम् ' इत्यमरः । तस्यान्तर्मध्ये ज्वलिताः प्रकाशमानाः ओषधयो यस्य तत्तथोक्तम् । ज्वलितौषधित्वाद्रात्रिषु संचारिणां दीपनिरपेक्षमित्यर्थः । [ **बृहन्मणिशिलासालं** ] बृहद्विपुलो मणिशिलानां माणिक्यानां सालः प्राकारो यस्य तत्तथोक्तम् । ' प्राकारो वरणः सालः ' इत्यमरः । अत एव **गुप्तावपि** संवरणेऽपि **मनोहरम्** । अकृत्रिमदुर्गसंवरणमिति भावः ॥

**जितसिंहभया नागा यत्राश्वा बिलयोनयः ।**
**यक्षाः किंपुरुषाः पौरा योषितो वनदेवताः ॥ ३९ ॥**

जितेति ॥ **यत्र** पुरे **नागाः** गजाः [ **जितसिंहभयाः** ] जितं सिंहेभ्यो भयं यैस्ते तथोक्ताः । सिंहाधिकबला इत्यर्थः । नाथस्तु ' पदं तुषारस्रुतिधौतरक्तम् ' ( १।६ ) इत्येतद्विरोधभयात् ' वीतवीतभयाः ' इति पपाठ । तथा न भेतव्यं तत्र वनगजानां सिंहहतत्वाभिधानात् । अत्र त्वोषधिप्रस्थगजानां हिमवन्महिम्ना सिंहातिरेकसंभवेनाविरोधादिति । 'वीतवीतभयाः' इति पाठे वीतं विगतं वीतात्पादाङ्कुशकर्मभ्यां भयं येषां ते तथोक्ताः । स्वभावविनीता इत्यर्थः । ' पादकर्म युतं प्रोक्तं यातमङ्कुशवारणम् । उभयं वीतमाख्यातम् ' इति यादवः । **अश्वाः बिलयोनयः** बिलसंभवाः । अन्यत्र तु न तथेति वैचित्र्यम् । उक्तं च—' अमृताद्वाष्पतो वह्नेर्वेदेभ्योऽण्डाच्च गर्भतः । साम्नो हयानामुत्पत्तिः सप्तधा परिकीर्तिता ॥ ' इति । **यक्षाः** प्रसिद्धाः **किंपुरुषाः** किंनराश्च **पौराः** । **वनदेवता** एव **योषितः** । न तु मानुष्य इत्यर्थः ॥

**शिखरासक्तमेघानां व्यज्यन्ते यत्र वेश्मनाम् ।**
**अनुगर्जितसंदिग्धाः करणैर्मुरजस्वनाः ॥ ४० ॥**

---

१ इव. २ वसुसं०. ३ स्यान्दिव०, स्यान्दिरमणम्. ४ त्वेव विनिवेशितम्. ५ न्तज्ज्व० ६ ज्वलन्म०. ७ स्वर्गादपि. ८ वीत. ९ यक्षाकिं०. १० वेश्मसु. ११ मन्द्रगर्जित०. १२ मुरव.

शिखरेति ॥ **यत्र** [ **शिखरासक्तमेघानां** ] शिखरेष्वासक्ता मेघा येषां तेषां **वेश्मनां** संबन्धिनः [ **अनुगर्जितसंदिग्धाः** ] अनुगर्जितानि प्रतिगर्जितानि तैः संदिग्धाः **मुरजस्वनाः करणैः** तालव्यवस्थापकैस्ताडनविशेषैः । तदुक्तं राजकन्दर्पेण–' नृत्यवादित्रगीतानां प्रयोगवशभेदिनाम् । संस्थानं ताडनं रोधः करणानि प्रचक्षते ॥' इति । **व्यज्यन्ते** स्फुटीक्रियन्ते ॥

**यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।**
**गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥ ४१ ॥**

यत्रेति ॥ **यत्र** नगरे [ **विलोलविटपांशुकैः** ] । विलोलानि चञ्चलानि विटपेष्वंशुकानि येषां तैः **कल्पद्रुमैः एव** [ **अपौरादरनिर्मिता** ] अपौरादरेण पौरादरं विनैव निर्मिता । अयत्नसिद्धेत्यर्थः । [ **गृहयन्त्रपताकाश्रीः** ] गृहेषु यानि यन्त्राण्याधारदारूणि तेषु पताकास्तासां श्रीः । संभवतीति शेषः । तत्र लम्बाम्बराः कल्पतरव एव वैजयन्तीति संभाव्यन्त इत्यर्थः ।

**यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।**
**ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥ ४२ ॥**

यत्रेति ॥ **यत्र** पुरे **नक्तं** रात्रौ **स्फटिकहर्म्येषु आपानभूमिषु** पानगोष्ठीप्रदेशेषु **ज्योतिषां** नक्षत्राणां **प्रतिबिम्बानि उपहारतां** पुष्पोपहारत्वं मौक्तिकोपहारत्वं वा **प्राप्नुवन्ति** ॥

**यत्रौषधिप्रकाशेन नक्तं दर्शितसंचराः ।**
**अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥ ४३ ॥**

यत्रेति ॥ **यत्र** पुरे **दुर्दिनेषु** मेघाच्छन्नदिवसेषु **नक्तम्** [ **ओषधिप्रकाशेन** ] ओषधीनां तृणज्योतिषां प्रकाशेन संचरन्त एभिरिति संचराः पन्थानः । 'गोचरसंचर'–इत्यादिना घप्रत्ययान्तो निपातः । **दर्शितसंचराः** प्रकाशितमार्गाः **अभिसारिकाः** कान्तार्थिन्यः । ' कान्तार्थिनी तु या याति संकेतं साभिसारिका । ' इत्यमरः । **तमिस्राणां** तमसाम् । कृद्योगात्कर्मणि षष्ठी । **अनभिज्ञाः** । तमांसि नाभिजानन्तीत्यर्थः ॥

**यौवनान्तं वयो यस्मिन्नान्तकः कुसुमायुधात् ।**
**रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः॥ ४४ ॥**

यौवनान्तमिति ॥ **यस्मिन्** पुरे **वयः यौवनान्तं** यौवनावधिकम् । सर्वेऽप्यजरा इत्यर्थः । तथा **कुसुमायुधात्** कामात् । अन्य इति शेषः । **अन्तकः** मृत्युः **न** । अस्तीति शेषः । विरहिणां तादृग्दुःखोत्पादकत्वादन्तकत्वोपचारः । कामं विना मृत्युर्नास्तीत्यर्थः । अत एव तत्कार्यभूतमरणाभाव इत्याशयेनाह––रतीति । **रतिखेदसमु-**

१ द्वार. २ सोपान०, ०पङ्क्तिषु; हर्म्याणां शुभ्रसोपानपंक्तिषु. ३ नेऽन्य०. ४ नातंकः–नानङ्गः कुसुमायुधः. ५ समुत्थाना.

त्यक्ता निद्रा सुप्तिरेव संज्ञाविपर्ययः चेतनापगमः । न तु दीर्घनिद्रारूप इत्यर्थः । अत्रत्याः सर्वेऽजरामरा इति श्लोकतात्पर्यार्थः । अन्तयत्यन्तं करोतीत्यन्तकः । अन्तयतेस्तत्करोतीति ण्यन्तण्वुप्रत्ययः ॥

भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणामाप्रसादार्थिनः प्रियाः ॥ ४५ ॥

भ्रूभेदिभिरिति ॥ यत्र पुरे प्रियाः युवानः भ्रूभेदिभिः भ्रूभङ्गवद्भिः [सकम्पोष्ठैः] सकम्पा ओष्ठा येषु तैः [ललिताङ्गुलितर्जनैः] ललितान्यङ्गुलितर्जनानि येषु तैः स्त्रीणां कोपैः मानाख्यैः आप्रसादार्थिनः आप्रसादं प्रसादपर्यन्तमर्थिनो याचकाः कृताः । न तु शत्रुकोपैरिति भावः ॥

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं गन्धवद्गन्धमादनम् ॥ ४६ ॥

संतानकेति ॥ [च] किं चेति चार्थः ॥ [संतानकतरुच्छायासुप्तविद्याधराध्वगम्] संतानकतरोश्छायासु सुप्ता विद्याधरा देवताविशेषास्त एवाध्वगा यस्मिंस्तत्तथोक्तं गन्धवत् गन्धाढ्यं गन्धमादनं नाम गिरिः यस्य पुरस्य बाहिर्भवं बाह्यम् उपवनम् आरामः । संतानकतरुच्छायेत्यत्र पूर्वपदार्थबाहुल्यसंभवेऽपि 'शलभच्छायम्' 'इक्षुच्छायम्' इतिवत्समर्थच्छायानिष्पत्तेस्तदपेक्षाभावात् 'छाया बाहुल्ये' इति नपुंसकत्वं नास्तीत्यनुसंधेयम् । अत्र 'गन्धवद्गन्धमादनम्' इत्यागन्तुकः पाठः । प्राचीनपाठस्तु 'सुगन्धिर्गन्धमादनः' इति पुंलिङ्गान्तः । अत एव क्षीरस्वामिना 'गन्धमादनमन्ये च' इत्यत्र गन्धेन मादयतीति गन्धमादनः इति व्याख्याय प्रयोगे च पुंलिङ्गता दृश्यत इत्याशयेनोक्तं सुगन्धिर्गन्धमादनः इति कालिदास इति ॥

अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभिसंधिसुकृतं वञ्चनामिव मेनिरे ॥ ४७ ॥

अथेति ॥ अथ ते दिवि भवाः दिव्याः मुनयः हिवमतः इदं हैमवतं पुरं प्रेक्ष्य स्वर्गाभिसंधिना स्वर्गोद्देशेन यत्सुकृतं ज्योतिष्टोमाद्यनुष्ठानं तत् स्वर्गाभिसंधिसुकृतं वञ्चनां प्रतारणाम् इव मेनिरे । हिमवन्नगरमवेक्ष्य स्वर्गस्य पुण्यफलत्वं वदता वेदेन वयं विप्रलब्धा इत्यर्थः । स्वर्गादतिरमणीयमिति भावः ॥

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥ ४८ ॥

त इति ॥ लिखितानलनिश्चलैः । चित्रगतज्वलननिष्पन्दैरिति वेगप्रकर्षोक्तिः । जटाभारैः उपलक्षिताः ते मुनयः । [उन्मुखद्वाःस्थवीक्षिताः] द्वारि तिष्ठन्तीति

---

१ मप्रसा०. २ सुगन्धिर्गन्धमादनः. ३ तत्कान्तं; ततस्ते. ४ स्पन्दि सु०, भिसंधि सुकृतां. ५ अवपेतुः. ६ निश्चलाः.

द्वाःस्थाः द्वारपालकाः । 'प्रतीहारे द्वारपालद्वाःस्थद्वाःस्थितदर्शकाः ।' इत्यमरः । उन्मुखैरूर्ध्वमुखैर्द्वाःस्थैर्वीक्षिताः सन्तः । न तु विनिवारिता इत्यर्थः । गिरेः हिमवतः सद्मानि वेगात् अवतेरुः अवतीर्णवन्तः ॥

गगनादवतीर्णा सा यथावृद्धपुरःसरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरंपरा ॥ ४९ ॥

गगनादिति ॥ गगनात् अवतीर्णा अवरूढा [ यथावृद्धपुरःसरा ] यथावृद्धं वृद्धानुक्रमेण स्थिताः पुरःसरा अग्रेसरा यस्यां सा तथोक्ता । अनुपसर्जनाधिकारान्न ङीप् । सा मुनिपरंपरा मुनिपङ्क्तिः तोयान्तः तोयाभ्यन्तरे भास्करालीं प्रतिबिम्बितार्कपङ्क्तिः इव रेजे । एतेन मुनीनां तेजस्वित्वेऽपि सुखसंदर्शनं सूचयति । भास्कराणां भूयिष्ठत्वसंभावनार्थं तोयान्तरित्युक्तम् । अत एव बहुत्वसिद्धिश्च ॥

तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः ।
नमयन्सारगुरुभिः पादन्यासैर्वसुंधराम् ॥ ५० ॥

तानिति ॥ गिरिः हिमवान् अर्घ्यम् अर्घार्थं जलम् आदाय । सारगुरुभिः अन्तःसारदुर्भरैः पादन्यासैः वसुंधरां नमयन् अधःप्रापयन् । अर्घमर्हन्ति इति अर्घ्यान् पूज्यान् । दण्डादित्वाद्यप्रत्ययः । तान् मुनीन् दूरात् प्रत्युद्ययौ ॥

संप्रति हिमवन्तमव जङ्गमस्थावररूपद्वयसाधारणैर्विशेषणैर्विशिनष्टि—

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥ ५१ ॥

धात्विति ॥ [ धातुताम्राधरः ] धातुवत्ताम्रोऽधरो यस्य स तथोक्तः । अन्यत्र धातुरेव ताम्रोऽधरो यस्य । प्रांशुः उन्नतः । उभयत्रापि समानम् । [ देवदारुबृहद्भुजः ] देवदारुवद्बृहन्तौ भुजौ यस्य स तथोक्तः । देवदारव एव बृहन्तौ भुजौ यस्येत्यन्यत्र । प्रकृत्या स्वभावेन एव शिलावदुरो यस्य स शिलोरस्कः । शिलैवेत्यन्यत्र । 'उरःप्रभृतिभ्यः कप्' इति कप् । अतः हिमवानिति सुव्यक्तः । वर्तमाने क्तः । सत्यं स एवायं हिमवानिति तद्धर्मप्रत्यभिज्ञानादवधारित इत्यर्थः ॥

विधिप्रयुक्तसत्कारैः[1] स्वयं मार्गस्य दर्शकः[2] ।
स तैराक्रमयामास[3] शुद्धान्तं शुद्धकर्मभिः ॥ ५२ ॥

विधीति ॥ स हिमवान् [ विधिप्रयुक्तसत्कारैः ] विधिना शास्त्रेण प्रयुक्तसत्कारैः कृतार्चनैः शुद्धकर्मभिः अदुष्टचरितैः । शुद्धान्तप्रवेशार्हैरित्यर्थः । तैः मुनिभिः स्वयं मार्गस्य दर्शयतीति दर्शकः दर्शयिता सन् । पश्यतेर्ण्यन्ताद्वुलप्रत्ययः । शुद्धान्तम् अन्तःपुरम् आक्रमयामास । प्रवेशयामासेत्यर्थः । अत्र क्रमेरगत्यर्थत्वात् 'गतिबुद्धि-' इत्यादिना तैरित्यस्य न कर्मत्वम् ॥

---

१ सत्कारान्. २ देशकः. ३ तान्...कर्मणः.

तत्र वेत्रासनासीनान्कृतासनपरिग्रहः ।
इत्युवाचेश्वरान्वाचं प्राञ्जलिर्भूधरेश्वरः ॥ ५३ ॥

तत्रेति ॥ वेत्रं लताविशेषः । तत्र शुद्धान्ते वेत्रासनासीनान् वेत्रमयविष्टरोपविष्टान् ईश्वरान् प्रभून्मुनीन् भूधरेश्वरः हिमवान् कृतासनपरिग्रहः । उपविष्टः सन्नित्यर्थः । प्राञ्जलिः कृताञ्जलिः सन् । इति एवं वाचम् उवाच ॥

अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥ ५४ ॥

अपेति ॥ अतर्कितोपपन्नम् अविचारितमेवोपगतम् । अत्यन्तासंभावितमित्यर्थः । वः युष्माकं दर्शनम् अपमेघोदयं वर्षम् अनभ्रा वृष्टिस्तथा [ अदृष्टकुसुमं ] अदृष्टं कुसुमं यस्य तत्तथोक्तं फलं च तत् मे प्रतिभाति । अतिदुर्लभलाभः संवृत्त इत्यर्थः । अत्र मेघोदयकुसुमरूपकारणयोरभावेऽपि वर्षफलरूपकार्ययोरुदयाभिधानाद्विभावना । मुनिदर्शनस्य विशिष्टवृत्तित्वेन च रूपणाद्रूपकालंकारश्चेत्युभयोः संसृष्टिः ॥

मूढं बुद्धमिवात्मानं हैमीभूतमिवायसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥ ५५ ॥

मूढमिति ॥ भवदनुग्रहात् आत्मानं मां मूढं ( बुद्ध्या विनाकृतं ) बुद्धम् इव मूढो भूत्वा यो बुद्धवास्तमिव । कर्तरि क्तः । आयसम् अयोविकारं हैमीभूतम् इव । आयसत्वं विहाय सौवर्णत्वं प्राप्तमिवेत्यर्थः । भूमेः भूलोकात् दिवं स्वर्गम् आरूढमिव मन्ये । ज्ञानरूपस्थानान्यत्र मे परमुत्कृष्यन्त इति भावः ॥

अद्यप्रभृति भूतानामधिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ५६ ॥

अद्येति ॥ अद्यप्रभृति इत आरभ्य भूतानां प्राणिनां शुद्धये अधिगम्यः अस्मि शुद्ध्यर्थिनां तीर्थभूतोऽस्मीत्यर्थः । भवदागमनादिति शेषः । हि यस्मात् यत् अर्हद्भिः सद्भिः अध्यासितम् अधिष्ठितम् । जुष्टमिति यावत् । तत्तीर्थं प्रचक्षते । 'निपानागमयोस्तीर्थमृषिजुष्टजले गुरौ ।' इत्यमरः ॥

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥ ५७ ॥

अवैमीति ॥ हे द्विजोत्तमाः । आत्मानं मां द्वयेन एव पूतं शुद्धम् अवैमि अवगच्छामि । केन द्वयेन । मूर्ध्नि गङ्गाप्रपातेन मन्दाकिनीपातेन वः युष्माकं [ धौतपादाम्भसा ] धौतयोः क्षालितयोः पादयोरम्भसा च । गङ्गाजलवत्पादाम्भसः पावनत्वमित्यौपम्यं गम्यते । तच्च प्रस्तुताप्रस्तुतयोः इति दीपकालंकारः । 'प्रियः प्रियतराख्यानम्' इति लक्षणात्प्रियोऽलंकार इति केचित् ॥

१ अनासम०; नीचासन०. २ मुनीन्सर्वान्. ३ पृथिवीधरः. ४ कृत०. ५ मन्यानाथ. ६ प्रचक्षते.

जङ्गमं प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये द्विरूपमपि मे वपुः ॥ ५८ ॥

जङ्गममिति ॥ हे मुनयः । द्विरूपं जङ्गमस्थावरात्मकत्वाद्विप्रकारकम् अपि मे वपुः विभक्तानुग्रहं विभज्य कृतप्रसादं मन्ये । कुतः । जङ्गमं वपुः वः युष्माकं प्रैष्यभावे कैंकर्ये । स्थितमिति शेषः । 'प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या' इति वृद्धिः । 'नियोज्यकिंकरप्रैष्यभुजिष्यपरिचारकाः ।' इत्यमरः । स्थावरं वपुः चरणाङ्कितम् । अयमेव हि महाननुग्रहो दासजनस्य यत्कर्मसु नियोजनं मूर्धनि पादन्यासश्चेति तात्पर्यार्थः ॥

भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥ ५९ ॥

भवदिति ॥ व्याप्ता दिगन्ता यैस्तानि व्याप्तदिगन्तानि अपि । महान्त्यपीत्यर्थः । मे मम अङ्गानि भवत्संभावनोत्थाय युष्मदनुग्रहजन्याय मूर्च्छते व्याप्नुवते परितोषाय न प्रभवन्ति न पर्याप्नुवन्ति । अलमर्थयोगाच्चतुर्थी । यथा महत्स्वपि मन्गात्रेषु न माति तथा मे हर्षो वर्धत इत्यर्थः ॥

न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥ ६० ॥

नेति ॥ भास्वतां तेजस्विनां विवस्वतां च वः युष्माकं दर्शनेन केवलं दरीसंस्थं गुहागतं तमः ध्वान्तरूपमेव न अपास्तम् । किं तु मे अन्तर्गतम् अन्तरात्मगतं रजसः रजोगुणात् परम् अनन्तरं तमः अज्ञानरूपं अपि अपास्तम् । रजस्तु पादन्यासैरेवापास्तमिति भावः । प्रसिद्धैर्भास्वद्भिर्बाह्यं तमोऽपास्यत एभिस्त्वान्तरमपीति व्यतिरेको व्यज्यते ॥

कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते ।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥ ६१ ॥

कर्तव्यमिति ॥ कर्तव्यं कार्यं वः युष्माकं न पश्यामि । निस्पृहत्वादिति भावः । अथ स्यात् चेत् विद्येत यदि किं न उपपद्यते किं नाम न संभवति । सर्वं सुलभमेवेत्यर्थः । अथ वा किमत्र प्रयोजनचिन्तयेत्याह—मत्पावनाय मच्छोधनाय एव भवताम् इह विषये प्रस्थानम् । इमं देशमुद्दिश्येदं प्रयाणमित्यर्थः । मन्ये तर्कयामि ॥

तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६२ ॥

तथापीति ॥ तथापि भवतां निःस्पृहत्वेऽपि कस्मिंश्चित् । कर्मणीति शेषः । आज्ञाम् इदं कुर्वित्यादेशं तावत् इदानीं मे मह्यं दातुम् अर्हथ । मदनुग्रहबुद्ध्येति भावः । हि यस्मात् किंकराः भृत्याः । प्रभवन्तीति प्रभविष्णुषु प्रभुषु विषये । 'भुवश्च' इती-

१ प्रेष्यभावेन; प्रेष्यपक्षे. २ विरूपं; द्वैरूप्यमपि; द्वैरूप्यं तेन मे कृतम्. ३ अभिव्याप्त°. ४ उपपद्यते. ५ शङ्के. ६ ददथ.

ण्वुच्प्रत्ययः । [ **विनियोगप्रसादाः** ] विशेषेण नियोगो विनियोगः प्रेषणमेव प्रसादः अनुग्रहो येषां ते तथोक्ताः । अन्यथा स्वस्वामिभावो निष्फल इति भावः ॥

**एते वयममी दाराः कन्येयं कुलजीवितम् ।**
**ब्रूत येनात्र[1] वः कार्यमनास्था बाह्यवस्तुषु ॥ ६३ ॥**

एत इति ॥ किं बहुना । **एते वयम् अमी दाराः** इयं [ **कुलजीवितं** ] कुलस्य जीवितं प्राणभूता । परमप्रेमास्पदमित्यर्थः । **कन्या** । **अत्र** एषां मध्ये **येन** जनेन **वः कार्यं** प्रयोजनं **ब्रूत** । तमिति शेषः । येन सोऽपि दीयत इति भावः । रत्नहिरण्यादिकं तु न मे गण्यमित्याह—**बाह्यवस्तुषु** कनकरत्नादिषु **अनास्था** अनादरः । प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते । अदेयं न किंचिदस्तीति भावः ॥

**इत्यूचिवांस्तमेवार्थं[2] गुहामुख[3]विसर्पिणा ।**
**द्विरिव प्रतिशब्देन व्याजहार हिमालयः[4] ॥ ६४ ॥**

इतीति ॥ **इति ऊचिवान्** उक्तवान् । वचेः क्वसुप्रत्ययः । **हिमालयः** हिमवान् [ **गुहामुखविसर्पिणा** ] गुहानां मुखेषु विवरेषु विसर्पतीति तथोक्तेन **प्रतिशब्देन तम् एव** पूर्वोक्तमेव **अर्थं द्विः** द्विवारम् । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच्प्रत्ययः । **इव व्याजहार** बभाषे ॥

**अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।**
**ऋषयो नोदयामासुः[5] प्रत्युवाच स भूधरम् ॥ ६५ ॥**

अथेति ॥ **अथ** अनन्तरम् **ऋषयः** [ **उदाहरणवस्तुषु** ] उदाहरणानि कथाप्रसङ्गास्त एव वस्तून्यर्थास्तेषु । अग्रं नयतीत्यग्रणीस्तम् **अग्रण्यं** प्रगल्भम् । 'सत्सूद्विष—' इत्यादिना क्विप् । 'अग्रग्रामाभ्यां नयतेरिति वक्तव्यम्' इति णत्वम् । **आङ्गिरसं** नामर्षिं **नोदयामासुः** प्रतिवक्तुं प्रेरयामासुः । **सः** अङ्गिराः **भूधरं** हिमवन्तं **प्रत्युवाच** ॥

**उपपन्नमिदं सर्वमतः परमपि त्वयि ।**
**मनसः शिखराणां च सदृशी ते समुन्नतिः ॥ ६६ ॥**

उपपन्नमिति ॥ **इदम्** 'एते वयममी दाराः' ( ६ । ६३ ) इत्याद्युक्तं **सर्वम् अतः परम्** अतोऽधिकम् **अपि त्वयि उपपन्नं** युज्यते । तथा हि । **ते मनसः शिखराणां च समुन्नतिः सदृशी** । शिखराणीव मनो महोन्नतमित्यर्थः । किं नाम दुष्करमुन्नतचित्तानामिति भावः । प्रस्तुताप्रस्तुतयोर्मनःशिखरयोरौपम्यस्य गम्यत्वाद्दीपकालंकारः ॥

**स्थाने त्वां स्थावरात्मानं विष्णुमाहु[6]स्तथा हि ते ।**
**चराचराणां भूतानां कुक्षिराधारतां गतः ॥ ६७ ॥**

---

१ केनार्थिनो यूयम्. २ उक्तवान्, इत्युदीरितमेवार्थं. ३ दरी०. ४ हिमाचलः. ५ चादयामासुः, प्रेरयामासुः. ६ मनीषिणः.

स्थान इति ॥ **त्वां स्थावरात्मानं** स्थावररूपिणं **विष्णुम् आहुः** । ' स्थावराणां हिमालयः ' इति गीतावचनात् । **स्थाने** युक्तम् । युक्तार्थेऽव्ययमेतत् । ' युक्ते द्वे सांप्रतं स्थाने ' इत्यमरः । **तथा हि** । **ते** तव **कुक्षिः चराचराणां** जङ्गमस्थावररूपिणां **भूतानां** पृथिव्यादीनाम् **आधारतां गतः** । तवैव विष्णोः कुक्षिरेवंभूत इति भावः ॥

**गामधास्यत्कथं नागो मृणालमृदुभिः फणैः ।**
**आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥ ६८ ॥**

गामिति ॥ **नागः** शेषाहिः **मृणालमृदुभिः** बिसकोमलैः **फणैः गां** भुवं **कथम् अधास्यत्** धारयेत् । **त्वम् आ रसातलमूलात्** पातालपर्यन्तम् । विकल्पादसमासः **न अवालम्बिष्यथाः चेत्** पादैर्नावलम्बेथा यदि । त्वदवलम्बनादेव भुजगराजोऽपि भुवं बिभर्तीत्यर्थः । अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्यः ॥

**अच्छिन्नामलसंतानाः समुद्रोर्म्यनिवारिताः ।**
**पुनन्ति लोकान्पुण्यत्वात्कीर्तयः सरितश्च ते ॥ ६९ ॥**

अच्छिन्नेति ॥ [ **अच्छिन्नामलसंतानाः** ] अच्छिन्ना अविच्छिन्ना अमलाश्च संतानाः प्रबन्धाः प्रवाहाश्च यासां तास्तथोक्ताः । [ **समुद्रोर्म्यनिवारिताः** ] समुद्रोर्मिभिरनिवारिताः । पारगमनादन्तःप्रवेशाच्चेति भावः । **ते** तव **कीर्तयः सरितः च** गङ्गादयः **पुण्यत्वात्** पवित्रत्वात् **लोकान् पुनन्ति** पावयन्ति । लोकपावनाः खलु पुण्यश्लोका इति भावः । केवलप्रकृतविषयस्तुल्ययोगितालंकारः ॥

**यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।**
**प्रभवेण द्वितीयेन तथैवोच्छिरसा त्वया ॥ ७० ॥**

यथेति ॥ **गङ्गा** भागीरथी । प्रभवत्यस्मादिति प्रभवस्तेन कारणेन । परमे तिष्ठतीति **परमेष्ठिनः** विष्णोः । परमे । प्रत्ययः । ' तत्पुरुषे कृति बहुलम् ' इत्यलुक् । परमेवर्हिर्दिव्यग्निभ्यः स्थः ' इति षत्वम् । **पादेन** चरणेन **यथा एव श्लाघ्यते** प्रशस्यते **तथा एव द्वितीयेन प्रभवेण उच्छिरसा त्वया** श्लाघ्यते । हरिचरणवर्तीयस्यापि तीर्थभूतस्त्वमिति भावः ॥

**तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।**
**त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव ॥ ७१ ॥**

तिर्यगिति ॥ **तिर्यक् ऊर्ध्वम् अधस्तात् च व्यापकः** । सर्वव्यापीत्यर्थः । **महिमा** महत्त्वं **हरेः** [ **त्रिविक्रमोद्यतस्य** ] त्रिषु विक्रमेषूद्यतस्य सतः **आसीत्** । त्रिविक्रमोद्यतस्यापि कदाचिदेव । न तु सर्वदेत्यर्थः । **तव तु सः** व्यापको महिमा **स्वाभाविकः** नित्यसिद्ध इत्यर्थः ॥

---

१ सद्दशैः. २ निवारिताः. ३ लोकम्. ४ श्लाघते. ५ पातेन परमेष्ठिनि प्रथमेन...रसि त्वयि. ६ प्रभावेण. ७ च. ८ तथा.

यज्ञभागभुजा मध्ये पदमातस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥ ७२ ॥

यज्ञेति ॥ **यज्ञभागभुजाम्** इन्द्रादीनां **मध्ये पदम् आतस्थुषा** निहितवता **त्वया उच्चैः** उन्नतं हिरण्यस्य विकारो **हिरण्मयम्** । 'दाण्डिनायनहास्तिनायन–' इत्यादिनिपातनात्साधु । **सुमेरोः शृङ्गं** शिखरम् । प्राधान्यं च ध्वन्यते । 'शृङ्गं प्राधान्यसान्वोश्च' इत्यमरः । **वितथीकृतं** व्यर्थीकृतम् । तस्य यज्ञभागाभावादिति भावः । अस्य तु तत्सद्भावे प्रमाणम् 'हिमवतो हस्ती' इति श्रुतिः ॥

काठिन्यं स्थावरे काये भवता सर्वमर्पितम् ।
इदं तु ते भक्तिनम्रं सतामाराधनं वपुः ॥ ७३ ॥

काठिन्यमिति ॥ **भवता सर्वं काठिन्यम्** । अनम्रत्वमित्यर्थः । **स्थावरे** स्थिरे **काये** शिलामय इत्यर्थः । **अर्पितं** न्यस्तम् । **सताम्** अर्हताम् **आराधनं** पूजासाधनं **ते इदं वपुः तु** । जङ्गममित्यर्थः । **भक्तिनम्रम्** । काठिन्यलेशोऽप्यत्र नास्त्यन्यथा नम्रत्वासंभवादित्यर्थः । तथा चासाधारण्यं ध्वन्यते ॥

तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमंशांशभागिनः ॥ ७४ ॥

तदिति ॥ **तत्** तस्मात् **नः** अस्माकम् [ **आगमनकार्यं** ] आगमनस्य कार्यं प्रयोजनं **शृणु** । **तत् कार्यं** च **तव एव** । न त्वस्माकमित्यवधारणार्थ एवकारः । **वयं तु श्रेयसामुपदेशात् अत्र** कार्ये **अंशभागिनः** । त्वमेवात्र फलभाग्वयमुपदेष्टार इति भावः ॥

कार्यमेवाह—

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥ ७५ ॥

अणिमेति ॥ **यः** शंभुः [ **अणिमादिगुणोपेतम्** ] अणिमादिभिरष्टभिर्गुणैर्वाच्यभूतैरुपेतम् । अष्टैश्वर्यवाचकमित्यर्थः । अत एव [ **अस्पृष्टपुरुषान्तरम्** ] अस्पृष्टं पुरुषान्तरं येन तं तथोक्तं पुरुषान्तरस्यानभिधायकम् । तस्यैवैवंगुणत्वादित्यर्थः । **उच्चैः** परमम् **ईश्वरः इति शब्दम्** । निरुपपदेश्वरशब्दमित्यर्थः । **सार्धचन्द्रम्** अर्धचन्द्रयुक्तम् । अर्धचन्द्रं चेत्यर्थः । **बिभर्ति** ॥

कलितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
येनेदं ध्रियते व्यक्तं धुर्यैर्यानमिवाध्वनि ॥ ७६ ॥

कलितेति ॥ **येन** शंभुना **कलितान्योन्यसामर्थ्यैः** कलितं धृतिसंग्रहादिस्वस्वगुणसंपादितमन्योन्यसामर्थ्यं परस्परसहकाररूपं यैस्तथोक्तैः । स्वस्वरूपसामर्थ्यमन्यो-

---

१ माक्रम्य तस्थुषा. २ भवतः. ३ माराधकं; नम्रमर्हदाराधनम्. ४ यथा; यत्; यदर्थागमनं नो हि. ५ हि ते तथा. ६ च. ७ अपि. ८ भाजिनः. ९ गुणोत्थानम्. १० कल्पिता. ११ यस्य. १२ धार्यते. १३ विश्वम्.

न्याधेयमेवेति भावः । पृथिव्यादिभिः आत्मभिः । अष्टाभिर्मूर्तिभिरित्यर्थः । इदं व्यक्तं विश्वं धुरं वहन्तीति धुर्यैः अश्वैः । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । अध्वनि यानं रथः इव ध्रियते ॥

योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥ ७७ ॥

योगिन इति ॥ योगिनः अध्यात्मवेदिनः क्षेत्राभ्यन्तरवर्तिनं शरीरान्तश्चरं सर्वभूतान्तर्यामिनम् । परमात्मस्वरूपिणमित्यर्थः । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । यं शंभुं विचिन्वन्ति मृगयन्ते।मनीषिणः विद्वांसः यस्य शंभोः पदं स्थानम् [ अनावृत्तिभयम् ] अविद्यमानमावृत्तेः पुनः संसारोपत्तेर्भयं यत्र तत्तथाभूतम् आहुः ॥

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शंभुरस्मत्संक्रामितैः पदैः ॥ ७८ ॥

स इति ॥ विश्वस्य जगतः कर्मणां साक्षी द्रष्टा । 'साक्षाद्द्रष्टरि संज्ञायाम्' इतीनिप्रत्ययः । वरानिष्टान्ददातीति वरदः । 'आतोऽनुपसर्गे कः' इति कप्रत्ययः । स पूर्वोक्तः शंभुः अस्मत्संक्रामितैः पदैः अस्मासु निवेशितैर्वाक्यैः ते दुहितरं साक्षात् वृणुते । अस्मन्मुखेन स्वयमेव याचत इत्यर्थः ॥

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ७९ ॥

तमिति ॥ तं शंभुं भारत्या वाचा अर्थम् अभिधेयम् इव सुतया दुहित्रा योक्तुं संघटयितुम् अर्हसि । अत्र वागर्थयोरुपमानत्वसामर्थ्याच्छिवयोर्नित्ययोगो विवक्षित इत्युक्तम् । 'वागर्थाविव संपृक्तौ' ( रघुवंशे १ । १ ) इत्यत्रापि । तथा हि । [ सद्भर्तृप्रतिपादिता ] सद्भर्त्रे प्रतिपादिता दत्ता कन्या पितुः अशोच्या ॥

गुणान्तरमप्याह—

यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं कल्पयन्त्वेनामीशो हि जगतः पिता ॥ ८० ॥

यावन्तीति ॥ स्थावराणि चराणि च यावन्ति एतानि भूतानि । सन्तीति शेषः । सर्वाणि भूतानीत्यर्थः । एनां ते दुहितरं मातरं कल्पयन्तु । हि यस्मात् ईशः जगतः पिता । पितृदारेषु मातृभावो न्याय्य इति भावः ॥

प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिः ॥ ८१ ॥

प्रणम्येति ॥ विबुधाः देवाः शितिकण्ठाय शिवाय प्रणम्य तदनन्तरं नीलकण्ठप्रणामानन्तरम् अस्याः चरणौ चूडामणिमरीचिभिः रञ्जयन्तु । ईश्वरपरिग्रहादखिलदेवतावन्द्या भवत्वित्यर्थः ॥

---

१ कर्मणः. २ संक्रमितैः. ३ सद्भर्त्र. ४ यावदङ्ग्यानि. ५ न्त्येना. ६ जगताम्. ७ यन्त्य.

उमा वधूर्भवान्दाता याचितार इमे वयम् ।
वरः शंभुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥ ८२ ॥

उमेति ॥ **उमा वधूः भवान् दाता । इमे वयं याचितारः** प्रार्थकाः । **शंभुः वरः** वोढा । **एष विधिः** एषा सामग्री [ **त्वत्कुलोद्भूतये** ] त्वत्कुलस्योद्भूतये उच्छ्रयाय **अलं** पर्याप्तः **हि** । 'नमःस्वस्तिस्वाहास्वधा'–इत्यादिना चतुर्थी ॥

अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासंबन्धविधिना भव विश्वगुरोर्गुरुः ॥ ८३ ॥

अस्तोतुरिति ॥ स्वयमन्यस्तोता न भवतीति **अस्तोतुः** किं तु **स्तूयमानस्य** सर्वैस्तुत्यस्य **वन्द्यस्य** जगद्वन्द्यस्य स्वयमन्यं न वन्दत इति **अनन्यवन्दिनः विश्वगुरोः** देवस्य **सुतासंबन्धविधिना** यौनसंबन्धाचरणेन **गुरुः भव** । यो नान्यं स्तौति न वन्दते तस्यापि त्वं स्तुत्यो वन्द्यश्चेत्यहो तव भाग्यवत्तेत्यर्थः ॥

एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥ ८४ ॥

एवमिति ॥ **देवर्षौ** अङ्गिरसि **एवंवादिनि** सति **पार्वती पितुः पार्श्वे अधोमुखी** सती । लज्जयेति शेषः । **लीलाकमलपत्राणि गणयामास** संचख्यौ । लज्जावशात्कमलदलगणनाव्याजेन हर्षं जुगोपेत्यर्थः । अनेनावहित्थाख्यः संचारी भाव उक्तः । तदुक्तम्—' अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनम् ' इति ॥

शैलः संपूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ८५ ॥

शैल इति ॥ **शैलः** हिमवान् **संपूर्णकामोऽपि** । दातुं कृतनिश्चयोऽपीत्यर्थः । **मेनामुखम् उदैक्षत** । उचितोत्तरजिज्ञासयेति भावः । तथा हि । **प्रायेण कुटुम्बिनः** गृहस्थाः । **कन्यार्थेषु** कन्याप्रयोजनेषु [ **गृहिणीनेत्राः** ] गृहिण्येव नेत्रं कार्यज्ञानकारणं येषां ते तथोक्ताः । कलत्रप्रधानवृत्तय इत्यर्थः ॥

मेने मेनापि तत्सर्वं पत्युः कार्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ८६ ॥

मेन इति ॥ **मेना अपि पत्युः** हिमालयस्य **तत् सर्वम् अभीप्सितं कार्यं मेने** अङ्गीचकार । तथाहि । [ **पतिव्रताः** ] पतिरेव व्रतं यासां ताः **भर्तुः इष्टे** अभीप्सिते न विद्यते व्यभिचारो यासां ताः **अव्यभिचारिण्यः भवन्ति** । भर्तृचित्ताभिप्रायज्ञा भवन्तीति भावः ॥

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालंकृतां सुताम् ॥ ८७ ॥

इदमिति ॥ **स** हिमवान् **वचसाम् अन्ते** मुनिवाक्यावसाने **अत्र** मुनिवाक्ये **इदं** उत्तरश्लोके वक्ष्यमाणं दानमेव **न्याय्यं** न्यायादनपेतम् **उत्तरम् इति बुद्ध्या** चिन्तन

१ वरस्य. २ तन्त्राः. ३ कन्यार्थे हि. ४ सद्यः. ५ समीहितम्.

**विमृश्य** विचिन्त्य मङ्गलं यथा तथालंकृतां **मङ्गलालंकृतां सुताम् आददे** हस्ताभ्यां जग्राह ॥

**एहि विश्वात्मने वत्से भिक्षासि परिकल्पिता ।**
**अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥ ८८ ॥**

एहीति ॥ हे **वत्से** पुत्रि **एहि** आगच्छ । त्वं **विश्वात्मने** शिवाय **भिक्षा परिकल्पिता असि** निश्चिता असि । 'रत्नादिस्तम्बपर्यन्तं सर्वं भिक्षा तपस्विनः' इति वचनादिति भावः । **अर्थिनः** याचितारः **मुनयः** । **मया** [ **गृहमेधिफलं** ] गृहमेधिनो गृहस्थस्य फलं **प्राप्तम्** । इह परत्र च तारकत्वारपात्रे कन्यादानं गार्हस्थ्यस्य फलमित्यर्थः ॥

**एतावदुक्त्वा तनयामृषीनाह महीधरः ।**
**इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥ ८९ ॥**

एतावदिति ॥ **महीधरः** हिमवान् **तनयाम् एतावत्** पूर्वोक्तम् **उक्त्वा ऋषीन् आह** । किमिति । **इयं त्रिलोचनवधूः** त्र्यम्बकपत्नी **वः सर्वान् नमति इति** । त्रिलोचनवधूरिति सिद्धवदभिधानेनाविप्रतिपन्नं दानमिति सूचयति ॥

**ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।**
**आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥ ९० ॥**

ईप्सितार्थेति ॥ **ते** मुनयः [ **ईप्सितार्थक्रियोदारं** ] ईप्सितार्थक्रिययेष्टार्थकरणेनोदारं महत् । 'उदारो दातृमहतोः' इत्यमरः । **गिरेः** हिमवतः **वचः** वचनम् **अभिनन्द्य** साध्विति संस्तुत्य **अम्बिकाम्** अम्बाम् । पच्यत इति पाकः फलम् । **पुरःपाकाभिः** पुरस्कृतफलाभिः **आशीर्भिः** आशीर्वादैः **एधयामासुः** संवर्धयामासुः ॥

**तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।**
**अङ्कमारोपयामास लज्जमानामरुन्धती ॥ ९१ ॥**

तामिति ॥ [ **प्रणामादरस्रस्तजाम्बूनदवतंसकाम्** ] प्रणामादरेण नमस्कारासक्त्या स्रस्ते जाम्बूनदे सुवर्णविकारौ वतंसके कनककुण्डले यस्यास्तां **लज्जमानां ताम् अम्बिकाम् अरुन्धती अङ्कम् आरोपयामास** । 'रुहः पोऽन्यतरस्याम्' इति पकारः ॥

**तन्मातरं चाश्रुमुखीं दुहितृस्नेहविक्लवाम् ।**
**वरस्यानन्यपूर्वस्य विशोकामकरोद्गुणैः ॥ ९२ ॥**

तदिति ॥ [ **दुहितृस्नेहविक्लवाम्** ] दुहितृस्नेहेन पुत्रिकाप्रेम्णा विक्लवां वियोक्ष्यत इति भीताम् । अत एवाश्रूणि मुखे यस्यास्ताम् **अश्रुमुखीं** तस्या अम्बिकाया मातरं **तन्मातरं** मेनां **च** । अन्या पूर्वं यस्यास्ति सोऽन्यपूर्वः । 'सर्वनाम्नो वृत्तिविषये पुंवद्भावः' इति पूर्वपदस्य पुंवद्भावः । स न भवतीत्यनन्यपूर्वस्तस्य **अनन्यपूर्वस्य** । सापत्न्यदुःखमकुर्वत इत्यर्थः । **वरस्य** वोढुः **गुणैः** मृत्युंजयत्वादिभिः **विशोकां** निर्दुःखाम् **अकरोत्** ॥

---

१ सर्वा०; शैवार्पणे. २ भिक्षा त्वम्. ३ वर्धया. ४ दवस्रस्त…नदाव०. ५ दुहितुः. ६ विह्वलाम्.

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते[1] त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥ ९३ ॥

वैवाहिकीमिति ॥ **चीरपरिग्रहाः** वल्कलमात्रवसनाः **ते** तपस्विनः **तत्क्षणं** तस्मिन्नेव क्षणे **हरबन्धुना** हिमवता **वैवाहिकीं** विवाहयोग्यां **तिथिं पृष्टाः** केत्यनुयुक्ताः सन्तः । त्रयाणामह्नां समाहारस्त्र्यहः । 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः । 'राजाहःसखिभ्यष्टच्' इति टच्प्रत्ययः । द्विगुत्वादेकवचनम् । 'रात्राह्नाहाः पुंसि' इति पुंलिङ्गता । तस्मात् **त्र्यहात् ऊर्ध्वम्** उपरि **आख्याय** चतुर्थेऽहनि विवाहः इत्युक्त्वा **चेरुः** चलिताः ॥

ते हिमालयमामन्त्र्य पुनः प्राप्य[3] च शूलिनम् ।
सिद्धं चास्मै[4] निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥ ९४ ॥

त इति ॥ **ते** मुनयः **हिमालयम् आमन्त्र्य** साधु यामेत्यापृच्छ्य **पुनः शूलिनं** हरं संकेतस्थानस्थं **प्राप्य च सिद्धं** निष्पन्नम् **अर्थं** प्रयोजनम् **अस्मै निवेद्य च** ज्ञापयित्वा च [ **तद्विसृष्टाः** ] तेन शूलिना विसृष्टाः **खम्** आकाशं प्रति **उद्ययुः** उत्पेतुः । अत्र संक्षिप्तार्थाभिधानात्संक्षेपो नाम गुण उक्तः । तदुक्तम्—'संक्षिप्तार्थाभिधानं यत्संक्षेपः परिकीर्तितः । ' इति ॥

भगवान्पशुपतिस्त्र्यहमात्रविलम्बमपि सोढुं न शशाक तदौत्सुक्यादित्याह—

पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥ ९५ ॥

पशुपतिरिति ॥ उत्कं मनो यस्य स उत्कः । ' उत्क उन्मनाः ' इति निपातः । **अद्रिसुतासमागमोत्कः** पार्वतीपरिणयोत्सुकः **पशुपतिः अपि तानि** । त्रीणीति शेषः । **अहानि कृच्छ्रात् अगमयत्** अयापयत् । कविराह—**अमी भावाः** औत्सुक्यादयः संचारिणः **अवशम्** इन्द्रियपरतन्त्रम् **अपरं** पृथग्जनं **कं न विप्रकुर्युः** न विकारं नयेयुः । **यत्** यस्मात् **विभुं** समर्थम् । जितेन्द्रियमिति यावत् । **तं** स्मरहरम् **अपि स्पृशन्ति** । विकुर्वन्तीत्यर्थः । अत्र विभुविकारसमर्थनादर्थादितरजनविकारः कैमुतिकन्यायादापततीत्यर्थापत्तिरलंकारः । तथा च सूत्रम्-' दण्डापूपिकयार्थान्तरपतनमर्थापत्तिः । ' इति । अर्थान्तरन्यास इति केचित्तदुपेक्षणीयम् । युक्तिस्तु विस्तरभयान्नोच्यते । पुष्पिताग्रावृत्तम्—' अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा । ' इति लक्षणात् ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमाप्रदानः नाम षष्ठः सर्गः ॥

---

१ ताम्. २ चेलुः. ३ प्रेक्ष्य. ४ तस्मै.

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १ ॥

अथेति ॥ **अथ** त्र्यहानन्तरं **हिमवान् ओषधीनाम् अधिपस्य** चन्द्रस्य **वृद्धौ** । शुक्लपक्षे इत्यर्थः । शुभकर्मस्वापूर्यमाणपक्षस्य प्राशस्त्यात् । **तिथौ च** [ **जामित्रगुणान्वितायाम्** ] जामित्रं लग्नात्सप्तमं स्थानं तस्य गुणः शुद्धिः सा च ग्रहराहित्यं तेनान्वितायां सत्याम् । यद्यपि जामित्रशुद्धिर्लग्नधर्मस्तथापि तद्द्वारा तिथेरपि तथा व्यपदेशे न दोषः । **समेतबन्धुः** युक्तबन्धुः सन् । **सुतायाः** दुहितुः [ **विवाहदीक्षाविधिम्** ] विवाहदीक्षा विवाहसंस्कारः सैव विधिः कर्म तम् **अन्वतिष्ठत्** कृतवान् ॥

वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत्पुरं सानुमतोऽनुरागादन्तःपुरं चैककुलोपमेयम् ॥ २ ॥

वैवाहिकैरिति ॥ **अनुरागात्** प्रीतिवशात् **गृहे गृहे** प्रतिगृहम् । वीप्सायां द्विर्भावः । [ **वैवाहिकैः** ] विवाहः प्रयोजनमेषामिति वैवाहिकानि तैः । ' प्रयोजनम् ' इति ठक् । **कौतुकसंविधानैः** मङ्गलार्थसंपादनैः [ **व्यग्रपुरन्ध्रिवर्गम्** ] व्यग्रो व्याकुलः पुरन्ध्रिवर्गः कुटुम्बिनीसंघो यस्मिंस्तत्तथोक्तं **सानुमतः** अद्रेः **पुरं** बाह्यमोषधिप्रस्थम् **अन्तःपुरम्** अवरोधनं **च** [ **एककुलोपमेयम्** ] एककुलेन एकगृहेणोपमेयम् **आसीत्** । ' सजातीयगणे गोत्रे गृहेऽपि कथितं कुलम् ' इति विश्वः । सर्वेषामपि स्वगृह एवेदं शोभनं वर्तत इत्यभिमानोऽभूदित्यर्थः । एतेन हिमाद्रेः प्रजाराग उक्तः । अत्र सर्वं संपन्नमेवेत्यर्थः ॥

संतानकाकीर्णमहापथं[1] तच्चीनांशुकैः कल्पितकेतुमालम् ।
भासोज्ज्वलत्[2]काञ्चनतोरणानां[3] स्थानान्तरं स्वर्ग[4] इवाबभासे ॥ ३ ॥

संतानकेति ॥ [ **संतानकाकीर्णमहापथं** ] संतानकैर्मन्दारकुसुमैराकीर्णा आस्तृताः महापथाः राजकीयपथाः यस्मिंस्तत्तथोक्तम् । **चीनांशुकैः** पट्टवस्त्रैः [ **कल्पितकेतुमालम्** ] कल्पिता विरचिताः केतुमाला ध्वजपङ्क्तयो यस्य तत्तथोक्तम् । **काञ्चनतोरणानां भासा** प्रभया **उज्ज्वलत्** दीप्यमानं **तत्** पुरं **स्थानान्तरं** मेरोरन्यत्र स्थितः **स्वर्गः इव आबभासे** । उत्प्रेक्षालंकारः ॥

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य[5] दृष्टेव मृतोत्थितेव ।
आसन्नपाणिग्रहणेति[6] पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥ ४ ॥

एकैवेति ॥ [ **पुत्रपङ्क्तौ** ] पुत्राश्च दुहितरश्च पुत्राः । ' भ्रातृपुत्रौ स्वसृदुहितृभ्याम् '

१ चतुःपथम्. २ भासा ज्वलत्. ३ णाङ्कम्. ४ स्थानान्तरस्वर्गः. ५ चिरेण. ६ उपोढपाणि.

इत्येकशेषः । ' पुत्रौ पुत्रश्च दुहिता च ' इत्यमरः । तेषां पङ्क्तौ संघे **सत्याम् अपि उमा एका एव चिरस्य दृष्टा इव** चिरान्नष्टलब्धेव **मृतोत्थितेव** मृत्वा पुनरुत्पन्नेव **आसन्नपाणिग्रहणा** आसन्नविवाहा **इति** । भर्तृगृहं गमिष्यतीति हेतोरित्यर्थः । **पित्रोः** मातापित्रोः । ' पिता मात्रा ' इत्येकशेषः । [ **विशेषोच्छ्वसितं** ] विशेषेणोच्छ्वसितं प्राणभूता **बभूव** । पुमपत्यादपि अधिकप्रेमास्पदमभूदित्यर्थः ॥

**अङ्काद्ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।**
**संबन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥ ५ ॥**

अङ्कादिति ॥ **सा** पार्वती **उदीरिताशीः** प्रयुक्ताशीर्वादा सती **अङ्काद् अङ्कम्** उत्सङ्गं **ययौ** । **मण्डनात्** मण्डनान्तरम् अन्यत् **मण्डनम् अन्वभुङ्क्त** । तदा सर्वे बन्धवः प्रत्येकमेव तामङ्कमारोप्य मण्डनं प्रायच्छन्नित्यर्थः । तच्च स्नेहनिबन्धनमेवेत्याह—**संबन्धिभिन्नः** स्वपुत्रादिभिर्भिन्नो विभक्तः **अपि गिरेः कुलस्य** वंशस्य **स्नेहः तदेकायतनं** सैवैकमायतनं स्थानं तत् **जगाम** । तदिति छेदेऽप्ययमेवार्थः । विधेयप्राधान्यान्नपुंसकत्वमिति । सर्वे बन्धवः स्वापत्येभ्योऽपि तस्यामधिकं स्निह्यन्तीति तात्पर्यार्थः ॥

**मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु ।**
**तस्याः शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥ ६ ॥**

मैत्र इति ॥ अथ **मैत्रे** मित्रदैवत्ये **मुहूर्ते** । उदयमुहूर्तात्तृतीयमुहूर्त इत्यर्थः । ' आर्द्रः सार्द्रस्तथा मैत्रः शुभो वासव एव च । ' इति बृहस्पतिस्मरणात् । **उत्तरफल्गुनीषु** फल्गुनीनक्षत्रे । ' फल्गुनीप्रोष्ठपदानां च नक्षत्रे ' इत्येकस्मिन्नपि बहुवचनम् । **शशलाञ्छनेन** चन्द्रेण **योगं गतासु** सतीषु **तस्याः** पार्वत्याः **शरीरे बन्धुस्त्रियः प्रतिकर्म** प्रसाधनम् । ' प्रतिकर्म प्रसाधनम् ' इत्यमरः । **चक्रुः** । कीदृश्यः । **याः पतिपुत्रवत्यः** । जीवद्भर्तृका जीवदपत्याश्चेत्यर्थः ॥

प्रतिकर्मप्रकारमेव प्रपञ्चयति—

**सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नशोभम् ।**
**निर्नाभिकौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलंचकार ॥ ७ ॥**

सेति ॥ **सा** गौरी **गौरसिद्धार्थनिवेशवद्भिः** श्वेतसर्षपप्रक्षेपवद्भिः **दूर्वाप्रवालैः** दूर्वाङ्कुरैः **प्रतिभिन्नशोभं** विशेषितशोभं [ **निर्नाभिकौशेयं** ] निर्नाभ्यतिक्रान्तनाभि कौशेयं वस्त्रविशेषो यस्मिंस्तत्तथोक्तम् । ' कौशेयं कृमिकोशोत्थम् ' इत्यमरः । **उपात्तबाणं** गृहीतशरम् । ' शरः क्षत्रियया ग्राह्यः ' इति मनुस्मरणात् । **अभ्यङ्गनेपथ्यम्** अभ्यङ्गवेशम् **अलंचकार** । अलंकारमप्यलंचकारेत्यर्थः ॥

**बभौ च संपर्कमुपेत्य बाला नवेन दीक्षाविधिसायकेन ।**
**करेण भानोर्बहुलावसाने संधुक्ष्यमाणेव शशाङ्करेखा ॥ ८ ॥**

---

१ शरीरम०. २ रागम्. ३ उर्णावि०. ४ विवाहदी०. ५ लेखा.

बभाविति ॥ किं च इति चार्थः । **बाला नवेन** [ **दीक्षाविधिसायकेन** ] दीक्षाविधौ विवाहकृत्ये यः सायकस्तेन **संपर्कमुपेत्य बहुलावसाने** कृष्णपक्षात्यये । शुक्लपक्षादावित्यर्थः । **भानोः करेण** किरणेन **संधुक्ष्यमाणा** उपचीयमाना । 'सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशम् । क्षपयन्ति' इत्यादिवचनात् । **शशाङ्करेखा इव बभौ** ॥

**तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम् ।**
**वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभिमुखं व्यनैषुः ॥ ९ ॥**

तामिति ॥ **लोध्रकल्केन** लोध्रचूर्णेन [ **हृताङ्गतैलां** ] हृतमङ्गतैलं यस्यास्ताम् । कृतोद्वर्तनामित्यर्थः । [ **आश्यानकालेयकृताङ्गरागाम्** ] आश्यानमीषच्छुष्कं तेन कालेयेन गन्धद्रव्येण कृताङ्गरागाम् । कृतसैगन्ध्यामित्यर्थः । 'अथ जायकम् । कालेयकं च कालानुसार्यं च' इत्यमरः । **अभिषेकयोग्यं वासः** वस्त्रं **वसानां** स्नानशाटीमाच्छादयन्तीं **तां** पार्वतीं **नार्यः** [ **चतुष्काभिमुखं** ] चतुष्कं चतुःस्तम्भगृहं तदभिमुखं **व्यनैषुः** स्नानगृहं निन्युरित्यर्थः ॥

**विन्यस्तवैदूर्यशिलातलेऽस्मिन्नाबद्धमुक्ताफलभक्तिचित्रे ।**
**आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयांबभूवुः ॥ १० ॥**

विन्यस्तेति ॥ [ **विन्यस्तवैदूर्यशिलातले** ] विन्यस्तं वैदूर्यशिलातलं मरकतशिलाप्रदेशो यस्मिंस्तस्मिन् । [ **आबद्धमुक्ताफलभक्तिचित्रे** ] आबद्धानां मुक्ताफलानां भक्तिभी रचनाभिश्चित्रे **अस्मिन्** चतुष्के **एनां** पार्वतीम् । [ **आवर्जिताष्टापदकुम्भतोयैः** ] आवर्जितानामानमितानामष्टापदकुम्भानां कनककलशानां तोयैः **सतूर्यं** मङ्गलवाद्ययुक्तं यथा तथा **स्नपयांबभूवुः** । अष्टसु लोहेषु पदं प्रतिष्ठा यस्येत्यष्टापदम् । 'अष्टनः संज्ञायाम्' इति दीर्घः । 'अष्टापदं स्यात्कनकम्' इति विश्वः ॥

**सा मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।**
**निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ ११ ॥**

सेति ॥ [ **मङ्गलस्नानविशुद्धगात्री** ] मङ्गलार्थस्नानेन विशुद्धगात्री निर्मलाङ्गी । [ **गृहीतपत्युद्गमनीयवस्त्रा** ] पत्युर्वरस्योद्गमनीयवस्त्रं धौतवस्त्रम् । 'धौतमुद्गमनीयं स्यात्' इति हलायुधः । 'तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।' इत्यमरः । युगग्रहणं तु प्रायिकाभिप्रायम् । अत एवात्र क्षीरस्वामी 'युगं प्रायशो यल्लक्ष्यं तदेव' इति व्याख्याय 'गृहीतपत्युद्गमनीयवस्त्रा' इत्येतदेवोदाहृतवान् । गृहीतं पतिं प्रत्युद्गमनीयवस्त्रं यया सा । धौतवस्त्रमाच्छादितवतीत्यर्थः । **सा** पार्वती [ **निर्वृत्तपर्जन्यजलाभिषेका** ] निर्वृत्तो निष्पन्नः पर्जन्यस्य जलेनाभिषेको यस्याः सा तथोक्ता । [ **प्रफुल्लकाशा** ] प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा तथोक्ता **वसुधा इव रेजे** शुशुभे ॥

---

१ श्याम. २ अभिमुखीमनैषुः. ३ वैडूर्य. ४ शिले च तस्मिन्. ५ आविद्ध, आविद्धमुक्ताकृतभक्तिलेख. ६ तोयाः. ७ प्रत्युद्गम०, शुद्धोद्गमनीय; गृहीतवत्युद्गमनीयवस्त्रम्. ८ निर्वृत्त.

तस्मात्प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः [1]परिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ॥ १२ ॥

तस्मादिति ॥ किं च इति चार्थः । **तस्मात् प्रदेशात्** स्नानप्रदेशात् **वितानवन्तम्** उल्लोचयुक्तम् । 'अस्त्री वितानमुल्लोचः' इत्यमरः । **मणिस्तम्भचतुष्टयेन युक्तं** [ **क्लृप्तासनं** ] क्लृप्तं सज्जमानमासनं यस्मिंस्तं **कौतुकवेदिमध्यं पतिव्रताभिः परिगृह्य** दोर्भ्यामालिङ्ग्य **निन्ये** नीता । प्रसाधनार्थमित्यर्थः ॥

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरोनिषण्णाः ।
[2]भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने संनिहितेऽपि नार्यः ॥ १३ ॥

तामिति ॥ **नार्यः** प्रसाधिकाः **तां तन्वीं** पार्वतीं **तत्र** वेदिमध्ये **प्राङ्मुखीं निवेश्य** उपवेश्य **पुरोनिषण्णाः** अग्रे स्थिताः । प्रसाध्यतेऽनेनेति **प्रसाधने** अलंकारसाधनवर्गे **संनिहिते अपि** [ **भूतार्थशोभाह्रियमाणनेत्राः** ] भूतार्था सत्यरूपा । स्वाभाविकीति यावत् । या शोभा रामणीयकं तया ह्रियमाणान्याकृष्यमाणानि नेत्राणि यासां तास्तथोक्ताः **क्षणं व्यलम्बन्त** । स्वभावसुन्दर्याः किमस्याः प्रसाधनेनेति तूर्ष्णीं तस्थुरित्यर्थः ॥

[3]धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥ १४ ॥

धूपेति ॥ **काचित्** प्रसाधिका **धूपोष्मणा** करणेन **आर्द्रभावम्** आर्द्रत्वं **त्याजितम्** पचादिषु पाठाद्द्विकर्मकत्वम् । त्यजतेर्ण्यन्तादप्रधाने कर्मणि क्तः । **अन्तःकुसुमम्** अन्तर्निक्षिप्तकुसुमं तस्या इमं **तदीयं केशान्तं** केशपाशं **दूर्वावता** मध्ये मध्ये ग्रथितदूर्वेण **पाण्डुमधूकदाम्ना** हरितमधुद्रुमकुसुममाल्येन । 'मधूके तु गुडपुष्पमधुद्रुमौ' इत्यमरः । **उदारबन्धं** रम्यबन्धं यथा तथा **पर्याक्षिपत्** बबन्ध ॥

वि[4]न्यस्तशुक्लागुरु चक्रु[5]रङ्गं गोरोचनापत्रवि[6]भक्तमस्याः ।
सा चक्रवाकाङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥१५॥

विन्यस्तेति ॥ **अस्या** गौर्याः **अङ्गं** गात्रं [ **विन्यस्तशुक्लागुरु** ] विन्यस्तं विरचितं शुक्लागुरु यस्मिंस्तत् [ **गोरोचनापत्रविभक्तं** ] गोरोचनायाः पत्रैः पत्ररचनाभिर्विभक्तं विशेषितं च **चक्रुः** । **सा** तथाभूता गौरी [ **चक्रवाकाङ्कितसैकतायाः** ] चक्रवाकैरङ्कितं सैकतं यस्यास्तस्याः **त्रिस्रोतसः** गङ्गायाः **कान्तिं** शोभाम् **अतीत्य** अतिक्रम्य **तस्थौ** । अत्र गोरोचनाचक्रवाकयोः पीतत्वेन साम्यं त्रिस्रोतसो धावल्यं तु प्रसिद्धत्वान्न स्वपदेनोपात्तम् ॥

ल[7]ग्नद्विरेफं परिभूय पद्मं समेघले[8]खं शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥ १६ ॥

---

१ प्रति०. २ भूतात्म०. ३ धूपेन संमार्जितम्०; पात्युज्झितसार्द्र०. ४ आसक्त; प्रसन्न. ५ अस्याः. ६ विभक्तमच्छम्. ७ लीन. ८ लक्ष्मं.

लमेति ॥ **प्रसिद्धैः** भूषितैः । 'प्रसिद्धौ ख्यातभूषितौ' इत्यमरः । **अलकैः** उपलक्षिता [ **तदाननश्रीः** ] तस्याः गौर्या आननश्रीः **लग्नद्विरेफं पद्मं समेघलेखं** मेघलेखायुक्तं **शशिनः बिम्बं च परिभूय** तिरस्कृत्य [ **सादृश्यकथाप्रसङ्गम्** ] सादृश्यमुपमा तस्य कथोक्तिस्तस्याः प्रसङ्गं प्रसक्तिं सादृश्यं वाङ्मात्रप्रसक्तमपि **चिच्छेद** अभिनत् । प्रसक्तयोः पद्मचन्द्रयोः परिभूतत्वादन्यत्र चाप्रसङ्गादित्यर्थः । अत्र पूर्वार्धवाक्यार्थस्य सादृश्यकथाच्छेदं प्रति हेतुत्वेनोपन्यासात्काव्यलिङ्गमलंकारः । लक्षणं तूक्तम् ॥

**कर्णार्पितो लोध्रकषायरूक्षे गोरोचनाक्षेपनितान्तगौरे ।**
**तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥ १७ ॥**

कर्णेति ॥ **तस्याः** गौर्याः [ **कर्णार्पितः** ] कर्णेऽर्पितो निक्षिप्तो **यवप्ररोहः** यवाङ्कुरः [ **लोध्रकषायरूक्षे** ] लोध्रस्य वृक्षविशेषस्य कषायेण विलेपनेन रूक्षे विशदे । उद्वर्तिते इत्यर्थः । 'कषायो रसभेदे स्यादङ्गरागे विलेपने ।' इति विश्वः । [ **गोरोचनाक्षेपनितान्तगौरे** ] गोरोचनायाः क्षेपेन विन्यासेन नितान्तगौरेऽत्यन्तारुणे । 'गौरः श्वेतेऽरुणे पीते' इति विश्वः । **कपोले** गण्डस्थले **परभागलाभात्** वर्णोत्कर्षप्राप्तेः **चक्षूंषि** । द्रष्टॄणामिति शेषः । **बबन्ध** जहार । आचकर्षेत्यर्थः । गोरोचनारुणे गण्डस्थले पाण्डुरो यवाङ्कुरो विजातीयवर्णसंनिधानाल्लब्धवर्णोत्कर्षः संश्चक्षुराकर्षकोऽभूदिति भावः॥

**रेखाविभक्तः सुविभक्तगात्र्याः किंचिन्मधूच्छिष्टविमृष्टरागः ।**
**कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः॥ १८॥**

रेखेति ॥ **सुविभक्तगात्र्याः** सुसंश्लिष्टावयवायाः पार्वत्याः । [ **रेखाविभक्तः** ] रेखया मध्यगतया विभक्तः सुश्लिष्टः [ **किंचिन्मधूच्छिष्टविमृष्टरागः** ] किंचिदीषन्मधूच्छिष्टेन सिक्थकेन विमृष्टो विशेषेण निर्मलीकृतो रागो यस्य स तथोक्तः । 'मधूच्छिष्टं तु सिक्थकम्' इति, 'निर्णिक्तं शोधितं मृष्टम्' इति चामरः । अन्यत्रोक्तम्— अलौहित्यापगमायाधरेषु सिक्थकलेपः क्रियते । [ **आसन्नलावण्यफलः** ] आसन्नं संनिहितं लावण्यफलं सौन्दर्यप्रयोजनं मुखचुम्बनादिरूपं यस्य स तथोक्तः **अधरोष्ठः** **स्फुरितैः** भाविशुभशंसिभिः स्पन्दैः **काम् अपि** अनिर्वाच्याम् **अभिख्यां** शोभाम् **अपुष्यत्** पुपोष । 'अभिख्या नामशोभयोः' इत्यमरः ॥

**पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान॥१९॥**

पत्युरिति ॥ **सख्या** । कर्त्र्या । **चरणौ रञ्जयित्वा** लाक्षारसाक्तौ कृत्वा । कृताशीरिति करोतिना समानकर्तृकत्वम् । **अनेन** चरणेन । रञ्जने द्वयोरपि नियमाच्चरणावित्युक्त्वाप्यौचित्यात्ताडनविधावेकतरपरामर्श इत्याहुः। **पत्युः** ईश्वरस्य **शिरश्चन्द्रकलाम्** । सुरतविशेष इति शेषः । **स्पृश** ताडय **इति परिहासपूर्वं कृताशीः** प्रयुक्ताशीर्वादा

१ भेद. २ च विभक्त. ३ विसृष्ट.

सा पार्वती तां सखीं **माल्येन** माल्या । 'माल्यं मालास्रजौ' इत्यमरः । **निर्वचनं** यथा तथा । तूष्णीमित्यर्थः । **जघान** ताडयामास । निर्वचनमित्यनेन विहृताख्यः शृङ्गारानुभाव उक्तः । तदुक्तम्—'प्राप्तकालं तु यद्ब्रूयात्कुर्याद्वा विहृतं हि तत् ।' इति ॥

**तस्याः सुजातोत्पलपत्त्रकान्ते प्रसाधिकाभिर्नयने निरीक्ष्य[1] ।**
**न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम् २०**

तस्या इति ॥ **प्रसाधिकाभिः** अलंकर्त्रीभिः [ **सुजातोत्पलपत्त्रकान्ते** ] सुजाते सम्यगुत्पन्ने उत्पलपत्त्रे इव कान्ते रम्ये **तस्याः नयने निरीक्ष्य कालाञ्जनम्** अञ्जनविशेषः । **चक्षुषोः कान्तिविशेषबुद्ध्या** । शोभातिशयो भविष्यतीति बुद्ध्येत्यर्थः । **न** उपात्तं न गृहीतम् । किं तु **मङ्गलं** शुभम् **इति** हेतोः **उपात्तम्** । निसर्गसुभगस्य किमाहार्यकाडम्बरेणेति भावः ॥

**सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।**
**सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा[2] चकासे ॥ २१ ॥**

सेति ॥ **आमुच्यमानाभरणा** निबध्यमानाभरणा **सा** गौरी **संभवद्भिः** उत्पद्यमानैः **कुसुमैः लता इव** । अनेन पद्मरागेन्द्रनीलादीन्याभरणानि सूचितानि लताकुसुमा नानावर्णत्वात् । **उद्यद्भिः** उदयं गच्छद्भिः **ज्योतिर्भिः** उडुभिः **त्रियामा** रात्रिः इव । अनेन मौक्तिकानि कथितानि । **लीयमानैः** आश्रयद्भिः । निषीदद्भिरित्यर्थः । **विहङ्गैः** चक्रवाकैः **सरिद् इव** । अनेन सुवर्णाभरणानि सूचितानि । विहङ्गाश्च तत्सूचनाय चक्रवाका अभिमताः । **चकासे** रेजे । अत्र लताकुसुमादीनां सहजसंबन्धिनामुपमानत्वेनोपादानादाहार्यकमपि तस्याः सहजमिवाशोभतेति भावः ॥

**आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।**
**हरोपयाने[3] त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेषः ॥ २२ ॥**

आत्मानमिति ॥ किं **च** इति चार्थः । गौरी **शोभमानम् आत्मानं** निजशरीरम् **आदर्शबिम्बे** दर्पणमण्डले । 'दर्पणे मुकुरादर्शौ' इत्यमरः । **स्तिमितायताक्षी** आदरान्निश्चलायतलोचना सती **आलोक्य हरोपयाने** हरप्राप्तौ **त्वरिता** व्यग्रा **बभूव** । **स्त्रीणां वेषो** नेपथ्यम् [ **प्रियालोकफलः** ] प्रियस्य भर्तुरालोको दर्शनं फलं प्रयोजनं यस्य स तथोक्तः **हि** । अन्यथारण्यचन्द्रिका स्यादिति भावः । अनेन कालाक्षमत्वलक्षणमौत्सुक्यमुक्तमित्यनुसंधेयम् ॥

**अथाङ्गुलिभ्यां[4] हरितालमार्द्रं माङ्गल्यमादाय[5] मनःशिलां च ।**
**कर्णावसक्तामलदन्तपत्त्रं माता तदीयं मुखमुन्नमय्य[6] ॥ २३ ॥**

अथेति ॥ **अथ** प्रसाधनानन्तरं **माता** मेनका **माङ्गल्यं** मङ्गलार्थम् **आर्द्रं** द्रवं

---

१ समीक्ष्य. २ आरोप्यमाणा०. ३ यानत्व०. ४ अङ्गुलीभ्याम्. ५ मङ्गल्यम्. ६ उन्निनाय, उन्ननाम.

हरितालं वर्णद्रव्यविशेषं मनःशिलां धातुविशेषं च अङ्गुलिभ्यां तर्जनीमध्यमाभ्याम् आदाय [ कर्णावसक्तामलदन्तपत्रं ] कर्णयोरवसक्ते लग्ने अमले दन्तपत्रे यस्य तत्तथोक्तं तस्याः पार्वत्याः इदं तदीयं मुखम् उन्नमय्य । विवाहदीक्षातिलकं चकार इत्युत्तरश्लोकेनान्वयः ॥

उमास्तनोद्भेदमनु प्रवृद्धो मनोरथो यः प्रथमं बभूव ।
तमेव मेना दुहितुः कथंचिद्विवाहदीक्षातिलकं चकार ॥ २४ ॥

उमेति ॥ [ उमास्तनोद्भेदम् ] उमायाः स्तनोद्भेदम् अनु । स्तनोदयमारभ्येत्यर्थः । प्रवृद्धः वृद्धिं गतः । प्रागेवोत्पन्न इति भावः । यः मनोरथः वाञ्छा । 'वाञ्छा लिप्सा मनोरथः' इत्यमरः । प्रथमं मनोरथान्तरात्प्राक् । अयमेव प्रथमो मनोरथ इत्यर्थः । बभूव । मेना दुहितुः तमेव मनोरथभूतमेव । तद्विषये तत्तोपचारः । [ विवाहदीक्षातिलकं ] विवाहदीक्षायां विवाहकृत्ये तिलकं कथंचित् कृच्छ्रेण चकार । आनन्दबाष्पान्धतयेति शेषः । विवाहानन्तरभावित्वादन्येषामयमेव प्रथमो मनोरथ इति भावः ॥ युग्मकम् ॥

बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसंनिवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥२५॥

बबन्धेति ॥ अस्याः पार्वत्याः [ अस्राकुलदृष्टिः ] अस्रैरानन्दबाष्पैराकुलदृष्टिः । अत एव स्थानान्तरे [ कल्पितसंनिवेशं ] कल्पितः संनिवेशो निक्षेपो यस्य तत् । स्वस्थानादन्यत्र स्थापितमित्यर्थः । अत एव [ धात्र्यङ्गुलीभिः ] धात्र्या उपमातुरङ्गुलीभिः प्रतिसार्यमाणं स्वस्थानं प्राप्यमाणम् ऊर्णामयं मेषादिलोमनिर्मितम् । 'ऊर्णा मेषादिलोम्नि स्यात्' इत्यमरः । कौतुकहस्तसूत्रं मङ्गलहस्तसूत्रम् । 'कौतुकं मङ्गले हर्षे हस्तसूत्रे कुतूहले' इति शाश्वतः । बबन्ध च । मेनेति शेषः । पूर्वोक्ततिलकक्रियासमुच्चयार्थश्चकारः ॥

क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥ २६ ॥

क्षीरोदेति ॥ नवं नूतनं क्षौमं दुकूलं निवस्ते आच्छादयतीति नवक्षौमनिवासिनी । वस्तेराच्छादनार्थाण्णिनिः । तथा नवं दर्पणं आदधाना बिभ्रती सा गौरी सफेनपुञ्जा सडिण्डीरपङ्क्तिः । [ क्षीरोदवेला ] क्षीरमुदकं यस्य स क्षीरोदः क्षीरसमुद्रः । 'उदकस्योदः संज्ञायाम्' इत्युदादेशः । तस्य वेला तीरभूमिः इव । 'वेला काले च जलधेस्तीरनीरविकारयोः' इति विश्वः । पर्याप्तचन्द्रा पूर्णचन्द्रा शरत्त्रियामा शरद्रात्रिः इव भूयः भूयिष्ठं बभौ चकासे ॥

---

१ बाष्पा०. २ धात्र्या०. ३ परिमार्ज्यमानम्. ४ नवं.

**तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।**
**अकारयत्कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥२७॥**

तामिति ॥ [ **कारयितव्यदक्षा** ] कारयितव्येषु दक्षा कारयित्री । कर्मोपदेशकुशलेत्यर्थः । **माता** मेना । [ **कुलप्रतिष्ठां** ] प्रतितिष्ठत्यस्यामिति प्रतिष्ठा । 'आतश्चोपसर्गे' इति कः । स्त्रियां टाप् । कुलस्य प्रतिष्ठां कुलालम्बनभूताम् । स्थितिकारिणीमित्यर्थः । **तां** गौरीम् । । **आर्चिताभ्यः** पूजिताभ्यः **कुलदेवताभ्यः** गृहदेवताभ्यः **प्रणमय्य** प्रणामं कारयित्वा । 'ल्यपि लघुपूर्वात्' इति णेरयादेशः । **सतीनां** पतिव्रतानां **पादग्रहणं** पादाभिवन्दनं **क्रमेण** **अकारयत्** कारयामास । 'हृक्रोरन्यतरस्याम्' इति अणि कर्तुः कर्मत्वम् । अन्यत्र च नमेरकर्मकत्वात् 'गतिबुद्धि'–इत्यादिना ॥

**अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।**
**तया तु तस्यार्धशरीरभाजा पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥२८॥**

अखण्डितमिति ॥ **नम्रा** प्रणता **उमा** **ताभिः** सतीभिः **पत्युः** शिवस्य **अखण्डितम्** अक्षतं **प्रेम** **लभस्व** प्राप्नुहि **इति** **उच्यते** **स्म** अभिहिता । 'लट् स्मे' इति भूतार्थे लट् । **तस्य** हरस्य । अर्धं शरीरस्यार्धशरीरम् । 'अर्धं नपुंसकम्' इति समासः । तद्भजतीति **अर्धशरीरभाजा** **तया** गौर्या **तु** **स्निग्धजनाशिषः** बन्धुजनाशीर्वादाः **अपि** **पश्चात्कृताः** अधरीकृताः । ततोऽप्यधिकफललाभादिति भावः ॥

**इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।**
**सभ्यैः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागमनप्रतीक्षः ॥२९॥**

इच्छेति ॥ **कृती** कुशलः । सभायां साधुः **सभ्यः** । 'सभाया यः' इति यप्रत्ययः । **अद्रिः** हिमवान् **इच्छाविभूत्योः** उत्साहैश्वर्ययोः **अनुरूपं** सदृशं यथा तथा **तस्याः** पार्वत्याः **कृत्यं** कर्तव्यम् **अशेषयित्वा** शेषं निःशेषं कृत्वा । समाप्येत्यर्थः । अशेषशब्दात्तत्करोतीति ण्यन्तात् क्त्वाप्रत्ययः । **सुहृदास्थितायां** बन्धुजनाक्रान्तायां **सभायां** संसदि [ **वृषाङ्कागमनप्रतीक्षः** ] वृषाङ्कस्य हरस्यागमनं प्रतीक्षत इति तथोक्तः सन् । 'कर्मण्यण्' इत्यण् । **तस्थौ** स्थितः ॥

**तावद्भवस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।**
**प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात्पुरशासनस्य ॥ ३० ॥**

तावदिति ॥ **तावत्** । यावद्गौरीप्रसाधनं क्रियते तत्काल एवेत्यर्थः । **कुबेरशैले** कैलासे । [ **तत्पूर्वपाणिग्रहणानुरूपम्** ] तदेव पूर्वं तत्पूर्वं तच्च तत्पाणिग्रहणं तस्यानुरूपं **प्रसाधनं** अलंकारसामग्री । **आदृताभिः** सादराभिः । कर्तरि क्तः । **मातृभिः** ब्राह्मीप्रभृतिभिः सप्तमातृकाभिः । पुरं शास्तीति पुरशासनस्तस्य [ **पुरशासनस्य** । ] कर्तरि ल्युट् । **भवस्य** **अपि** **पुरस्तात्** अग्रे **न्यस्तं** निक्षिप्तम् ॥

---

१ असौ- - लाभात्, लाभादधःकृताः. ३ बन्धु- ४ सद्यः- ५ आगमनं प्रतीक्ष्य. ६ वरस्य हरस्य. ७ स्मर-

तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
स एव वेषः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे ॥ ३१ ॥

तदिति ॥ ईश्वरेण शिवेन सा मङ्गलमण्डनश्रीः शुभप्रसाधनसंपत् तद्गौरवात् तासु मातृष्वादरात् केवलं पस्पृशे । स्पृष्टैव न तु दध्रे इत्यवधारणार्थः केवलशब्दः । 'केवलं चावधारणे' इति शाश्वतः । किं तु तस्य विभोः देवस्य स एव वेषः स्वाभाविको भस्मकपालादिवेष एव परिणेतुः लोक उद्वोढुः इष्टम् अपेक्षितं भावान्तरं रूपान्तरं प्रपेदे । अङ्गरागादिरूपतां प्रापेत्यर्थः ॥

भावान्तरापत्तिमेवाह—

बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को गजाजिनस्यैव दुकूलभावः ॥ ३२ ॥

बभूवेति ॥ भस्म एव सिताङ्गरागः शुभ्रगन्धानुलेपनं बभूव । कपालम् एव [ अमलशेखरश्रीः ] अमलं शेखरं शिरोभूषणं तस्य श्रीः शोभा बभूव । गजाजिनस्य एव उपान्तभागेषु अञ्चलप्रदेशेषु [ रोचनाङ्कः ] रोचनैवाङ्को हंसादिचिह्नं यस्य स तथोक्तः दुकूलभावः पट्टांशुकत्वं च बभूव । भस्मादिकमेवाङ्गरागादिभावं प्राप्तमित्यर्थः ॥

शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टामलपिङ्गतारम् ।
सांनिध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥ ३३ ॥

शङ्खेति ॥ [ शङ्खान्तरद्योति ] शङ्खान्तरे ललाटास्थिमध्ये द्योतत इति तथोक्तम् । 'शङ्खो निधौ ललाटास्थ्नि' इत्यमरः । [ अन्तर्निविष्टामलपिङ्गतारम् ] अन्तर्निविष्टा मध्यगतामला पिङ्गा तारा कनीनिका यस्य तत्तथोक्तम् । 'तारकाक्ष्णः कनीनिका' इत्यमरः । यद् विलोचनं तत् विलोचनम् एव हरितालमय्याः वर्णद्रव्यविशेषविकारस्य तिलकक्रियायाः तिलकरचनायाः संनिधिरेव सांनिध्यं तदेव । पक्षः साध्यम् । 'पक्षः पार्श्वगरुत्साध्यसहायबलभित्तिषु ।' इति यादवः । तस्मिन् सांनिध्यपक्षे जातम् । प्रविष्टमित्यर्थः । अनेन ललाटलोचनमेव तस्य हरितालतिलकमभूदित्युक्तम् ॥

यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥ ३४ ॥

यथेति ॥ यथाप्रदेशं प्रदेशान्प्रकोष्ठादीननतिक्रम्य आभरणान्तरत्वं कङ्कणाद्याभरणविशेषत्वं करिष्यतां संपादयिष्यतां भुजगेश्वराणां शरीरमात्रं शरीरमेव विकृतिं रूपान्तरं प्रपेदे । फणरत्नशोभाः तथा एव तस्थुः । तासां तथैवोपादेयत्वादिति भावः ॥

---

१ स्व एव, स्वभाववे०. २ कृता०. ३ भावेषु. ४ सिंहा०. ५ नेत्रान्तर. ६ अनल०. ७ गमिष्यतां.

दिवापि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥ ३५ ॥

दिवापीति ॥ दिवा दिने अपि [ निष्ठ्यूतमरीचिभासा ] निष्ठ्यूता उद्गीर्णा मरीचिभासः किरणकान्तयो यस्य तेन । बाल्यात् अल्पतनुत्वात् अनाविष्कृतलाञ्छनेन अदृश्यमानकलङ्केनेत्यर्थः । चन्द्रेण नित्यं सर्वदा प्रतिभिन्नमौलेः संगतमुकुटस्य हरस्य चूडामणेः ग्रहणं स्वीकारः किं किमर्थम् । चन्द्रचूडामणेर्देवस्य किमन्यैश्चूडामणिभिरिति भावः ॥

इत्यद्भुतैकप्रभवः प्रभावात्प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते खड्गे निषक्तप्रतिमं ददर्श ॥ ३६ ॥

इतीति ॥ इति इत्थं प्रभावात् सामर्थ्यात् [ प्रसिद्धनेपथ्यविधेः ] प्रसिद्धस्य नेपथ्यविधेर्वेषसंविधानस्य विधाता निर्माता । अत एव [ अद्भुतैकप्रभवः ] अद्भुतानामाश्चर्याणामेकप्रभवो मुख्यनिधिः स देवः [ आसन्नगणोपनीते ] आसन्नगणेन पार्श्वस्थवर्गेण । प्रमथगणेनेत्यर्थः । उपनीते आनीते खड्गे निषक्तप्रतिमं संक्रान्तप्रतिबिम्बं आत्मानं ददर्श । वीरपुरुषाणामेष आचारः ॥

स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ ३७ ॥

स इति ॥ स देवः नन्दिभुजावलम्बी नन्दिकेश्वरभुजावलम्बनः सन् । [ शार्दूलचर्मान्तरितोरुपृष्ठं ] शार्दूलचर्मणा व्याघ्रचर्मणान्तरितमाच्छादितमुरु विशालं पृष्ठं यस्य तं तथोक्तम् । 'शार्दूलद्वीपिनौ व्याघ्रे' इत्यमरः । [ तद्भक्तिसंक्षिप्तबृहत्प्रमाणं ] तस्मिन्देवे भक्त्या संक्षिप्तं संकोचितं बृहत्प्रमाणं यस्य तं गोपतिं वृषभं कैलासम् इव आरुह्य प्रतस्थे चचाल ॥

तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डलरेणुगौरैः पद्माकरं चक्रुरिवान्तरीक्षम् ॥ ३८ ॥

तमिति ॥ तं देवम् अनुव्रजन्त्यः अनुगच्छन्त्यः [ स्ववाहनक्षोभचलावतंसाः ] स्ववाहनानां क्षोभेण प्रकम्पेण चलावतंसाश्चलकुण्डलाः मातरः सप्तमातृकाः [ प्रभामण्डलरेणुगौरैः ] प्रभामण्डलान्येव रेणवः परागास्तैर्गौरैः अरुणैः । 'गौरोऽरुणे सिते पीते' इति यादवः । मुखैः अन्तरीक्षम् आकाशं पद्माकरम् इव चक्रुः ॥

तासां च पश्चात्कनकप्रभाणां काली कपालाभरणा चकासे ।
बलाकिनी नीलपयोदराजी दूरं पुरःक्षिप्तशतह्रदेव ॥ ३९ ॥

१ लक्षणेन. २ अत्यद्भुत. ३ नेपथ्यविधिः. ४ टङ्के. ५ निषिक्त. ६ तन्मा०. ७ आक्षोभ. ८ राजि०; चलत्कुण्डलरश्मि०. ९ पद्माकरीचक्रुः. १० अन्तरिक्षम्. ११ राजिः. १२ परिक्षिप्ततडिल्लेव.

तासामिति ॥ **कनकप्रभाणां** सुवर्णवर्णानां **तासां** मातॄणां **पश्चात् कपालाभरणा** । सितकपालालंकारेत्यर्थः । **काली** महाकाली देवी च । कृष्णवर्णत्वसूचनाय कालीसंज्ञयाभिधानम् । **बलाकिनी** बलाकावती । व्रीह्यादित्वादिनिः । **दूरं** यथा तथा [ **पुरःक्षिप्तशतह्रदा** ] पुरोऽग्रे क्षिप्ताः प्रसारिताः शतह्रदा विद्युतो यस्याः सा तथोक्ता **नीलपयोदराजी** कालमेघपङ्क्तिः **इव चकासे** ॥

**ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः ।**
**विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥ ४० ॥**

तत इति ॥ **ततः** अनन्तरं **शूलभृतः** शिवस्य पुरो गच्छन्तीति **पुरोगैः** अग्रेसरैः । 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति गमेर्डप्रत्ययः । **गणैः** प्रमथैः **उदीरितः** उत्पादितः **मङ्गलतूर्यघोषः** मङ्गलवाद्यध्वनिः **विमानशृङ्गाणि अवगाहमानः** सन् । **सुरेभ्यः** विमानस्थेभ्यः **सेवावसरं शशंस** । सुराः प्रस्थानतूर्यध्वनिमाकर्ण्यायमेव नः सेवावसर इत्याजग्मुरित्यर्थः ॥

सुराणां सेवाप्रकारमेवाह—

**उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।**
**स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥ ४१ ॥**

उपाददे इति ॥ **तस्य** हरस्य **सहस्ररश्मिः** सूर्यः **त्वष्ट्रा** विश्वकर्मणा **निर्मितं नवम् आतपत्रम् उपाददे** । धृतवानित्यर्थः । अत्रोत्प्रेक्षते-**तद्दुकूलात्** तस्यातपत्रस्य प्रान्तलम्बिनो दुकूलात् **अविदूरमौलिः** । तद्दुकूलस्यासन्नमौलिरित्यर्थः । **स** हरः **उत्तमाङ्गे** शिरसि । 'उत्तमाङ्गं शिरः शीर्षम्' इत्यमरः । पतन्ती गङ्गा यस्य सः **पतद्गङ्गः इव बभौ** । तद्दुकूलादित्यत्र 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' इति दूरार्थयोगे विकल्पेन पञ्चमी । नाथेनोक्तम् 'अन्यारात्'—इत्यत्राराच्छब्दस्यार्थग्रहणार्थत्वात्पञ्चमीति तदनाकरम् । किं चास्य शास्त्रोक्तविकल्पापवादत्वात् 'दूरं ग्रामस्य' इत्यादिषष्ठीप्रयोगो दूरापास्तः स्यादित्युपेक्षणीयमेव ॥

**मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।**
**समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥ ४२ ॥**

मूर्ते इति ॥ गङ्गा च यमुना च **गङ्गायमुने च मूर्ते** विग्रहधारिण्यौ **सचामरे** चामरसहिते सत्यौ । अत एव [ **समुद्रगारूपविपर्यये** ] समुद्रगा नदी तस्या रूपं स्वरूपं तस्य विपर्यये **अपि** अभावेऽपि । सह हंसपातेन हंससंचारेण वर्तेते इति **सहंसपाते इव** । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । **लक्ष्यमाणे** दृश्यमाने सत्यौ **तदानीं** विवाहसमये **देवं असेविषाताम्** अभजताम् च । सेवतेर्लुङ् । गङ्गायमुने चामरग्राहिण्यौ देवमुपतस्थतुरित्यर्थः ॥

---

१ सुवेरु०. २ पतद्गाङ्गः, वहन्गाङ्गमिव प्रवाहम्. ३ सहंसपाते.

तमभ्यगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥ ४३ ॥

तमिति ॥ प्रथमः आद्यः विधाता चतुर्मुखस्तथा श्रीवत्सलक्ष्मा श्रीवत्साङ्कः पुरुषः विष्णुः च साक्षात् तं देवम् अभ्यगच्छत् संमुखमाययौ । किं कुर्वन्तौ । जय इति वाचा जयशब्देन अस्य ईश्वरस्य महिमानं महत्त्वं हविषा वह्निम् इव संवर्धयन्तौ वृद्धिं गमयन्तौ ॥

न चानुचितमेतदुक्तमित्याह—

एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥ ४४ ॥

एकैवेति ॥ सा एका एव मूर्तिः त्रिधा ब्रह्मविष्णुशिवात्मकत्वेन बिभिदे । औपाधिकोऽयं भेदो न वास्तविक इत्यर्थः । अत एव एषां त्रयाणां प्रथमावरयोर्भावः प्रथमावरत्वं ज्येष्ठकनिष्ठभावः सामान्यं साधारणम् । इच्छया सर्वे ज्येष्ठा भवन्ति कनिष्ठाश्चेत्यर्थः । एतदेव विवृणोति—कदाचित् हरः विष्णोः आद्यः । कदाचित् हरिः तस्य आद्य । कदाचित् वेधाः तयोः हरिहरयोः आद्यः । कदाचित् तौ हरिहरौ अपि धातुः स्रष्टुः आद्यौ । एवमेतेषां पौर्वापर्यमनियतमिति दर्शितम् ॥

तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेषाः
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥ ४५ ॥

तमिति ॥ पुरुहूतमुख्याः इन्द्रादयः लोकपालाः [ श्रीलक्षणोत्सर्गविनीतवेषाः ] श्रीलक्षणानामैश्वर्यचिह्नानां छत्रचामरवाहनानामुत्सर्गेण त्यागेन विनीतवेषा अनुनीतवेषाः सन्तः । तथा दृष्टिप्रदाने दर्शननिमित्ते । दर्शनप्रदानार्थमित्यर्थः । [ कृतनन्दिसंज्ञाः ] कृता नन्दिनः प्रतीहारस्य संज्ञा संकेतो यैस्तादृशाः । मम दर्शनं दापयेति नन्दिनं प्रति कृतहस्तादिसूचना इत्यर्थः । ' संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना । ' इत्यमरः । [ तद्दर्शिताः ] तेन नन्दिना दर्शिताः अयमिन्द्रः प्रणमत्ययं चन्द्र इत्याद्युक्तिपूर्वकं निवेदिताः । प्राञ्जलयः कृताञ्जलयः सन्तः । तं भवं प्रणेमुः प्रणताः ॥

कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान्संभावयामास यथाप्रधानम् ॥ ४६ ॥

कम्पेनेति ॥ स देवः शतपत्रयोनिं चतुर्मुखं मूर्ध्नः कम्पेन तथा हरिं वाचा संभाषणेन वृत्रं हतवन्तं वृत्रहणम् इन्द्रम् । ' ब्रह्मभ्रूणवृत्रेषु क्विप् ' इति क्विप् । स्मितेन मन्दहासेन अशेषान् सुरान् आलोकमात्रेण दृष्टिमात्रेण यथाप्रधानं यथार्हं संभावयामास ॥

---

१ अभ्यग०. २ प्रथमम्. ३ पश्चात्. ४ यन्त्या. ५ एव. ६ असौ. ७ ईड्यौ. ८ श्रीवत्सलोत्सङ्ग.

**तस्मै जयाशीः ससृजे पुरस्तात्सप्तर्षिभिस्तान्स्मितपूर्वमाह ।**
**विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥ ४७ ॥**

तस्मा इति ॥ **तस्मै** शिवाय **सप्तर्षिभिः** । 'दिक्संख्ये संज्ञायाम्' इति समासः । **पुरस्तात्** अग्रे [ **जयाशीः** ] जयेत्याशीः **ससृजे** प्रयुक्ता । **तान्** सप्तर्षीन् **स्मितपूर्वमाह** । किमिति । **वितते** विस्तृते **अत्र** प्रवर्तिते [ **विवाहयज्ञे** ] विवाह एव यज्ञस्तस्मिन् । **यूयं मया** [ **पूर्ववृताः** ] पूर्वमेव प्रार्थिताः **अध्वर्यवः** ऋत्विजः **इति** । विशेषवाचिना सामान्यमुक्तम् ॥

**विश्वावसुप्राग्रहरैः प्रवीणैः संगीयमानत्रिपुरावदानः ।**
**अध्वानमध्वान्तविकारलङ्घ्यस्ततार ताराधिपखण्डधारी ॥ ४८ ॥**

विश्वावस्विति ॥ [ **विश्वावसुप्राग्रहरैः** ] विश्वावसुर्नाम कश्चिद्गन्धर्वो देवगायकस्तत्प्राग्रहरैस्तत्प्रमुखैः **प्रवीणैः** प्रकृष्टवीणैर्निपुणैर्वा । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।' इत्यमरः । [ **संगीयमानत्रिपुरावदानः** ] त्रयाणां पुराणां समाहारस्त्रिपुरम् । 'तद्धितार्थोत्तरपद'—इत्यादिना समाहारसमासः । 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः' इति स्त्रीलिङ्गान्ततानिषेधः । त्रिपुरस्य संबन्ध्यवदानं पूर्ववृत्तं कर्म विजयरूपं त्रिपुरावदानं तत्संगीयमानं स्तूयमानं यस्य स तथोक्तः । 'अवदानं कर्म वृत्तम्' इत्यमरः । ध्वान्तं तमः । मोह इति यावत् । तद्विकारेण रागादिना लङ्घ्योऽभिभवनीयो न भवतीति **अध्वान्तविकारलङ्घ्यः** । विवाहादिकं तु तस्य लीलेत्यर्थः । **ताराधिपखण्डधारी** चन्द्रशेखरः शंभुः **अध्वानं** मार्गं **ततार** अत्यगच्छत् ॥

**खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।**
**तटाभिघातादिव लग्नपङ्के धुन्वन्मुहुः प्रोतघने विषाणे ॥ ४९ ॥**

ख इति ॥ **खे** आकाशे **खेलं** सुन्दरं गच्छतीति **खेलगामी** । [ **सशब्दचामीकरकिङ्किणीकः** ] सशब्दाः शब्दायमानाश्चामीकरकिङ्किण्यः काञ्चनक्षुद्रघण्टिका यस्य स तथोक्तः । 'किङ्किणी क्षुद्रघण्टिका' इत्यमरः । 'नद्यृतश्च' इति कप् । वाह्यतेऽनेनेति **वाहः** वृषभः । करणे घञ् । **प्रोतघने** स्यूतमेघे अत एव **तटाभिघातात्** रोधोभेदात् **लग्नपङ्के** श्लिष्टकर्दमे **इव** स्थिते **विषाणे** शृङ्गे **मुहुः धुन्वन्** **तं** हरम् **उवाह** वहति स्म ॥

**स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्तात् ।**
**पुरो विलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणः ॥ ५० ॥**

स इति ॥ **स** वाहः [ **अप्राप्तपराभियोगम्** ] अप्राप्तः पराभियोगः शत्रुसभाक्रान्तिर्यस्य तत्तथोक्तम् । [ **नगेन्द्रगुप्तं** ] नगेन्द्रेण हिमवता गुप्तं रक्षितं **नगरम्** ओषधिप्रस्थं **पुरः** अग्रे **विलग्नैः** संक्रान्तैः **हरदृष्टिपातैः** **सुवर्णसूत्रैः** **कृष्यमाणः** **इव** **मुहूर्तात् प्रापत्** । अन्यथा कथं दूरस्याशुप्राप्तिः स्यादिति भावः । पुरः प्रसृता हरदृष्टयः पिङ्गलवर्णत्वात्सौवर्णानि वृषाकर्षणदामानीवालक्ष्यन्तेत्यर्थः ॥

१ ०पदानः. २ कृष्यमाणम्.

तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः ॥ ५१ ॥

तस्येति ॥ तस्य पुरस्य उपकण्ठे अन्तिके घनो मेघ इव नीलः कण्ठो यस्य स घननीलकण्ठः देवः कुतूहलात् दर्शनौत्सुक्यात् [ उन्मुखपौरदृष्टः ] उन्मुखैः पौरैर्दृष्टः सन् । स्वबाणचिह्नात् त्रिपुरविजयसमये स्वबाणाङ्कात् मार्गात् कुतश्चिदाकाशदेशात् अवतीर्य अवरुह्य आसन्नभूपृष्ठम् निकटभूतलम् इयाय प्राप ॥

तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ ५२ ॥

तमिति ॥ [ आगमनप्रतीतः ] आगमनेन शिवागमनेन प्रतीतो हृष्टः गिरिचक्रवर्ती पर्वताधिराजो हिमवान् [ ऋद्धिमद्बन्धुजनाधिरूढैः ] ऋद्धिमता वस्त्रालंकारादिसमृद्धेन बन्धुजनेनाधिरूढैः । अनेन बन्धूनां समस्वाम्यं सूचितम् । गजानां वृन्दैः [ प्रफुल्लवृक्षैः ] प्रफुल्ला विकसितकुसुमा वृक्षा येषु तैः स्वैः स्वकीयैः कटकैः नितम्बैः इव तं हरं प्रत्युज्जगाम अभिययौ । ' कटकोऽस्त्री नितम्बोऽद्रेः ' इत्यमरः ॥

वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥ ५३ ॥

वर्गाविति ॥ [ दूरविसर्पिघोषौ ] दूरविसर्पी दूरगामी घोषो ययोस्तौ । देवाश्च महीधराश्च तेषां देवमहीधराणाम् उभौ वर्गौ उद्घटितापिधाने अपनीतकवाटे पुरस्य द्वारे भिन्नो दीर्ण एकसेतुः याभ्यां तौ भिन्नैकसेतू पयसाम् ओघौ प्रवाहौ इव समीयतुः संगतौ ॥

ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य दूरमावर्जितं नात्मशिरो विवेद ॥ ५४ ॥

ह्रीमानिति ॥ भूमिधरः हिमवान् । [ त्रैलोक्यवन्द्येन ] त्रयो लोकास्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्ष्यञ्प्रत्ययः । तस्य वन्द्येन नमस्कार्येण हरेण कृतप्रणामः सन् । 'ऋत्विक्पितृव्यश्वशुरमातुलानां यवीयसाम् । प्रवयाः प्रथमं कुर्यात्प्रत्युत्थायाभिवादनम् ॥' इति स्मरणात् । ह्रीमानभूत् । महादेवं प्रति स्वयमल्पत्वात्संकोचं प्रापेत्यर्थः । ननु विदितेश्वरमाहिम्नः स्वयं प्रागेव प्रणतस्य जामातुराचारमात्रस्वीकारे कः संकोच इति शङ्कां निरस्यति—पूर्वमिति ॥ हि यस्मात् स हिमवान् पूर्वं प्रागेव तस्य ईश्वरस्य महिम्ना सामर्थ्येन दूरम् अत्यन्तम् आवर्जितं नमितम् आत्मशिरः न विवेद । सत्यं स्वयं प्रणतत्वानुसंधाने न संकोचः । तदनुसंधानं त्वौत्सुक्यान्नास्तीति भावः ॥

स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनमागुल्फकीर्णापणमार्गपुष्पम् ॥ ५५ ॥

---

१ स्वबाह०; स्वबाहबाहात्. २ वाहात्. ३ समृ०. ४ प्रतीक्षः. ५ दूरात्. ६ माङ्गल्य०, आगुल्फपुष्पप्रकरावकीर्ण,० ल्फगाढार्पितमा०.

स इति ॥ **प्रीतियोगात्** संतोषसंबन्धात् **विकसन्मुखश्रीः** विकसन्ती मुखश्रीर्यस्य स तथोक्तः **स** हिमवान् । जायां मिमीते जानातीति **जामातुः** वरस्य । पृषोदरादित्वात्साधुः । 'जामाता दुहितुः पतिः' इत्यमरः । **अग्रेसरताम्** पुरोगामित्वम् **उपेत्य एनं** देवम् आगुल्फं पादग्रन्थिपर्यन्तं कीर्णानि पर्यस्तान्यापणमार्गेषु पण्यवीथिकासु पुष्पाणि यस्मिंस्तत् **आगुल्फकीर्णापणमार्गपुष्पम्** । 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । **ऋद्धं** समृद्धं **मन्दिरं** नगरम् । 'मन्दिरं नगरेऽगारे मन्दिरो मकरालये ।' इति विश्वः । **प्रावेशयत्** ॥

**तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।**
**प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ५६**

तस्मिन्निति ॥ **तस्मिन्मुहूर्ते** हरपुरप्रवेशसमये [ **ईशानसंदर्शनलालसानाम्** ] ईशानस्य संदर्शने लालसानां लोलुपानाम् । 'लोलुपो लोलुभो लोलो लालसो लम्पटश्च सः ।' इति यादवः । **पुरसुन्दरीणां प्रासादमालासु इत्थं** वक्ष्यमाणप्रकारेण **त्यक्तान्यकार्याणि** विसृष्टकार्यान्तराणि **विचेष्टितानि** व्यापाराः । 'नपुंसके भावे क्तः' इति क्तः । **बभूवुः** आसन् ॥

तान्येवाह पञ्चभिः श्लोकैः—

**आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः[1] ।**
**बन्द्धुं न संभावित एव तावत्करेण रुद्धोऽपि च[3] केशपाशः ॥५७॥**

आलोकमार्गमिति ॥ **आलोकमार्गं** दर्शनपथम् । गवाक्षमित्यर्थः । **सहसा व्रजन्त्या** गच्छन्त्या **कयाचित्** उद्वेष्टनो द्रुतगतिवशादुन्मुक्तबन्धनोऽत एव वान्तमाल्य उद्गीर्णमाल्यश्च यः स **उद्वेष्टनवान्तमाल्यः करेण रुद्धः** गृहीतः **अपि च केशपाशः** केशकलापः । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । **तावत्** आलोकनमार्गप्राप्तिपर्यन्तं **बन्द्धुम्** । बन्धनायेत्यर्थः । **न संभावितः** न स्मृतः **एव** ॥

**प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।**
**उत्सृष्टलीलागतिरा[4] गवाक्षादलक्तकाङ्कां पदवीं ततान[5] ॥ ५८ ॥**

प्रसाधिकेति ॥ **काचित्** स्त्री [ **प्रसाधिकालम्बितं** ] प्रसाधिकया अलंकर्त्र्या आलम्बितं रञ्जनार्थं धृतं **द्रवरागम् एव** आर्द्रालक्तकमेव । [ **अग्रपादम्** ] अग्रश्चासौ पादश्च अग्रपादः इति समानाधिकरणसमासः । 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्याम्' इति वामनः । तम् **आक्षिप्य** आकृष्य **उत्सृष्टलीलागतिः** त्यक्तमन्दगमना सती **आ गवाक्षात्** गवाक्षपर्यन्तम् । पदद्वयमेतत् । **पदवीम् अलक्तकाङ्कां** लाक्षारसचिह्नां **ततान** चकार ॥

१ मुक्ता०. २ दुद्बन्धन. ३ न केशहस्तः; हि केशपाशः, ०केशहस्तः. ४ उन्मृष्ट०. ५ चकार.

विलोचनं दक्षिणमञ्जनेन संभाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ५९ ॥

विलोचनमिति ॥ अपरा स्त्री दक्षिणं विलोचनम् अञ्जनेन संभाव्य अलंकृत्य [ तद्वञ्चितवामनेत्रा ] तद्वञ्चितं तेनाञ्जनेन वर्जितं वामनेत्रं यस्याः सा तथोक्ता सती । तथैव तेनैव रूपेण शलाकाम् अञ्जनकूर्चिकां वहन्ती बिभ्रती वातायनसंनिकर्षं गवाक्षसमीपं ययौ । दक्षिणग्रहणं संभ्रमाद्व्युत्क्रमद्योतनार्थम् । 'सव्यं हि पूर्वं मनुष्या अञ्जते' इति श्रुतेः ॥

जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥ ६० ॥

जालान्तरेति ॥ अन्या स्त्री जालान्तरप्रेषितदृष्टिः गवाक्षमध्यप्रसारितदृष्टिः सती [ प्रस्थानभिन्नां ] प्रस्थानेन गमनेन भिन्नां त्रुटितां नीवीं वस्त्रग्रन्थिम् । 'नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि ।' इति विश्वः । न बबन्ध नाबध्नात् । किं तु [ नाभिप्रविष्टाभरणप्रभेण ] नाभिं प्रविष्टा आभरणानां कङ्कणानां प्रभा यस्य तेन । प्रभैव नाभेरावरणमभूदिति भावः । हस्तेन वासः अवलम्ब्य धृत्वा तस्थौ ॥

अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ६१ ॥

अर्धाचितेति ॥ सत्वरं सवेगम् उत्थितायाः कस्याश्चित् अर्धमाचिता मणिभिर्गुम्फिता अर्धाचिता दुर्निमिते संभ्रमाद्दुःखेन निक्षिप्ते । 'डुमिञ् प्रक्षेपणे' इति धातोः कर्मणि क्तः । पदे पदे प्रतिपदम् । वीप्सायां द्विर्भावः । गलन्ती गलद्रत्ना सती रसना मेखला तदानीं तस्मिन्नवसरे [ अङ्गुष्ठमूलार्पितसूत्रशेषा ] अङ्गुष्ठमूले अर्पितं लगितं सूत्रमेव शेषो यस्याः सा आसीत् ॥

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्राभरणा इवासन् ॥ ६२ ॥

तासामिति ॥ तदानीं सान्द्रकुतूहलानां तासां स्त्रीणाम् [ आसवगन्धगर्भैः ] आसवगन्धो गर्भे येषां तैः । [ विलोलनेत्रभ्रमरैः ] विलोलानि नेत्राण्येव भ्रमरा येषु तैः मुखैः व्याप्तान्तराः छन्नावकाशाः गवाक्षाः सहस्रपत्राभरणा इव आसन् । कमलालंकृता इव स्थिता इत्यर्थः ॥

तावत्पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवापि कुर्वञ्ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥ ६३ ॥

---

१ अर्धाञ्चिता. २ पत्रावरणाः; प्रफुल्लपद्माः. ३ च्छवीनि.

६१—६२ श्लोकयोर्मध्येऽयं श्लोको दृश्यते—

स्तनं धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती ।
संप्रस्नुताभ्यां पदवीं स्तनाभ्यां सिषेच काचित्पयसा गवाक्षम् ॥

तावदिति ॥ तावत् तस्मिन्नवसरे इन्दुमौलिः ईश्वरः दिवा अपि प्रासाद-शृङ्गाणि [ ज्योत्स्नाभिषेकद्विगुणद्युतीनि ] ज्योत्स्नाया अभिषेकेण स्नपनेन द्विगुणद्युतीनि द्विरावृत्तकान्तीनि । 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुषु ।' इति वैजयन्ती । कुर्वन् [ पताकाकुलं ] पताकाभिराकुलं व्याकीर्णम् उत्तोरणम् उच्छ्रिततोरणं राजपथं प्रपेदे ॥

तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा ॥ ६४ ॥

तमिति ॥ एक एव दृश्यो दर्शनीयः तम् एकदृश्यं तम् ईश्वरं नयनैः पिबन्त्यः । अतितृष्णया पश्यन्त्य इत्यर्थः । 'ताः शङ्करं दृष्टिभिरापिबन्त्यः' इति वा पाठः । नार्यः विषयान्तराणि ततोऽन्यान् विषयान् । शब्दादीनित्यर्थः । न जग्मुः । न विदुरित्यर्थः । तथा हि । आसां नारीणां शेषेन्द्रियवृत्तिः श्रोत्रादिप्रवृत्तिः सर्वात्मना स्वरूपकार्त्स्न्येन चक्षुः प्रविष्टेव । श्रोत्रादीनीन्द्रियाणि स्वातन्त्र्येण ग्रहणाशक्तेश्चक्षुरेव प्रविश्य कौतुकात्स्वयमप्येनमुपलभन्ते किमु । अन्यथा स्वस्वविषयाधिगमः किं न स्यादिति भावः ॥

अथ पौराङ्गनावचनान्याह—

स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयापि तप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्था किमुताङ्कशय्याम् ६५

स्थान इति ॥ पेलवया कोमलया अपि अपर्णया पार्वत्या एतस्मै शिवाय एतदर्थम् । 'अर्थेन सह नित्यसमासः सर्वलिङ्गता च' इति विशेष्यनिघ्नत्वम् । दुश्चरं तपः तप्तं स्थाने युक्तम् । कुतः । या नारी अस्य ईश्वरस्य दास्यं दासीत्वम् अपि लभेत सा कृतार्था स्यात् । या अङ्क एव शय्या ताम् अङ्कशय्यां लभेत सा किमुत । कृतार्थेति किमु वक्तव्यमित्यर्थः ॥

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् । ६६ ।

परस्परेणेति ॥ स्पृहणीयशोभं सर्वैराशास्यमानसौन्दर्यम् इदं द्वन्द्वं मिथुनम् । 'द्वन्द्वं रहस्य-' इत्यादिना निपातः । परस्परेण न अयोजयिष्यत् चेत् न योजयेद्यदि प्रजानां पत्युः विधातुः अस्मिन्द्वये द्वन्द्वे [ रूपविधानयत्नः ] रूपविधाने सौन्दर्यनिर्माणे यत्नः प्रयासः विफलः अभविष्यत् भवेत् । एतदनुरूपस्त्रीपुंसान्तराभावादिति भावः । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति लृङ् ॥

न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
व्रीडादमुं देवमुदीक्ष्य मन्ये संन्यस्तदेहः स्वयमेव कामः ॥ ६७ ॥

---

१ विनापघातेन जडा-खिली-बभूव. २ कोमलया; याभित०. ३ वितथः. ४ व्रीडावशात्. ५ अवेक्ष्य.

नेति ॥ आरूढरुषा प्ररूढकोपेन अनेन हरेण कुसुमायुधस्य कामस्य शरीरं न दग्धं नूनम्। किं तु कामः अमुं देवम् उदीक्ष्य दृष्ट्वा व्रीडात् सौन्दर्येण जितोऽस्मीति लज्जया स्वयमेव संन्यस्तदेहः त्यक्तदेह इति मन्ये इत्युत्प्रेक्षा। न स्वयं न्यस्ताकृतेः कोपः संभवतीति भावः ॥

अनेन संबन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण।
मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥ ६८ ॥

अनेनेति ॥ हे आलि सखि। 'आलिः सखी वयस्याऽथ' इत्यमरः। शैलराजः हिमवान्। दिष्ट्या इत्यानन्देऽव्ययम्। [मनोरथप्रार्थितं] मनोरथैः प्रार्थितमवरुद्धम्, अभिलाषविषयीकृतमित्यर्थः। 'प्रार्थना याच्ञावरोधयोः' इत्यभिधानात्। अनेन ईश्वरेण संबन्धम् उपेत्य अवाप्य [क्षितिधारणोच्चं] क्षितिधारणेन उच्चमुन्नतं मूर्धानम् उच्चैस्तरम् उन्नततरम्। उच्चैरित्यव्ययात्तरप् प्रत्ययः। मूर्ध्नो द्रव्यत्वान्नामुप्रत्ययान्तो निपातः। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यनेन द्रव्यप्रकर्षे तस्य विधानादिति। वक्ष्यति धारयिष्यति। वहतेर्लृट् ॥

इत्योषधिप्रस्थविलासिनीनां शृण्वन्कथाः श्रोत्रसुखास्त्रिनेत्रः।
केयूरचूर्णीकृतलाजमुष्टिं हिमालयस्यालयमाससाद ॥ ६९ ॥

इतीति ॥ त्रिनेत्रः त्र्यम्बकः। त्रिनेत्रत्रिनयनशब्दयोः 'क्षुभ्नादिषु च' इति णत्वाभावः। इति इत्थम् ओषधिप्रस्थविलासिनीनां संबन्धिनीः श्रोत्रसुखाः श्रवणमधुराः कथाः आलापान् शृण्वन् [केयूरचूर्णीकृतलाजमुष्टिं] केयूरैः अङ्गदैश्चूर्णीकृता लाजानां मुष्टयो यस्मिंस्तं तथोक्तम्। तत्रावकीर्णा आचारलाजा अन्तराल एवाङ्गदैश्चूर्णपेषं पिष्यन्त इति पुरंध्रिजनसंबन्धातिशयोक्तिः। हिमालयस्य हिमवतः आलयं भवनम् आससाद ॥

तत्रावतीर्याच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्ष्णः।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥ ७० ॥

तत्रेति ॥ तत्र हिमवदालये [अच्युतदत्तहस्तः] अच्युतेन विष्णुना दत्तहस्तो वितीर्णहस्तावलम्बः सन् शरद्घनात् शरन्मेघात्। शरद्विशेषणान्मेघस्य शुभ्रत्वं गम्यते। दीधितिमान् सूर्यः इव उक्ष्णः वृषात् अवतीर्य कमलासनेन पूर्वम् अग्रे क्रान्तानि प्रविष्टानि अद्रिपतेः कक्ष्यान्तराणि गेहप्रकोष्ठान्तराणि विवेश। 'कक्ष्या कच्छे वरत्रायां काञ्च्यां गेहप्रकोष्ठके' इति यादवः ॥

तमन्वगिन्द्रप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च।
गणाश्च गिर्यालयमभ्यगच्छन्प्रशस्तमारम्भमिवोत्तमार्थाः ॥ ७१ ॥

---

१ अवाप्य. २ पालनो. ३ उच्चैस्तराम्; मूर्धानमाक्रम्य महीधराणामुच्चैस्तरां वक्ष्यति शै० इ. पा. ४ मुष्टिः; कर्पूरचूर्णैः; कृतलाजवृष्टिम् इ. पा. ५ ततः. ६ कक्षान्तराणि. ७ अन्वगच्छन्. ८ यशस्यम्.

तमिति ॥ **तम्** ईश्वरम् **अन्वक्** अनुपदम् । अव्ययमेतत् । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्' इत्यमरः । **इन्द्रप्रमुखाः देवाः च** । सप्तर्षयः पूर्वे येषां ते **सप्तर्षिपूर्वाः** । 'न बहुव्रीहौ' इति सर्वनामसंज्ञाप्रतिषेधः । **परमर्षयः** सनकादिमहर्षयः **च** । 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' इति तत्पुरुषः । **गणाः** प्रमथाः **च** । **उत्तमार्थाः** महाप्रयोजनाः **प्रशस्तं** प्रकृष्टम् । अमोघमित्यर्थः । आरभ्यत इत्यारम्भ उपायस्तम् **आरम्भम् इव गिर्यालयं** हिमवन्मन्दिरम् **अभ्यगच्छन्** । प्राविशन्नित्यर्थः ॥

**तत्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।**
**नवे दुकूले च नगोपनीतं प्रत्यग्रहीत्सर्वममन्त्रवर्जम् ॥ ७२ ॥**

तत्रेति ॥ **तत्र** हिमवदालये **ईश्वरः विष्टरभाक्** आसनगतः । उपविष्ट इत्यर्थः । **यथावत्** यथार्हम् । विधिवदित्यर्थः । **सरत्नं** रत्नसहितम् **अर्घ्यम्** अर्घार्थं जलम् । मधु क्षौद्रमस्मिन्नस्तीति **मधुमत्** । गवि भवं **गव्यं** दधि **च** । मधुपर्कमित्यर्थः । 'दधिमधुनी सर्पिर्वा मध्वलाभे' इत्याश्वलायनगृह्यसूत्रात् । **नवे दुकूले च** इति **सर्वं नगोपनीतं** हिमवदानीतमर्घ्यादिकम् । मन्त्रान्वर्जयित्वा मन्त्रवर्जम् । ततो नञ्समासः । **अमन्त्रवर्जम्** । मन्त्रान्न वर्जयित्वेत्यर्थः । 'द्वितीयायां च' इति णमुल्प्रत्यय इत्याह न्यासकारः 'अनुदात्तं पदमेकवर्जम्' इत्यत्र । **प्रत्यग्रहीत्** स्वीकृतवान् ॥

**दुकूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः ।**
**वेलासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ ७३ ॥**

दुकूलेति ॥ अथ **दुकूलवासाः** दुकूलं वसान इत्यर्थः । **स** हरः **विनीतैः** अनुद्धतैः अवरोधेषु ये दक्षास्तैः **अवरोधदक्षैः वधूसमीपं निन्ये** नीतः । कथमिव । [ **स्फुटफेनराजिः** ] स्फुटा फेनानां राजिर्यस्य सः । उदकमस्यास्तीति **उदन्वान्** समुद्रः । 'उदन्वानुदधौ च' इति निपातनात्साधुः । **नवैः** अचिरोदितैः **चन्द्रपादैः** चन्द्रकिरणैः **वेलासमीपम् इव** ॥

**तया प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।**
**प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥ ७४ ॥**

तयेति ॥ [ **प्रवृद्धाननचन्द्रकान्त्या** ] आननं चन्द्र इव इत्युपमितसमासः । प्रवृद्धाऽऽननचन्द्रस्य कान्तिर्यस्यास्तया तथोक्तया **तया कुमार्या शरदा लोक इव संसृज्यमानः** संगच्छमानः **शिवः** [ **प्रफुल्लचक्षुःकुमुदः** ] चक्षूंषि कुमुदानीव तानि प्रफुल्लानि यस्य स तथोक्तः । **प्रसन्नचेतःसलिलः** चेतः सलिलमिव तत्प्रसन्नं यस्य स तथोक्तः । **अभूत्** । शरल्लोकयोरपि यथोचितं विशेषणानि योज्यानि ॥

---

१ मधुपर्कहव्यम्. २ ०पनीते. ३ वन्ध्यम्. ४ ०वान्सोऽथ. ५ रक्षैः,-मुख्यैः. ६ सकाशम्. ७ राशिः. ८ विवृद्धा. ९ प्रयुज्यमानः.

**तयोः समापत्तिषु कातराणि किंचिद्व्यवस्थापितसंहृतानि ।**
**ह्रीयन्त्रणां तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥ ७५ ॥**

तयोरिति ॥ **तयोः** वधूवरयोः **समापत्तिषु** यदृच्छया संगतिषु **कातराणि** चकितानि । ' अधीरे कातरः ' इत्यमरः । द्रष्टुमसमर्थानीति भावः । **किंचित्** ईषत् व्यवस्थापितानि स्थिरीकृतानि पश्चात्संहृतानि निवर्तितानि चेति **व्यवस्थापितसंहृतानि** । ' पूर्वकाल० ' इत्यादिना तत्पुरुषः । [ **अन्योन्यलोलानि** ] अन्योन्यस्मिन् लोलानि सतृष्णानि । ' लोलश्चलसतृष्णयोः ' इत्यमरः । **विलोचनानि** दृष्टयः **तत्क्षणं** तस्मिन्क्षणे **ह्रीयन्त्रणां** ह्रिया निमित्तेन संकोचम् **अन्वभूवन्** ॥

**तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।**
**उमातनौ गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम् ॥ ७६ ॥**

तस्या इति ॥ **अष्टमूर्तिः** शिवः । तस्मादीश्वराच्छङ्कत इति **तच्छङ्किनः** । तद्भीतस्येत्यर्थः । अत एव **उमातनौ** उमाशरीरे **गूढतनोः** गुप्तशरीरस्य **स्मरस्य पूर्वं प्ररोहमिव** प्रथमाङ्कुरमिव स्थितं **शैलगुरूपनीतं** शैलगुरुणा हिमवतोपनीतं प्रापितम् । अथ वा शैलगुरुणा हिमवत्पुरोधसोपनीतं **ताम्राङ्गुलिं** रक्ताङ्गुलिं **तस्याः** पार्वत्याः **करं जग्राह** ॥

**रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुंगवकेतुरासीत् ।**
**वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य ॥ ७७ ॥**

रोमोद्गम इति ॥ **उमायाः रोमोद्गमः** रोमाञ्चः **प्रादुरभूत्** । पुमान्गौः पुंगवो वृषभः । ' गोरतद्धितलुकि ' इति टच् । स केतुश्चिह्नं यस्य स **पुंगवकेतुः** शिवः **स्विन्नाङ्गुलिः आसीत्** । अत्रोत्प्रेक्षते-**पाणिसमागमेन** पाण्योः संस्पर्शेन कर्त्रा । **तयोः** वधूवरयोः **मनोभवस्य वृत्तिः** अवस्थितिः **समं विभक्तेव** समीकृतेवेत्यर्थः । प्राक्सिद्धस्याप्यनुरागसाम्यस्य संप्रति तत्कार्यदर्शनात्पाणिसंस्पर्शकृतत्वमुत्प्रेक्ष्यते । ननु कन्या तु प्रथमसंगमे स्विन्नकरचरणा भवति, पुमांस्तु रोमाञ्चितो भवतीति वात्स्यायनेन विपरीतमुक्तमिति चेन्नैष दोषः । एभिरनयोर्भावं परीक्षेतेति वाक्यशेष एभिरिति बहुवचनेन स्वेदरोमाञ्चग्रहणस्य सकलसात्त्विकोपलक्षणत्वावगमेनानियमावधारणात् । अत एव रघुवंशेऽन्यथाभिधानात्स्वोक्तिविरोध इत्यपास्तम् । तदेतद्रघुवंशसंजीविन्यां ( ७। २२ ) सुव्यक्तमवोचम् । सात्त्विकास्तु ' स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रुवैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ॥ ' इति ॥

**प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।**
**सांनिध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥७८॥**

१ आनाशिरे मुहूर्त-मनोज्ञाम्. २ उमात्मना. ३ शङ्कितः. ४ चित्रा०. ५ तस्मिन्द्वये तत्क्षणमात्मवृत्तिः समं विभक्तेव मनोभवेन । इ. पा.

प्रयुक्तेति ॥ यत् यस्मात्कारणात् [ प्रयुक्तपाणिग्रहणं ] प्रयुक्तं पाणिग्रहणं यस्य तत्तथोक्तम् । अन्यत् लौकिकम् । वधूश्च वरश्च वधूवरम् । समाहारे द्वन्द्वैकवद्भावः । तदानीं पाणिग्रहणकाले अनयोः उमाशिवयोः सांनिध्ययोगात् संनिधिभावात् अग्र्याम् उत्तमां कान्तिं शोभां पुष्यति पुष्णाति । तस्य उभयस्य उमामहेश्वररूपस्य मिथुनस्य श्रीः किं कथ्यते यत्प्रसादादन्यस्य शोभालाभस्तस्य शोभा किमु वक्तव्येत्यर्थः । 'विवाहसमये गौरीशिवौ वधूवरावनुप्रविशेताम्' इत्यागमः ॥

**प्रदक्षिणप्रक्रमणात्कृशानोरुदर्चिषस्तन्मिथुनं चकासे[1] ।**
**मेरोरुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम्[2] ॥ ७९ ॥**

प्रदक्षिणेति ॥ तान्मिथुनम् उदर्चिषः उन्नतज्वालस्य कृशानोः कर्मणः प्रदक्षिणप्रक्रमणात् प्रदक्षिणीकरणात् चकासे । किमिव । मेरोः उपान्तेषु परिसरेषु वर्तमानम् आवर्तमानम् । मेरुं प्रदक्षिणीकुर्वदित्यर्थः । [ अन्योन्यसंसक्तम् ] अन्योन्येन संसक्तं संगतम् । मिथुनस्याप्येतद्विशेषणम् । अहश्च त्रियामा च अहस्त्रियामं रात्रिंदिवम् इव । समाहारे द्वन्द्वैकवद्भावः ॥

**तौ दंपती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।**
**स कारयामास वधूं पुरोधास्तस्मिन्समिद्धार्चिषि लाजमोक्षम् ॥ ८० ॥**

ताविति ॥ स पुरस्तादेव हितं विधत्ते इति पुरोधाः पुरोहितः । [ अन्योन्यसंस्पर्शनिमीलिताक्षौ ] अन्योन्यस्य संस्पर्शेन स्पर्शसुखेन निमीलिताक्षौ तौ जाया च पतिश्च दंपती कर्मभूतौ । जायाशब्दस्य दंभावो निपातितः । वह्निं त्रिः त्रिवारम् । 'द्वित्रिचतुर्भ्यः सुच्' इति सुच् । परिणीय परितो नीत्वा । प्रदक्षिणीकार्येत्यर्थः । नयतेर्द्विकर्मकाल्ल्यप् । समिद्धार्चिषि दीप्तज्वाले तस्मिन् वह्नौ वधूं लाजमोक्षम् लाजविसर्गं कारयामास । 'हृक्रोरन्यतरस्याम्' इति विकल्पादणि कर्तुः कर्मत्वम् ॥

**सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।**
**कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥ ८१ ॥**

सेति ॥ सा वधूः [ गुरूपदेशात् ] गुरोः पुरोधस उपदेशात् [ इष्टगन्धं ] इष्टः घ्राणतर्पण इत्यर्थः गन्धो यस्य तं लाजधूमाञ्जलिं वदनं निनाय । [ कपोलसंसर्पिशिखः ] कपोलसंसर्पिणी शिखा यस्य स तथोक्तः स धूमः तस्याः गौर्याः मुहूर्तकर्णोत्पलतां प्रपेदे । धूमस्य विसृमरत्वान्मुहूर्तग्रहणम् ॥

**तदीषदार्द्रारुणगण्डलेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।**
**वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद्बभूव ॥ ८२ ॥**

---

१ बभासे. २ रिवान्ते.

तदिति ॥ तत् वधूमुखम् आचारधूमग्रहणात् आचारप्राप्तधूमत्वात् [ ईषदार्द्रारुणगण्डलेखम् ] ईषदार्द्रे स्विन्ने अरुणे च गण्डलेखे गण्डस्थले यस्य तत्तथोक्तम् । अक्ष्णोः [ उच्छ्वासिकालाञ्जनरागम् ] उच्छ्वास्युद्गच्छन्कालाञ्जनस्य रागः अञ्जनं यस्य तत्तथोक्तम् [ क्लान्तयवावतंसं ] क्लान्तो यवावतंसो यवाङ्कुरकर्णपूरो यस्य तत्तथाभूतं बभूव । 'लाजाञ्जलिं विसृज्य धूमाग्रं जिघ्रेत्' इति प्रयोगवृत्तिकारः ॥

**वधूं द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति कर्मसाक्षी ।**
**शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥८३॥**

वधूमिति ॥ अथ वधूं द्विजः पुरोधाः प्राह । किमिति । हे **वत्से एष वह्निः तव विवाहं प्रति** । विवाहकर्मणीत्यर्थः । **कर्मसाक्षी** कर्मद्रष्टा । **भर्त्रा शिवेन सह मुक्तविचारया** निर्विचारया **त्वया धर्मचर्या** धर्माचरणं **कार्या** कर्तव्या **इति** । अयं च प्राजापत्यविवाहो द्रष्टव्यः । यथाहाश्वलायनः— 'सह धर्मं चरत इति प्राजापत्यः' इति ॥

**आलोचनान्तं श्रवणे वितत्य पीतं गुरोस्तद्वचनं भवान्या ।**
**निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥८४॥**

आलोचनान्तमिति ॥ भवस्य पत्न्या **भवान्या** । 'इन्द्रवरुणभवशर्वरुद्र०' इत्यादिना ङीष् । आनुगागमश्च । **आलोचनान्तं** नेत्रान्तपर्यन्तम् । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । **श्रवणे** श्रोत्रे **वितत्य** विस्तार्य **तत्** पूर्वोक्तं **गुरोः** याज्ञिकस्य **वचनं** 'सह धर्मं चर' इति वाक्यं [ **निदाघकालोल्बणतापया** ] निदाघकाले ग्रीष्मकाल उल्बणतापयोत्कटसंतापया **पृथिव्या प्रथमम्** आद्यं **माहेन्द्रं** पार्जन्यम् **अम्भः इव पीतम्** । अत्यादरेण शुश्रावेत्यर्थः ॥

**ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।**
**सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥८५॥**

ध्रुवेणेति ॥ प्रियं दर्शनं यस्य कर्मभूतस्य । तेन **प्रियदर्शनेन ध्रुवेण** शाश्वतेन **भर्त्रा** [ **ध्रुवदर्शनाय** ] ध्रुवस्य नक्षत्रविशेषस्य दर्शनाय । 'ध्रुवो भभेदे क्लीबं तु निश्चिते शाश्वते त्रिषु ।' इत्यमरः । **प्रयुज्यमाना** दृश्यतामिति प्रेर्यमाणा **ह्रीसन्नकण्ठी** ह्रिया हीनस्वरा **सा** वधूः **कथमपि आननमुन्नमय्य दृष्ट इत्युवाच** ॥

**इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।**
**प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥८६॥**

---

१ गिरिः. २ पूर्व. ३ श्रवणौ. ४ विधृत्य, विवृत्य. ५ भेदयेव, नमयेव. ६ कण्ठा.

इत्थमिति ॥ इत्थम् अनेन प्रकारेण । 'इदमस्थमुः' इति थमुप्रत्ययः । **विधिज्ञेन** विवाहप्रयोगज्ञेन । शास्त्रज्ञेनेत्यर्थः । **पुरोहितेन** हैमवतेन **प्रयुक्तपाणिग्रहणोपचारौ** कृतविवाहकर्माणौ **प्रजानां पितरौ तौ** उमामहेश्वरौ **पद्मासनस्थाय** पद्मासनोपविष्टाय पितॄणां पित्रे **पितामहाय** ब्रह्मणे । 'पितामहो विरिञ्चौ स्यात्तातस्य जनकेऽपि च ।' इति विश्वः । 'पितृव्यमातुलमातामहपितामहाः' इति निपातनात्साधुः । **प्रणेमतुः** नमश्चक्रतुः । पितामहस्य पित्रोरपि पूज्यत्वादिति भावः ॥

**वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि वीरप्रसवा भवेति ।**
**वाचस्पतिः सन्नपि सोऽष्टमूर्तौ त्वाशास्यचिन्तास्तिमितो बभूव ॥ ८७॥**

वधूरिति ॥ **वधूः** कन्या **विधात्रा** ब्रह्मणा । हे **कल्याणि** शोभने । वीरः प्रसवोऽपत्यं यस्याः सा **वीरप्रसवा** वीरसूः **भवेति प्रतिनन्द्यते स्म** । आशिषमुक्तेत्यर्थः । **स** विधाता **वाचस्पतिः** वागीश्वरः **अपि सन्** । कस्कादिषु पाठात् साधुः । **अष्टमूर्तौ** शिवे **तु** [ **आशास्यचिन्तास्तिमितः** ] आशास्यमाकाङ्क्ष्यं तत्र चिन्ता विचारस्तस्यां स्तिमितो मन्दः **बभूव** । तस्य निरीहस्याशास्याभावादाशिषि स्तिमितत्वमित्यर्थः ॥

**क्लृप्तोपचारां चतुरस्रवेदीं तावेत्य पश्चात्कनकासनस्थौ ।**
**जायापती लौकिकमेषणीयमार्द्राक्षतारोपणमन्वभूताम् ॥ ८८ ॥**

क्लृप्तेति ॥ **तौ जायापती** वधूवरौ **पश्चात्** नमस्कारानन्तरं [ **क्लृप्तोपचारां** ] क्लृप्ता रचिता उपचाराः पुष्परचनादयो यस्यां तां **चतुरस्रवेदीमेत्य** प्राप्य **कनकासनस्थौ** सन्तौ **लौकिकं** लोके विदितम् । आचारप्राप्तमित्यर्थः । अत एव **एषणीयम्** आशास्यम् । तथा हि । लौकिकाचारं मनसापि न लङ्घयेत् इति शास्त्रादवश्यकर्तव्यमित्यर्थः । इषेरिच्छार्थादनीयर्प्रत्ययः । **आर्द्राक्षतारोपणं अन्वभूताम्** ॥

**पत्रान्तलग्नैर्जलबिन्दुजालैराकृष्टमुक्ताफलजालशोभम् ।**
**तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥ ८९ ॥**

पत्रान्तेति ॥ **लक्ष्मीः** श्रीदेवी [ **पत्रान्तलग्नैः** ] पत्रान्तेषु दलप्रान्तेषु लग्नैः **जलबिन्दुजालैः** [ **आकृष्टमुक्ताफलजालशोभम्** ] आकृष्टा आहृता मुक्ताफलजालेन प्रान्तलम्बिना मुक्ताकलापेन या शोभा सा येन तत्तथोक्तम् । [ **आयतनालदण्डम्** ] आयतं दीर्घं नालमेव दण्डो यस्य तत् [ **कमलातपत्रं** ] कमलमेवातपत्रं तत् **तयोः उपरि आधत्त** दधौ ॥

**द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।**
**संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥ ९० ॥**

---

१ मूर्तावाशास्य. २ चतुरन्त. ३ एषिनव्यम्. ४ लम्बैः. ५ वृन्दैः, वर्षैः. ६ आकृष्ट. ७ भक्ति.

द्विधेति ॥ अथ **सरस्वती** वाग्देवी च **द्विधा** संस्कृतप्राकृतरूपेण द्वैविध्येन **प्रयुक्तेन** उच्चारितेन **वाङ्मयेन** शब्दजालेन **तन्मिथुनं नुनाव** तुष्टाव । 'णु स्तुतौ' इति धातोर्लिट् । केन कमित्याह–संस्कारेति । [ **संस्कारपूतेन** ] संस्कारेण शास्त्रव्युत्पत्त्या पूतेन प्रकृतिप्रत्ययविभागशुद्धेन । संस्कृतेनेत्यर्थः । **वरेण्यं** वरणीयम् । श्लाघ्यमित्यर्थः । वृणोतेरौणादिक एन्यप्रत्ययः । **वरं** वोढारं शिवम् । [ **सुखग्राह्यनिबन्धनेन** ] सुखेन ग्राह्यं सुबोधं निबन्धनं रचना यस्य तेन वाङ्मयेन । प्राकृतभाषयेत्यर्थः । वधूम् नुनावेत्यनेन संबन्धः ॥

**तौ संधिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।**
**अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥ ९१ ॥**

ताविति ॥ **तौ** दंपती **संधिषु** मुखादिनिर्वहणान्तेषु पञ्चसंधिषु । तदुक्तं दशरूपके—'मुखं प्रतिमुखं गर्भः सावमर्शोपसंहृतिः ।' इति । **व्यञ्जितवृत्तिभेदं** स्फुटीकृतकौशिक्यादिवृत्तिविशेषम् । रसानुगुण्येनेति शेषः । तदुक्तं भूपालेन—'कौशिकी स्यात्तु शृङ्गारे रसे वीरे तु सात्वती । रौद्रबीभत्सयोर्वृत्तिर्नियतारभटी पुनः । शृङ्गारादिषु आवज्ञे रसेष्विष्टा तु भारती ॥' तथा 'कौशिक्यारभटी चैव सात्वती भारती तथा । चतस्रो वृत्तयो ज्ञेयास्तासु नाट्यं प्रतिष्ठितम्' इति । **रसान्तरेषु** शृङ्गारादिरसभेदेषु । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । 'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतशान्ताख्या रसाः पूर्वैरुदाहृताः' इति । **प्रतिबद्धरागं** प्रति नियमेन प्रवर्तितो वसन्तललितादिरागो यस्मिंस्तत् । यस्मिन्रसे यो रागो विहितस्तदनुसारेण प्रयुक्तरागमित्यर्थः । यथाह कोहलः—'रौद्रेऽद्भुते तथा वीरे पुंरागेण प्रगीयते । शृङ्गारहास्यकरुणाः स्त्रीरागेण प्रकीर्तिताः । भयानके च बीभत्से शान्ते गेयो नपुंसके ॥' इति । **ललिताङ्गहारं** मधुराङ्गविक्षेपम् । अङ्गहारोऽङ्गविक्षेपः' इत्यमरः । आदौ भवम् **आद्यम्** । रूपकान्तरप्रकृतिभूतमित्यर्थः । तदुक्तम्–'आहुः प्रकरणादीनां नाटकं प्रकृतिं बुधाः' इति । **अप्सरसाम्** उर्वश्यादीनां [ **प्रयोगम्** ] प्रयुज्यत इति प्रयोगो रूपकम् । नाटकमित्यर्थः । आद्यमिति विशेषणात् । तं **मुहूर्तमपश्यतां** दृष्टवन्तौ । 'पाघ्राध्मास्था०' इत्यादिना दृशेः पश्यादेशः ॥

**देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य ।**
**शापावसाने प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ ९२ ॥***

---

१ दृष्टा. २ सानप्रति०. ३ प्रतिलब्ध.

* ९२ श्लोकानन्तरं त्रय एते क्षेपका दृश्यन्ते—

अवाप्य रूपं हरदृष्टिपूतं देव्याः समीपे प्रणिपत्य रुद्रम् ।
अनङ्ग ऊर्ध्वं न मुखं निनाय त्रासेन देवैः कृतपाणिसंज्ञः ॥
उत्तिष्ठ वत्सेति हरेण चोक्तस्त्यक्त्वा भयं तस्य पुरः प्रतस्थे ।
भार्यामतः पश्यति माधवं च प्रोत्फुल्लमुखं चूतशरं वहन्तम् ॥
पूर्वं यथा देवपतेर्नियोगं मूर्ध्ना वहन्नाशु तमिन्द्रमेव ।
प्राप्तः पुनर्यत्र गजेन्द्रगामी प्रोज्झितमानो नवयौवनेन ॥

देवा इति ॥ **देवाः** इन्द्रादयः **तदन्ते** तस्य प्रयोगदर्शनस्यान्तेऽवसाने **ऊढभार्यं** परिणीतदारं **हरं [ किरीटबद्धाञ्जलयः ]** किरीटेषु बद्धा अञ्जलयो येषां ते तथोक्ताः सन्तः । **निपत्य** प्रणम्य **शापावसाने प्रतिपन्नमूर्तेः** लब्धशरीरस्य । 'परिणेष्यति पार्वतीं यदा' ( ४।४२ ) इत्यादिना शापस्य पार्वतीपरिणयान्तत्वादित्यर्थः । **पञ्चशरस्य** कामस्य कर्तुः **सेवां ययाचिरे** । पुनः समासादितशरीरस्य तस्य सेवा स्वीक्रियतामिति प्रार्थयामासुरित्यर्थः । 'दुह्याच्पच्—' इत्यादिना द्विकर्मकत्वम् ॥

**तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।**
**काल[1]प्रयुक्ता खलु कार्यविद्भि[2]र्विज्ञापना भर्तृषु सिद्धिमेति ॥ ९३ ॥***

तस्येति ॥ **विमन्युः** विगतक्रोधः **भगवान्** ईश्वरः **आत्मन्यपि तस्य** कामस्य **सायकानां व्यापारमनुमेने** । तथा हि । **कार्यविद्भिः** कार्यज्ञैः । अथ वा कालविद्भिः अवसरज्ञैः । [ **कालप्रयुक्ता** ] काले योग्यावसरे प्रयुक्ता अनुष्ठिता **भर्तृषु** स्वामिषु विषये **विज्ञापना सिद्धिमेति खलु** । सफला भवतीत्यर्थः । अयमेवास्य स्मरसेवास्वीकारो यदात्मन्यपि तत्सायकव्यापारमङ्गीकृतवानिति ॥

**अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य**
**क्षितिधरपतिकन्यामाददानः करेण ।**
**कनककलशयुक्तं भक्ति[3]शोभासनाथं**
**क्षितिविरचितशय्यं कौतुकागारमागात् ॥ ९४ ॥**

अथेति ॥ **अथ इन्दुमौलिः** ईश्वरः **तान् विबुधगणान् विसृज्य क्षितिधरपतिकन्यां** पार्वतीं **करेणाददानः कनककलशयुक्तं** मङ्गलार्थमन्तर्निहितहेममयपूर्णकुम्भं [ **भक्तिशोभासनाथं** ] भक्तयः पुष्पादिरचनास्तासां शोभया सनाथम् । सहितमित्यर्थः । **क्षितिविरचितशय्यं** क्षितौ विरचिता स्थण्डिले कल्पिता शय्या तल्पं यस्मिंस्तत्तथोक्तं **कौतुकागारम् आगात्** शय्यागृहं जगाम । अत्राश्वलायनः— 'अत ऊर्ध्वमक्षारालवणाशिनावधःशायिनौ ब्रह्मचारिणौ स्याताम्' इति । अत ऊर्ध्वं विवाहादूर्ध्वम् । आ त्रिरात्रादिति शेषः । 'त्रिरात्रं द्वादशरात्रं' वा इति वचनात् । तथा कामशास्त्रेऽपि—'अथ परिणयरात्रौ प्रक्रमेनैव किंचित्तिसृषु च रजनीषु स्तब्धभावा दुनोति। त्रिदिनमिह न भिन्द्याद्ब्रह्मचर्यं न चास्या हृदयमननुरुध्य स्वेच्छया नर्म कुर्यात् ॥' इति ॥

---

1 काले. 2 कालविद्भिः. 3 रक्षा–रथ्या–भक्ति. रक्षाशक्ति.
* ९३-९४ श्लोकयोर्मध्येऽयं क्षेपको लभ्यते–

देवेद्यासंपादितचारुमूर्तिस्तस्य संसदि प्रादुरभूत्स कामः ।
लक्ष्यीकृतं शंकरमेव भूयोऽविध्यच्छरैः पुष्पमयैरमोघैः ॥

नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्कृताक्षेपमीशः ।
अपि शयनसखीभ्यो दत्तवाचं कथंचि-
त्प्रमथमुखविकारैर्हासयामास गूढम् ॥ ९५ ॥

नवेति ॥ तत्र कौतुकागारे ईशः ईश्वरः [ **नवपरिणयलज्जाभूषणां** ] नवपरिणयेन नवोद्वाहेन या लज्जा सा भूषणं यस्यास्तामत एव [ **तत्कृताक्षेपं** ] तेनेश्वरेण कृताक्षेपं कृताकर्षणम् । उन्नमितमिति यावत् । **वदनमपहरन्तीं** साचीकुर्वतीम् । अयं लज्जानुभावः । अनुभावान्तरमाह–**शयनसखीभ्यः अपि** शयने सहशायिनीभ्यः नर्मसहचरीभ्योऽपीत्यर्थः । **कथंचित्** कृच्छ्रेण **दत्तवाचं** दत्तोत्तरां **गौरीं** [ **प्रमथमुखविकारैः** ] प्रमथा भृङ्गिरिटिप्रभृतयो हास्यरसाधिदेवताः पशुपतेः पारिषदाः । यथाह भरतः–'शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः' इति । 'प्रमथाः स्युः पारिषदाः' इत्यमरः । तेषां मुखविकारैर्मुखविकृतचेष्टितैः **गूढम्** अप्रकाशं **हासयामास** हासाद्युपायैर्लज्जामपाकर्तुं प्रवृत्त इत्यर्थः । यथाह गोनर्दः—'हासेन मधुना नर्मवचसा लज्जितां प्रियाम् । विलुप्तलज्जां कुर्वीत निपुणैश्च सखीजनैः ॥' इति ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया संजीवनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ कुमारसंभवे महाकाव्ये उमापरिणयो नाम सप्तमः सर्गः ॥

---

१ कृतोत्क्षेपं. २ प्रथम.

# अष्टमः सर्गः ।

अथ शृङ्गारमुभयोर्वर्णयन्नागतः कविः ।
कुमारसंभवफले सर्गेऽस्मिन्नाह संप्रति ॥
सोऽपि संक्षिप्तसंपन्नसंयुक्तश्च समृद्धिमान् ।
इति भेदाच्चतुर्धोक्तश्चतुर्णां च वियोगिनाम् ॥
तत्रावस्थाप्रभेदेन शृङ्गारे नायिका त्रिधा ।
मुग्धा मध्या प्रगल्भा च तत्र ह्रीसाध्वसाविलाम् ॥
मुग्धावस्थां समाश्रित्य देव्याः प्रथमसंगमे ।
आदावेकादशश्लोकाख्यातेऽपूर्वानुरागिणोः ॥
प्रथमं नाम शृङ्गारं तयोः कथितवान्कविः ।
चुम्बनेष्वधरेत्यत्र लक्षणं त्वस्य वक्ष्यते ॥

**पाणिपीडनविधेरनन्तरं शैलराजदुहितुर्हरं प्रति ।**
**भावसाध्वसपरिग्रहादभूत्कामदोहदसुखं मनोहरम्[१] ॥ १ ॥**

पाणीति ॥ **पाणिपीडनविधेः अनन्तरं** पाणिग्रहणानन्तरम् । विधेरिति पञ्चमी षष्ठी च । उभयथाप्यनुशासनसंभवादित्युक्तं प्राक् । **शैलराजदुहितुः** पार्वत्याः कर्त्र्याः **हरं प्रति भावसाध्वसपरिग्रहात् मनोहरं** चित्ताकर्षकं कामदोहदम् । कामसंवर्धकमित्यर्थः । 'तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात् ।' इति शब्दार्णवे । तच्च तत्सुखं **कामदोहदसुखं अभूत्** । हरस्येति शेषः । नायिकानायकयोः अन्योन्यानुभावदर्शनात्सुखमाविर्भवति । तच्च मदनोद्दीपकमिति रसविदां स्थितिः । तथा च हरस्य गौर्यां नवोढायां स्वगोचरभावप्रयुक्तसाध्वसदर्शनात्सुखमाविर्भवति । तच्च मदनाकारं प्रादुर्बभूवेत्यर्थः । तत्र रसभावस्थायिनः कार्यमनुभावः । तदुक्तं—'रसा गच्छन्ति संस्थानं यत्कार्यमुपलक्ष्यते । सोऽनुभावः' इति ॥

उक्तं भावसाध्वसम् । तस्य सुखमयत्वं च वर्णयति—

**व्याहृता प्रतिवचो न संदधे गन्तुमैच्छदवलम्बितांशुका ।**
**सेवते स्म शयनं पराङ्मुखी सा तथाऽपि रतये पिनाकिनः ॥ २ ॥**

व्याहृतेति ॥ **सा** पार्वती **व्याहृता** यत्किंचिदभिहिता सती **प्रतिवचः** प्रत्युत्तरं **न संदधे** न ददावित्यर्थः । **अवलम्बितांशुका** गृहीतवस्त्रा सती **गन्तुं** उपसर्प्तुं **ऐच्छत्** इच्छति स्म । इषिधातोर्लङ् । 'इषुगमियमां छः' इति छकारः । **पराङ्मुखी** सती **शयनं सेवते स्म** । अनभिमुखमशयिष्टेत्यर्थः । **तथापि** । इत्थं साध्व-

१ मनोहरं वपुः.

सात्प्रतिकूलचेष्टितापीत्यर्थः । पिनाकिनः शिवस्य रतये सुखाय । बभूवेति शेषः। प्रातिकूल्यमपि तस्यानन्दकरमभूदित्यर्थः । एतेन नवोढाया देव्या मौग्ध्याद्विजितं तन्मनस्त्वमवसेयम् ॥

कैतवेन शयिते[1] कुतूहलात्पार्वती प्रतिमुखं निपातितम् ।
चक्षुरुन्मिषति सस्मितं प्रिये विद्युदाहतमिव[2] न्यमीलयत् ॥ ३ ॥

कैतवेनेति ॥ प्रिये भर्तरि कुतूहलात् । एषा किं करिष्यतीति बुभुत्सयेत्यर्थः । कैतवेन कपटेन शयिते सुप्ते सति पार्वती कर्त्री प्रतिमुखं यथा तथा निपातितम् । प्रियस्वापपरीक्षार्थं तदभिमुखं प्रवर्तितमित्यर्थः । चक्षुः स्वदृष्टिं सस्मितं उन्मिषति । पुनः प्रिये सहासं पश्यतीत्यर्थः । विद्युदाहतं विद्युता प्रतिहतं इव न्यमीलयत् । साध्वसादिति भावः । एतेन किंचित्साध्वसस्यापचयो व्यज्यते ॥

नाभिदेशनिहितः सकम्पया[3] शंकरस्य रुरुधे तया करः ।
तद्दुकूलमथ चाभवत्स्वयं[4] दूरमुच्छ्वसितनीविबन्धनम् ॥ ४ ॥

नाभीति ॥ नाभिदेशनिहितः । नीवीमोचनायेति शेषः । शंकरस्य करः सकम्पया वेपथुमत्या । प्रियकरस्पर्शादुत्पन्नसात्त्विकभावयेत्यर्थः । तया पार्वत्या रुरुधे निवारितः । अथ च । तथापीत्यर्थः । तद्दुकूलं स्वयं स्वत एव दूरं अत्यन्तं [ उच्छ्वसितनीविबन्धनं ] उच्छ्वसितं स्रस्तं नीविबन्धनं नीविग्रन्थिर्यस्य तत्तथाभूतं अभवत् । रतिपारवश्यादिति भावः ॥

एवमालि निगृहीतसाध्वसं शंकरो रहसि सेव्यतामिति ।
सा सखीभिरुपदिष्टमाकुला नास्मरत्प्रमुखवर्तिनि प्रिये ॥ ५ ॥

एवमिति ॥ हे आलि सखि पार्वति रहसि शंकरः एवम् । स्वोपदिष्टप्रकारेणेत्यर्थः । निगृहीतसाध्वसं निरस्तभयं यथा तथा सेव्यतां इति सखीभिः उपदिष्टं उक्तं वचनं सा पार्वती प्रिये शंकरे प्रमुखवर्तिनि सति आकुला साध्वसविह्वला सती न अस्मरत् । न स्मृतवतीत्यर्थः । स हि भयपरिप्लुते चेतसि दृष्टतरोऽप्युपदेशः संसारमाधत्त इति भावः ॥

अप्यवस्तुनि कथाप्रवृत्तये प्रश्नतत्परमनङ्गशासनम् ।
वीक्षितेन परिगृह्य[5] पार्वती मूर्धकम्पमयमुत्तरं ददौ ॥ ६ ॥

अपीति ॥ कथाप्रवृत्तये संलापप्रवर्तनाय अवस्तुनि अप्रस्तुतार्थे अपि प्रश्नतत्परम् । यत्किंचित्पृच्छन्तमित्यर्थः । अनङ्गशासनं ईश्वरं पार्वती वीक्षितेन न तु वाचेत्यर्थः । परिगृह्य अङ्गीकृत्य मूर्धकम्पमयं शिरःकम्पस्वरूपम् । स्वार्थे मयट् । उत्तरं ददौ । न तु वाङ्मयं, साध्वसादिति भावः । विहृतनामा लज्जानुभाव उक्तः । तदुक्तं—'ईर्ष्यामानातिलज्जाभ्यां न दत्तं योग्यमुत्तरम् । क्रियया व्यज्यते यत्र विहृतं तदुदीरितम् ॥' इति ॥

---

१ शयने. २ विद्युताऽऽहतं; विद्युतेव निहतं. ३ सशङ्कया. ४ तन्नितम्बमभवत्तदा; तन्नितम्बमथ चाभवत्. ५ परिवीक्ष्य.

पुनस्तमेवाह—

शूलिनः करतलद्वयेन सा संनिरुध्य नयने हृतांशुका ।
तस्य पश्यति ललाटलोचने मोघयत्नविधुरा रहस्यभूत् ॥ ७ ॥

शूलिन इति ॥ सा पार्वती **रहसि हृतांशुका** प्रियेणाकृष्टवस्त्रा सती **करतलद्वयेन** । स्वकीयेनेत्यर्थः । **शूलिनः** हरस्य **नयने** नेत्रद्वयं **संनिरुध्य** संछाद्य **तस्य शूलिनः ललाटलोचने** तृतीयेऽक्षिण **पश्यति** सति [ **मोघयत्नविधुरा** ] मोघयत्ना खिलप्रयासात एव विधुरा **अभूत्** । तृतीयकराभावादिति भावः । एतेन किंचिद्धार्ष्ट्यादयो व्यज्यन्ते ॥

चुम्बनेष्वधरदानवर्जितं सन्नहस्तमदयोपगूहने ।
क्लिष्टमन्मथमपि प्रियं प्रभोर्दुर्लभप्रतिकृतं वधूरतम् ॥ ८ ॥

चुम्बनेष्विति ॥ **चुम्बनेषु अधरदानवर्जितं** ओष्ठार्पणरहितं **अदयोपगूहने** निर्दयालिङ्गने [ **सन्नहस्तं** ] सन्नौ स्तब्धौ हस्तौ करौ यस्मिंस्तत्तथोक्तम् । तथा **दुर्लभप्रतिकृतम्** । प्रगल्भत्वान्नखदन्तताडनाद्यकृतप्रयत्नमित्यर्थः । अत एव **क्लिष्टमन्मथं** लज्जयोपरुद्धमदनं **अपि** वध्वा नवोढाया रतं **वधूरतं प्रभोः** ईश्वरस्य **प्रियम्** । अभूदिति शेषः । ' वधूः स्नुषानवोढास्त्रीभार्यास्पृक्काङ्गनासु च ' इति विश्वः । अयं लज्जासाध्वसाभ्यां संकुचितोपचारत्वात्संक्लिष्टसंभोगः । तदुक्तं भूपालेन—' युवानो यत्र संक्षिप्तसाध्वसव्रीडितादिभिः । उपचारान्निषेवन्ते स संक्लिष्ट इतीरितः ॥ ' इति ॥

यन्मुखग्रहणमक्षताधरं दत्तमव्रणपदं नखं च यत् ।
यद्रतं च सदयं प्रियस्य तत्पार्वती विषहते स्म नेतरत् ॥ ९ ॥

यदिति ॥ **पार्वती प्रियस्य** संबन्धि [ **अक्षताधरं** ] अक्षतोऽखण्डितोऽधरो यस्मिंस्तत्तथोक्तं **यत् मुखग्रहणं** मुखचुम्बनम् । **अव्रणपदं** लक्ष्मरहितम् । ' पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ' इत्यमरः । **दत्तं यत् च नखं** नखकर्म । **यत् सदयं रतं च तत्** सर्वं **विषहते** सहते **स्म** । **न इतरत्** विपरीतम् । प्रचण्डमिति यावत् । तच्चुम्बनं नखं सुरतं वा न सहते स्म । नवोढात्वादिति हृदयम् । तदुक्तं रतिरहस्ये—'नात्यन्तमानुलोम्येन न चातिप्रतिलोमतः । सिद्धिं गच्छन्ति कन्यासु तस्मान्मध्येन साधयेत् ' इति ॥

रात्रिवृत्तमनुयोक्तुमुद्यतं सा विभातसमये सखीजनम् ।
नाकरोदपकुतूहलं ह्रिया शंसितुं च हृदयेन तत्वरे ॥ १० ॥

रात्रीति ॥ **सा** पार्वती **विभातसमये** प्रभातकाले **रात्रिवृत्तम्** । सुरतवृत्तान्तमित्यर्थः । **अनुयोक्तुं** प्रष्टुम् । ' प्रश्नोऽनुयोगः पृच्छा च ' इत्यमरः । **उद्यतं** प्रवृत्तं

१ खिन्नहस्तसदयोपगूहनम्. २ दानम्. ३ नखस्य. ४ हरस्य. ५ प्रभात. ६ तु.

सखीजनं ह्रिया लज्जया अपकुतूहलं निराकाङ्क्षं न अकरोत् । न किंचिदाचष्ट इत्यर्थः । हृदयेन हृदा च शंसितुं तत्वरे त्वरिताभूत् । औत्सुक्यादिति भावः । त्वरासंभ्रमादीनामनुभावत्वादिति ॥

दर्पणे च परिभोगदर्शिनी पृष्ठतः प्रणयिनो निषेदुषः ।
प्रेक्ष्य बिम्बमनु बिम्बमात्मनः कानि कानि न चकार लज्जया ११

दर्पण इति ॥ [च] किंचेति चार्थः । दर्पणे मुकुरे परिभोगो नखक्षतादिसंभोगचिह्नं पश्यतीति परिभोगदर्शिनी सा पार्वती पृष्ठतः । पश्चाद्भागे निषेदुषः स्थितवतः । सदेः क्वसुः । प्रणयिनः प्रियस्य हरस्य बिम्बं प्रतिबिम्बम् । दर्पणे संक्रान्तमित्यर्थः । आत्मनः स्वस्य बिम्बं अनु । प्रतिबिम्बस्य पृष्ठत इत्यर्थः । 'अनुर्लक्षणे' इति कर्मप्रवचनीयत्वात् द्वितीया । प्रेक्ष्य लज्जया । स्वचापलप्राकट्यकृतयेत्यर्थः । कानि कानि यानि यानि भेदवाच्यानि । अङ्गसंवरणादिचेष्टितानीत्यर्थः । उक्तं च—'लज्जानुभावेन साचीकृता वर्णवैवर्ण्याधोमुखादिकृत्' इति । न चकार ॥

नीलकण्ठपरिभुक्तयौवनां तां विलोक्य जननी समाश्वसत् ।
भर्तृवल्लभतया हि मानसीं मातुरस्यति शुचं वधूजनः ॥ १२ ॥

नीलकण्ठेति ॥ [नीलकण्ठपरिभुक्तयौवनां] नीलकण्ठेन परिभुक्तं यौवनं यस्याः सा तां तथोक्ताम् । प्रियेण भुक्तयौवनामित्यर्थः । तां पार्वतीं विलोक्य जननी मेना समाश्वसत् । संतुतोषेत्यर्थः । श्वासिधातोर्लङ् । 'अङ्गार्ग्यगालवयोः' इति विकल्पादडागमः । तथा हि । वधूजनः भर्तृवल्लभतया पतिवात्सल्येन मातुः मानसीं मनोभवां शुचं शोकं अस्यति निरस्यति हि । विपर्ययाद्विपर्ययश्चेत्यर्थादवसेयम् । सामान्येनाविशेष समर्थनरूपोऽर्थान्तरन्यासः ॥

संप्रति देव्या मुग्धावस्थातो मध्यमावस्थाप्राप्तिमाह—

वासराणि कतिचित्कथंचन स्थाणुना पदमकार्यत प्रिया ।
ज्ञातमन्मथरसा शनैः शनैः सा मुमोच रतिदुःखशीलताम्॥१३॥

वासराणीति ॥ स्थाणुना शंभुना कर्त्रा प्रिया पार्वती कर्मभूता कतिचित् वासराणि । कैश्चिदहोभिरित्यर्थः । अत्यन्तसंयोगे द्वितीया । कथंचन कृच्छ्रेण पदं पदप्रक्षेपं अकार्यत कारिता । सुरतकर्मणीति शेषः । करोतेर्ण्यन्तात्कर्मणि लुङ् । 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मत्वं 'ण्यन्ते कर्तुश्च कर्मणः' इत्यभिहितत्वं च । सा कृतपदा पार्वती ज्ञातमन्मथरसा अनुभूतसुरतसुखास्वादा सती । 'आस्वादेऽपि रसं प्राहुः' इति शब्दानुशासने। शनैः शनैः क्रमेण [रतिदुःखशीलतां] रतौ रते दुःखशीलतां प्रतिकूलस्वभावतां मुमोच । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । मध्यमावस्थां प्रापेत्यर्थः ॥

---

१ मुपबिम्बम्. २ अपि. ३ समाश्वसीत्. ४ रतमकारि चानया. ५ रत.

तुल्यलज्जास्मरत्वमेवाह—

**सस्वजे प्रियमुरोनिपीडिता प्रार्थितं मुखमनेन नाहरत् ।**
**मेखलाप्रणयलोलतां गतं हस्तमस्य शिथिलं रुरोध सा ॥ १४ ॥**

सस्वज इति ॥ **सा** पार्वती **उरोनिपीडिता** उरसि गाढमाश्लिष्टा सती **प्रियं सस्वजे** । न तु निष्पन्दमास्तेत्यर्थः । अनेन स्मरातिशयः सूचितः । **अनेन** प्रियेण **प्रार्थितं** चुम्बनार्थं याचितम् । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः' इति केशवः । **मुखं न अहरत्** । [ **मेखलाप्रणयलोलतां** ] मेखलायां प्रणयः परिचयः । 'प्रणयः स्यात्परिचये याच्ञायां सौहृदेऽपि च' इति यादवः । तत्र लोलतां चञ्चलतां **गतं अस्य** प्रियस्य **हस्तं शिथिलं रुरोध** न्यवारयत् । न तु निर्भरमिति भावः । अत्र सहनप्रतीकाराभ्यां तुल्यलज्जास्मरत्वं व्यज्यते ॥

अथ देव्याः प्रगल्भावस्थां दर्शयितुं तयोः समानरागित्वं तावदाह—

**भावसूचितमदृष्टविप्रियं चाटुमत्क्षणवियोगकातरम् ।**[2]
**कैश्चिदेव दिवसैरभूत्तयोः प्रेम रूढमितरेतराश्रयम् ॥ १५ ॥**

भावेति ॥ **तयोः** शिवयोः **कैश्चित्** कतिभिश्चित् **एव दिवसैः** । **भावसूचितं** भावैश्चेष्टाभिः कटाक्षनिक्षेपादिभिः संजातं [ **अदृष्टविप्रियं** ] अदृष्टं विप्रियमप्रियाचरणं यत्र तत्तथोक्तम् । चाटूनि प्रियोक्तयो यस्मिन्सन्ति तत् **चाटुमत्** । भूमार्थे मतुप् । [ **क्षणवियोगकातरं** ] क्षणवियोगात्क्षणमात्रविरहादपि कातरं भीरु **इतरेतराश्रयं** अन्योन्यविषयं **प्रेम** । प्रेमपदाभिलप्याङ्कुरावस्था भवतीत्यर्थः । **रूढं अभूत्** । क्रमेणानुरागपदाभिलाषं प्राप्तमित्यर्थः । तदेतत्सर्वं स्फुटीकृतं भूपालेन—'अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियम्' इत्यादिना । एका रतिरेव स्थायीभूता रसीभवति । तस्याश्चाङ्कुरावस्थाभेदोपपत्तौ सा प्रेमादिपदैरभिलप्यत इत्यर्थः । 'स प्रेमा भेदरहितं यूनोर्यद्भावबन्धनम् । राग एव स्वसंवेद्यदशां प्राप्याप्रकाशितः । यावदाश्रयवृत्तिश्चेदनुरागः' इति मानादिलक्षणं विस्तरभयान्न लिख्यत इत्याकर एव द्रष्टव्यम् ॥

**तं यथाऽऽत्मसदृशं वरं वधूरन्वरज्यत वरस्तथैव ताम् ।**
**सागरादनपगा हि जाह्नवी सोऽपि तन्मुखरसैकनिर्वृतिः ॥ १६ ॥**

तमिति ॥ **वधूः आत्मसदृशं** स्वानुरूपं **तं वरं** वोढारं प्रति **यथा अन्वरज्यत** अनुरक्ताभूत् । रञ्जेर्दैवादिकात्कर्तरि लकारः । स्वरितत्वादात्मनेपदम् । **तथैव वरः** अपि वोढाप्यात्मनः सदृक्तामात्मसदृशम् । 'त्यदादिषु दृशोऽनालोचने कञ्च' इति चकारात् क्विप्प्रत्ययः । **तां** वधूं प्रत्यन्वरज्यत । वध्वामनुरक्तोऽभूदित्यर्थः । 'गत्यर्थाकर्मक—' इत्यादिना सकर्मकत्वम् । दृष्टान्तमाह—**जाह्नवी** गङ्गा **सागरात्** नापगच्छतीति **अनपगा** अनपेता **हि** । **सोऽपि** सागरः [ **तन्मुखरसैकनिर्वृतिः** ] तस्या

१ निपीडितम्; निपीडनम्. २ दार्ढ्यभावक्षणः चाटु तत्क्षण. ३ तदा तयोः; तथा तयोः. ४ गूढम्. ५ वृत्तिभाक्.

जाह्नव्या मुखरसेनाग्रसलिलेन वक्त्रास्वादेनैका मुख्या निर्वृतिरानन्दो यस्य स तथोक्तः। अत्र दृष्टान्तालंकारः। लक्षणं तूक्तम्। इत्थं समानानुरागकथनाद्रसाभासत्वं निरस्तम्। तदुक्तम्—'योषिता बहुसक्तिश्चेद्रसाभासः स उच्यते'। कविनाप्युक्तं मालविकायाम्—अनातुरोत्कण्ठितयोः प्रसिध्यता समागमेनापि रतिर्न मां प्रति। परस्परप्राप्तिनिराशयोर्वरं शरीरनाशोऽपि समानरागयोः॥' इति॥

अथ देव्याः प्रगल्भावस्थामाश्रित्य संभोगमाह—

**शिष्यतां निधुवनोपदेशिनः शंकरस्य रहसि प्रपन्नया।**
**शिक्षितं युवतिनैपुणं तया यत्तदेव गुरुदक्षिणीकृतम्॥ १७॥**

शिष्यतामिति॥ **रहसि** एकान्ते निधुवनमुपदिशतीति **निधुवनोपदेशिनः** सुरतविद्यागुरोः। 'व्यवायो ग्राम्यधर्मो मैथुनं निधुवनं रतम्' इत्यमरः। **शंकरस्य शिष्यतां प्रपन्नया** प्राप्तया **तया** पार्वत्या **यत् युवतिनैपुणं** युवतिजनोचितं नैपुणम्। सुरतकौशलमित्यर्थः। **शिक्षितं** अभ्यस्तम्। आचरितमित्यर्थः। **तदेव गुरुदक्षिणीकृतम्**। यथोपदेशकरणाद्दक्षिणासममभूदित्यर्थः। अनेन कृतप्रतिकृतं सूच्यते॥

**दष्टमुक्तमधरोष्ठमम्बिका वेदनाविधुतहस्तपल्लवा।**
**शीतलेन निरवापयत्क्षणं मौलिचन्द्रशकलेन शूलिनः॥ १८॥**

दष्टेति॥ **अम्बिका** पार्वती दष्टश्चासौ मुक्तश्च तं **दष्टमुक्तम्**। 'पूर्वकाल—' इत्यादिना समासः। **अधरोष्ठं** [ **वेदनाविधुतहस्तपल्लवा** ] वेदनया विधुतौ कम्पितौ हस्तपल्लवौ पाणिपल्लवौ यस्याः सा तथोक्ता सती **शीतलेन शूलिनः मौलिचन्द्रशकलेन क्षणं निरवापयत्**। शीतलोपचारेण निर्व्यथमकरोदिति विश्रम्भोक्तिः। निवातिर्घातोर्ण्यन्तात् 'अर्तिह्री—' इत्यादिना पुगागमः। अत्राधरपीडनात्सुखेऽपि दुःखवदुपचारात्कुट्टिमनामानुभाव उक्तः। तदुक्तम्—'केशाधरादिग्रहणे मोदमानापि मानसे। दुःखितेव बहिः कुप्येत्तत्कुट्टिमम्' इति॥

**चुम्बनादलकचूर्णदूषितं शंकरोऽपि नयनं ललाटजम्।**
**उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने॥ १९॥**

चुम्बनादिति॥ अथ **शंकरः अपि चुम्बनात्** चुम्बनार्थितः [ **अलकचूर्णदूषितं** ] अलकचूर्णेन[1] दूषितमुपहतं **ललाटजं नयनं उच्छ्वसत्कमलगन्धये** विकचारविन्दगन्धधारिणे। 'उपमानाच्च' इतीकारः। [ **पार्वतीवदनगन्धवाहिने** ] पार्वत्या वदनगन्धवाहिने। फूत्कारनाहतायेत्यर्थः। **ददौ**। रजोनिःसारणार्थं तदाभिमुख्येन स्थापितवानित्यर्थः। एतेन देव्याः प्रियवरांवदत्वमुक्तम्। अत्र हरचक्षुष्यलकचूर्णकथनाद्देव्या उपरिभावः सूचितः॥

---

1 तत.

एवमिन्द्रियसुखस्य वर्त्मनः सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमात्रमवसद्वृषध्वजः ॥ २० ॥

एवमिति ॥ **वृषध्वजः** हरः **एवं** उक्तरीत्या [ **इन्द्रियसुखस्य** ] इन्द्रियाणां सुखस्यानुकूलस्य **वर्त्मनः** मार्गस्य । स्त्रीप्रसङ्गस्येत्यर्थः । **सेवनात्** परिभोगात् **अनुगृहीतमन्मथः** पुनरुज्जीवितमदनः सन् । **उमया सह शैलराजभवने** हिमवद्गेहे **मासमात्रं अवसत्** । अत्यन्तसंयोगे द्वितीया । मासमात्रमिति वधूवशीकरणकालक्लृप्तिः प्रदर्शिता ॥

सोऽनुमान्य हिमवन्तमात्मभूरात्मजाविरहदुःखपीडितम् ।
तत्र तत्र विजहार संचरन्नप्रमेयगतिना ककुद्मता ॥ २१ ॥

स इति ॥ **सः आत्मभूः** शिवः [ **आत्मजाविरहदुःखपीडितं** ] आत्मजाया दुहितुर्विरहदुःखेन पीडितं **हिमवन्तं अनुमान्य** अनुमतं कृत्वा **अप्रमेयगतिना** अपरिच्छेद्यगतिना **ककुद्मता** वृषेण **संचरन्** संचरमाणः **तत्र तत्र** नानादेशेषु **विजहार** ॥

मेरुमेत्य मरुदाशुवाहनः पार्वतीस्तनपुरस्कृतः कृती ।
हेमपल्लवविभङ्गसंस्तरामन्वभूत्सुरततत्परः क्षपाम् ॥ २२ ॥

मेरुमिति ॥ **मरुदाशुवाहनः** पवनजवनवाहनः । [ **पार्वतीस्तनपुरस्कृतः** ] पार्वतीस्तनाभ्यां पुरस्कृतः । पार्वत्या पुरोगतयाश्लिष्ट इत्यर्थः । अन्वभूदित्यनेनान्वयः । **कृती** कुशलो हरो **मेरुं एत्य** [ **हेमपल्लवविभङ्गसंस्तरां** ] हेमपल्लवानां विभङ्गाः खण्डास्त एव संस्तरस्तल्पं यस्यां तां तथोक्तां **क्षपां** रात्रिं **सुरततत्परः** सुरतासक्तः सन् **अन्वभूत्** ॥

पद्मनाभवलयाङ्कितारमसु प्राप्तवत्स्वमृतविप्रुषो नवाः ।
मन्दरस्य कटकेषु चावसत्पार्वतीवदनपद्मषट्पदः ॥ २३ ॥

पद्मनाभेति ॥ [ **पार्वतीवदनपद्मषट्पदः** ] पार्वतीवदनपद्मे षट्पदः । प्रियामुखरसास्वादलोल इत्यर्थः । स हरः । [ **पद्मनाभवलयाङ्किताश्मसु** ] पद्मं नाभिर्यस्य स पद्मनाभो विष्णुः । 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्राजिति योगविभागात्समासान्तः । तस्य वलयैरङ्किता अश्मानो येषां तेषु । अमृतमथनसमय इति भावः । तथा **नवाः** प्रत्यग्राः **अमृतविप्रुषः** सुधाबिन्दून् **प्राप्तवत्सु मन्दरस्य** मन्थाचलस्य **कटकेषु** नितम्बेषु **च अवसत्** । एतेन मन्दरस्यानेकाद्भुताधारत्वान्मनोविनोदकत्वमुक्तम् ॥

रावणध्वनितभीतया तया कण्ठसक्तमृदुबाहुबन्धनः ।
एकपिङ्गलगिरौ जगद्गुरुर्निर्विवेश विशदाः शशिप्रभाः ॥ २४ ॥

---

१ चात्मनः. २ मासमेकम्. ३ नुमन्त्र्य. ४ खेदितम्. ५ संपतन्. ६ शुगोक्षकः. ७ पुरस्कृतान्. ८ संस्तरान्. ९ मर्दनक्षमान्. १० चरणा. ११ मान्दरेषु. १२ वारणस्वनित. १३ दृढ.

रावणेति ॥ जगद्गुरुः । [ रावणध्वनितभीतया ] विश्रवसोऽपत्यं रावणो दशकण्ठः । 'तस्यापत्यम्' इत्यण्प्रत्ययः । वृत्तिविषये विश्रवस्शब्दस्य रवणादेशः । रावणस्य ध्वनितात्कैलासोत्पाटनसमयक्ष्वेडिताद्भीतया तया पार्वत्या [ कण्ठसक्तमृदुबाहुबन्धनः ] कण्ठसक्ताभ्यां मृदुबाहुभ्यां बन्धनं यस्य स तथाभूतः । [ एकपिङ्गलगिरौ ] एकनेत्रत्वादेकपिङ्गलः कुबेरस्तस्य गिरौ कैलासे विशदाः निर्मलाः शशिप्रभाः चन्द्रिकाः निर्विवेश बुभुजे । 'निर्वेशो भृतिभोगयोः' इत्यमरः ॥

तस्य जातु मलयस्थलीरतेर्धूतचन्दनलतः प्रियाक्लमम् ।
आचचाम सलवङ्गकेसरश्चाटुकार इव दक्षिणानिलः ॥ २५ ॥

तस्येति ॥ जातु कदाचित् धूतचन्दनलतः कम्पितपटीरशाखः । 'समे शाखालते' इत्यमरः । सह लवङ्गस्य केसरैः सलवङ्गकेसरः । 'लवङ्गं देवकुसुमम्' इत्यमरः । विशेषणाभ्यां शैत्यसौरभ्ये दर्शिते । दक्षिणानिलः मलयमारुतः । चाटुकारः चाटुप्रयोगः । प्रियवाद इति यावत् । भावे घञ् । सः इव [ मलयस्थलीरतेः ] मलयस्थलीषु मलयाचलप्रदेशेषु रतिः सुरतं यस्य तथोक्तस्य । तत्र रममाणस्येत्यर्थः । तस्य शिवस्य प्रियाक्लमं प्रियायाः सुरतश्रमं आचचाम जहार । यथा लोके महानपि श्रम एकेन प्रियवादेनापैति तद्वद्दक्षिणमारुतेनाप्यस्य सकलोऽपि सुरतक्लमो हृत इत्यर्थः ॥

हेमतामरसताडितप्रिया तत्कराम्बुविनिमीलितेक्षणा ।
खे व्यगाहत तरंगिणीमुमा मीनपङ्क्तिपुनरुक्तमेखला ॥ २६ ॥

हेमेति ॥ उमा गौरी [ हेमतामरसताडितप्रिया ] हेमतामरसेन कनककमलेन ताडितः प्रियो यया सा । [ तत्कराम्बुविनिमीलितेक्षणा ] तेनोत्थितस्य प्रियस्य कराम्बुना कराक्षिप्ताम्भसा विनिमीलितेक्षणा मुकुलिताक्षी । [ मीनपङ्क्तिपुनरुक्तमेखला ] मीनपङ्क्त्या पुनरुक्ता द्विगुणिता मेखला यस्याः सा तथाभूता सती खे तरंगिणीं व्यगाहत । तत्र तत्र जलक्रीडामकरोदित्यर्थः ॥

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचनः सस्पृहं सुरवधूभिरीक्षितः ॥ २७ ॥

तामिति ॥ अयुग्मानि लोचनानि यस्य सः अयुग्मलोचनः त्र्यम्बकः । युग्मशब्दो विशेष्यनिघ्नोऽप्यस्ति । 'तास्मिन्युग्मासु संविशेत' 'युग्मान्दैवे यथाशक्ति पित्र्येऽयुग्मांस्तथैव च' इत्यादिप्रयोगदर्शनात् । नन्दने नन्दनोद्याने [ पुलोमतनयालकोचितैः ] पुलोमतनया शची । 'पुलोम्नस्तु शची सुता' इति हरिवंशे । तस्या अलकानामुचितैः पारिजातकुसुमैः तां प्रसाधयन् अलंकुर्वन् चिरं सुरवधूभिः सस्पृहं ईक्षितः । केन वा पुण्येनायं लभ्यत इति साभिलाषं दृष्ट इत्यर्थः । अत्र देवस्यानुकूलनायकत्वं देव्याः स्वाधीनपतिकात्वं चावसेयम् ॥

---

१ रते धूत. २ वनः. ३ सतुषारशीतलः. ४ सा. ५ मेखलाम्. ६ वधूभिरैक्ष्यत; वधूनिरीक्षितः.

**इत्यभौममनुभूय शंकरः पार्थिवं च वनितासखः सुखम् ।**
**लोहितायति कदाचिदातपे गन्धमादनगिरिं न्यवर्तत ॥ २८ ॥**

इतीति ॥ इति इत्थं **शंकरः वनितासखः** सन् । भूमौ भवं भौमम् । न भौमं **अभौमं** दिव्यं पृथिव्यां भवं **पार्थिवं च सुखं अनुभूय कदाचित् आतपे लोहितायति** लोहितवर्णे भवति । अस्तंगते सवितरीत्यर्थः । 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्प्रत्ययः । **गन्धमादनगिरिं न्यवर्तत** । पर्वतमुद्दिश्य निवृत्त इत्यर्थः । उद्देशक्रियां प्रति गिरेः कर्मत्वम् । एतदेवाह भाष्यकारः ॥

**तत्र काञ्चनशिलातलाश्रयो नेत्रगम्यमवलोक्य भास्करम् ।**
**दक्षिणेतरभुजव्यपाश्रयां व्याजहार सहधर्मचारिणीम् ॥ २९ ॥**

तत्रेति ॥ **तत्र** गन्धमादने । [ **काञ्चनशिलातलाश्रयः** ] काञ्चनविकारः काञ्चनं सौवर्णं तच्च तच्छिलातलं तदाश्रयो यस्य स भगवान् **नेत्रगम्यं** सायंतनम् । अर्धादर्शनयोग्यम् । **भास्करं** सूर्यम् । 'दिवाविभा—' इत्यादिना टप्रत्ययः । **अवलोक्य** [ **दक्षिणेतरभुजव्यपाश्रयां** ] दक्षिणेतरभुजः सव्यबाहुर्व्यपाश्रयो यस्यास्ताम् । निजवामभुजमवष्टभ्योपविष्टामित्यर्थः । सह धर्मं चरतीति **सहधर्मचारिणीं** पत्नीं **व्याजहार** जगाद ॥

**पद्मकान्तिमरुणत्रिभागयोः संक्रमय्य तव नेत्रयोरिव ।**
**संक्षये जगदिव प्रजेश्वरः संहरत्यहरसावहर्पतिः ॥ ३० ॥**

पद्मकान्तिमिति ॥ **असौ** अह्नां पतिः **अहर्पतिः** सूर्यः । 'अहरादीनां पत्यादिषूपसंख्यानम्' इति रेफादेशः । **पद्मकान्ति** पद्मशोभाम् । [ **अरुणत्रिभागयोः** ] तृतीयो भागस्त्रिभागः । वृत्तिविषये पूरणार्थत्वं संख्याया इत्युक्तम् । अरुणस्त्रिभागो ययोस्तयोः । अरुणोपान्तयोरिति भाग्यलक्षणोक्तिः । **तव नेत्रयोः संक्रमय्य इव** । तदानीं पद्मानामविकासान्नेत्रयोस्तु विकासाच्चेयमुत्प्रेक्षा । **संक्षये** प्रलयकाले **प्रजेश्वरः** प्रजापतिः **जगत् इव अहः** दिवसं **संहरति** । अस्तं गच्छतीत्यर्थः ॥

**सीकरव्यतिकरं मरीचिभिर्दूरयत्यवनते विवस्वति ।**
**इन्द्रचापपरिवेषशून्यतां निर्झरास्तव पितुर्व्रजन्त्यमी ॥ ३१ ॥**

सीकरेति ॥ विवस्तेजोऽस्यास्तीति विवस्वांस्तस्मिन् **विवस्वति** सूर्ये **मरीचिभिः** सहार्थविवक्षायां तृतीयात एव विनापि सहशब्देन तृतीया । **सीकरव्यतिकरं** पयःकणसंपर्कं **दूरयति** दूरीकुर्वति सति । हे **अवनते** पार्वति । **अमी तव पितुः** भवत्पितुर्हिमवतो **निर्झराः** प्रवाहाः । 'प्रवाहो निर्झरो झरः' इत्यमरः । [ **इन्द्रचापपरिवेष-**

१ दयिता. २ वनम्. ३ व्यगाहत. ४ अरुणान्तभागयोः. ५ संगमय्य. ६ धूनयति. ७ प्रसवितुः. ८ ते.

**शून्यतां** ] इन्द्रचापं नानावर्णप्रभासमूहस्तस्य परिवेषेण परिवेष्टनेन शून्यतां **व्रजन्ति** । अर्ककिरणसंपर्ककृतत्वादिन्द्रचापस्य तन्निवृत्त्या निवृत्तिरित्यर्थः ॥

**दष्टतामरसकेसरत्यजोः[1] क्रन्दतोर्विपरिवृत्तकण्ठयोः[2] ।**
**निघ्नयोः[3] सरसि चक्रवाकयोरल्पमन्तरमनल्पतां गतम् ॥ ३२ ॥**

दष्टेति ॥ [ **दष्टतामरसकेसरत्यजोः** ] दष्टमर्धजग्धं तामरसकेसरं पद्मकिञ्जल्कम् । सुखद्वयेनैकमिति भावः । तत्त्यजत इति तथोक्तयोः **क्रन्दतोः** कूजतोः **विपरिवृत्तकण्ठयोः** परस्परालोकनार्थं वक्रीकृतग्रीवयोरित्यर्थः । **निघ्नयोः** दैवाधीनयोः । ' अधीनो निघ्न आयत्तः' इत्यमरः । [ **चक्रवाकयोः** ] चक्रवाकी च चक्रवाकश्च तयोः । ' पुमान्स्त्रिया ' इत्येकशेषः । **सरसि अल्पं अन्तरं** व्यवधानं **अनल्पतां** आधिक्यं **गतम्** । सरसि वियुज्यमानयोर्महद्व्यवधानमभूदित्यर्थः ॥

**स्थानमाह्निकमपास्य दन्तिनः सल्लकीविटपभङ्गवासितम् ।**
**आविभातचरणाय[4] गृह्णते वारि वारिरुहबद्धषट्पदम् ॥ ३३ ॥**

स्थानमिति ॥ **दन्तिनः** गजाः । अह्नि भवं **आह्निकम्** । ' कालाट्ठञ् ' । **स्थानं अपास्य** विहाय [ **सल्लकीविटपभङ्गवासितं** ] सल्लकी गजप्रिया काचिल्लता । ' सल्लकी स्याद्गजप्रिया ' इति हलायुधः । तस्या विटपभङ्गैः पल्लवखण्डैर्वासितं सुरभितं [ **वारिरुहबद्धषट्पदं** ] वारिरुहेषु बद्धाः संयताः षट्पदा यस्मिंस्तत् **वारि** जलं [ **आविभातचरणाय** ] आविभातं प्रभातमारभ्य यच्चरणं तस्मै । तत्पर्याप्तमित्यर्थः । **गृह्णते** उपाददते । गजा हि भुक्तिपर्याप्तं जलं सकृदेव सायं पिबन्तीति प्रसिद्धम् ॥

**पश्य पश्चिमदिगन्तलम्बिना निर्मितं मितकथे[5] विवस्वता ।**
**दीर्घया[6] प्रतिमया सरोम्भसां तापनीयमिव सेतुबन्धनम् ॥ ३४ ॥**

पश्येति ॥ हे **मितकथे** हे मितभाषिणि । एतेन स्वस्य तत्संलापने लौल्यं सूचयति । **पश्चिमदिगन्तलम्बिना विवस्वता** कर्त्रा **दीर्घया** दिगन्तलम्बित्वादायतया **प्रतिमया** निजप्रतिबिम्बेन । ' प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात् ' इत्यमरः । **सरोम्भसाम्** तपनीयविकारः **तापनीयं** हिरण्मयम् । 'तपनीयं शातकुम्भम' इत्यमरः । **सेतुबन्धनं निर्मितम् इव** इत्युत्प्रेक्षा । अस्तमयसमये सरःपारावारिणामरुणमायतमर्कप्रतिबिम्बं हिरण्मयसेतुरिव दृश्यत इत्यर्थः । **पश्य** इति वाक्यार्थः कर्म ॥

**उत्तरन्ति विनिकीर्य पल्वलं गाढपङ्कमतिवाहितातपाः ।**
**दंष्ट्रिणो वनवराहयूथपा दष्टभङ्गुरबिसाङ्कुरा इव ॥ ३५ ॥**

---

१ त्यजोः. २ विरहदीनकण्टयोः. ३ भिन्नयोः. ४ आविभाति शरणाय गच्छतः; सांध्यकर्मविषयेऽनुगृह्णते. ५ कथमिदम्. ६ लब्धया.

उत्तरन्तीति ॥ **दंष्ट्रिणः** दंष्ट्रावन्तः । व्रीह्यादित्वादिनिः । अत एव [ **दष्टभङ्गुरबिसाङ्कुराः** ] दष्टाः भङ्गुराः कुटिला बिसाङ्कुरा मृणालाङ्कुरा यैस्ते ते इव स्थिताः [ **वनवराहयूथपाः** ] वनवराहाणां यूथपाः । 'यूथनाथस्तु यूथपः' इत्यमरः । **गाढपङ्कं** अतिपङ्किलं **पल्वलं** अल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । **विनिकीर्य** विक्षिप्य **अतिवाहितातपाः उत्तरन्ति** पल्वलान्निर्गच्छन्ति ॥

**एष वृक्षशिखरे कृतास्पदो जातरूपरसगौरमण्डलः[1] ।**
**हीयमानमहरत्ययातपं पीवरोरु पिबतीव बर्हिणः ॥ ३६ ॥**

एष इति ॥ हे **पीवरोरु, एषः वृक्षशिखरे** वृक्षाग्रे **कृतास्पदः** कृतस्थितिः **जातरूपरसगौरमण्डलः** आतपग्रसनात्काञ्चनद्रववदरुणबर्हमण्डलः । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । बर्हमस्यास्तीति **बर्हिणः** मयूरः । 'फलबर्हाभ्यामिनज्वक्तव्यः' । **हीयमानं** क्षीयमाणं **अहरत्ययातपं** दिनान्तातपं **पिबति इव** । कथमन्यथा क्षीयमाणत्वमिति भावः ॥

**पूर्वभागतिमिरप्रवृत्तिभिर्व्यक्तपङ्कमिव जातमेकतः[2] ।**
**खं हृतातपजलं विवस्वता भाति किंचिदिव शेषवत्सरः ॥ ३७ ॥**

पूर्वभागेति ॥ [ **पूर्वभागतिमिरप्रवृत्तिभिः** ] पूर्वभागे प्राचीमूले तिमिरप्रवृत्तिभिर्ध्वान्तप्रसरैः **एकतः व्यक्तपङ्कं** स्फुटपङ्कं **इव जातं** तथा **विवस्वता** [ **हृतातपजलं** ] हृतमातप एव जलं यस्य तत्तथोक्तं **खं** आकाशं **किंचित्** ईषच्छेषोऽस्यास्तीति **शेषवत्** शुष्कं **सरः इव भाति** ॥

**आविशद्भिरुटजाङ्गणं[3][4] मृगैर्मूलसेकसरसैश्च वृक्षकैः ।**
**आश्रमाः प्रविशदग्निधेनवो बिभ्रति श्रियमुदीरिताग्नयः ॥ ३८ ॥**

आविशद्भिरिति ॥ **उटजाङ्गणं** पर्णशालाङ्गणं **आविशद्भिः** । प्रविशद्भिरित्यर्थः । 'पर्णशालोटजोऽस्त्रियाम्' इत्यमरः । 'उपान्वध्याङ्वसः' इति कर्मत्वम् । **मृगैः** । तथा [ **मूलसेकसरसैः** ] मूलानां सेकेन सेचनेन सरसैः सद्रवैः **वृक्षकैः च** उपलक्षिताः । अल्पार्थे कप्रत्ययः । प्रविशन्त्यो वनादागच्छन्त्योऽग्निधेनवोऽग्निहोत्रार्था धेनवः येषु ते **प्रविशदग्निधेनवः उदीरिताग्नयः** च **आश्रमाः श्रियं बिभ्रति** ॥

**बद्धकोशमपि तिष्ठति क्षणं सावशेषविवरं कुशेशयम् ।**
**षट्पदाय वसतिं ग्रहीष्यते प्रीतिपूर्वमिव दातुमन्तरम्[5][6] ॥ ३९ ॥**

बद्धकोशमिति ॥ **बद्धकोशं अपि** । मुकुलितमपीत्यर्थः । **कुशेशयं** कर्तृ । 'शतपत्रं कुशेशयम्' इत्यमरः । **वसतिं ग्रहीष्यते** । स्थितिं करिष्यते इत्यर्थः । 'लृटः सद्वा' इति शतृप्रत्ययः । **षट्पदाय प्रीतिपूर्वं अन्तरं** अवकाशं **दातुं इव क्षणं सावशेषविवरं तिष्ठति** ॥

---

१ मण्डलम्. २ लग्न. ३ आवसद्भिः. ४ उटजाङ्गणे. ५ दम्प. ६ उत्तरम्.

दूरलग्नपरिमेयरश्मिना वारुणी दिगरुणेन भानुना ।
भाति केसरवतेव मण्डिता बन्धुजीवतिलकेन कन्यका ॥ ४० ॥

दूरलग्नेति ॥ **वारुणी दिक्** प्रतीची [ **दूरलग्नपरिमेयरश्मिना** ] दूरं लग्ना अत एव परिमेया अल्पावशिष्टा रश्मयो यस्य तेन तथोक्तेन **अरुणेन** लोहितवर्णेन **भानुना केसरवता** किञ्जल्कवता [ **बन्धुजीवतिलकेन** ] बन्धुजीवं बन्धूककुसुमम् । 'बन्धूको बन्धुजीवकः' इत्यमरः । तदेव तिलकं तेन **मण्डिता** अलंकृता **कन्यका इव भाति** ॥

सामभिः सहचराः सहस्रशः स्यन्दनाश्वहृदयंगमस्वनैः ।
भानुमग्निपरिकीर्णतेजसं संस्तुवन्ति किरणोष्मपायिनः ॥ ४१ ॥

सामभिरिति ॥ **किरणोष्मपायिनः** किरणोष्माणं पिबन्तीति तथोक्ताः । तथाहारा इत्यर्थः । चरन्तीति चराः । पचाद्यच् । सहभूताश्चराः **सहचराः** वालखिल्यप्रभृतयो महर्षयः [ **अग्निपरिकीर्णतेजसं** ] अग्नौ परिकीर्णं तेजो यस्य तत्तथोक्तम् । 'अग्निं वावादित्यः सायं प्रविशति' इति श्रुतेः । **भानुम्** । हृदयं गच्छन्तीति हृदयंगमा मनोरमाः । गमेः सुपीति वक्तव्यात्खच् । [ **स्यन्दनाश्वहृदयंगमस्वनैः** ] स्यन्दनाश्वानां हृदयंगमाः स्वना येषां तैः **सामभिः** सामवेदैः **सहस्रशः संस्तुवन्ति** । 'सामवेदेनास्तमये गीयते' इति श्रुतेः ॥

सोऽयमानतशिरोधरैर्हयैः कर्णचामरविघट्टितेक्षणैः ।
अस्तमेति युगभुग्नकेसरैः संनिधाय दिवसं महोदधौ ॥ ४२ ॥

स इति ॥ **सः अयं** भानुः **दिवसं महोदधौ संनिधाय** । निधायेवेत्यर्थः । दिवसस्यादर्शनादियमुत्प्रेक्षा । **आनतशिरोधरैः** गगनावतरणान्नम्रकन्धरैरत एव **कर्णचामरविघट्टितेक्षणैः युगभुग्नकेसरैः** युगकुटिलितस्कन्धरोमभिः **हयैः अस्तं एति** । 'अस्तस्तु चरमक्ष्माभृत्' इत्यमरः ॥

खं प्रसुप्तमिव संस्थिते रवौ तेजसो महत ईदृशी गतिः ।
तत्प्रकाशयति यावदुत्थितं मीलनाय खलु तावतश्च्युतम् ४३

खमिति ॥ **रवौ संस्थिते** अस्तमिते सति **खं** व्योम **प्रसुप्तं इव** निष्प्रकाशत्वान्निद्रितमिव । स्थितमित्यर्थः । युज्यते चैतदित्याह—**महतः तेजसः ईदृशी** वक्ष्यमाणप्रकारा **गतिः** । स्वभाव इत्यर्थः । तां गतिमेवाह—तदिति । **तत्** महत्तेजः **उत्थितं** सत् **यावत्** । स्थानमिति शेषः । **प्रकाशयति** । **तावतः** । स्थानादिति शेषः । अधः **च्युतं** सत् । **मीलनाय** संकोचाय **खलु** भवति । यत्र स्थाने तेजस्तिष्ठति तत्प्रकाशते

१ दूरमग्न; दूरमग्न. २ वारुणा. ३ कुसुमेन. ४स्यन्दनैश्च; स्यन्दनस्य. ५ स्वरैः. ६ शिरोरुहैः. ७ उद्गतम्. ८ तावता.

इति स्थितिः । यतो गच्छति न तत्प्रकाशते । अतः सूर्यापाये खं प्रसुप्तमिति युक्तोत्प्रेक्षेति भावः । अस्यार्थस्य तेजोमात्रसाधारण्येऽपि महति स्फुटमिति महद्ग्रहणं कृतम् ॥

संध्ययाऽप्यनुगतं रवेर्वपुर्वन्द्यमस्तशिखरे समर्पितम् ।
प्राक्तथेयमुदये पुरस्कृता नानुयास्यति कथं तमापदि ॥ ४४ ॥

संध्ययेति ॥ **संध्यया अपि अस्तशिखरे** अस्ताद्रिशृङ्गे **समर्पितं** निहितं **वन्द्यं रवेः वपुः अनुगतं** अन्वगामि । अस्तंगतं रविमन्वगादिति भावः । युक्तं चैतदित्याह—**प्राक्** पूर्वं **उदये तथा** तेन प्रकारेण **पुरस्कृता** अग्रतः कृता । पूजिता चेति गम्यते । प्रातः सूर्योदयात्प्रागेव संध्यागम इति हि प्रसिद्धम् । **इयं** संध्या **तं** रविं **आपदि** अस्तसमये **कथं न अनुयास्यति** । अनुयास्यत्येवेत्यर्थः । संपदसंपदोस्तुल्यरूपत्वमेव साधूनामिति भावः ॥

रक्तपीतकपिशाः पयोमुचां कोटयः कुटिलकेशि भान्त्यमूः ।
द्रक्ष्यसि त्वमिति सांध्यवेलया वर्तिकाभिरिव साधु वर्तिताः ४५

रक्तेति ॥ हे **कुटिलकेशि** । 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । **अमूः** पुरोगताः रक्ताः पीताः कपिशाश्च **रक्तपीतकपिशाः** । नानावर्णा इत्यर्थः । 'चार्थे द्वन्द्वः' । न तु 'वर्णो वर्णेन' इति तत्पुरुषः, सामानाधिकरण्याभावात् । **पयोमुचां कोटयः** अग्रयः । 'स्यात्कोटिरश्रौ चापाग्रे संख्याभेदप्रकर्षयोः' इति विश्वः । **त्वं द्रक्ष्यसि इति** हेतोरनया **सांध्यवेलया** । संध्ययेत्यर्थः । 'संधिवेलया' इति क्वचित्पाठः । **वर्तिकाभिः** चित्रशलाकाभिः **साधु वर्तिताः** उत्पादिताः इव **भान्ति** ॥

सिंहकेसरसटासु भूभृता पल्लवप्रसविषु द्रुमेषु च ।
पश्य धातुशिखरेषु चात्मना संविभक्तमिव सांध्यमातपम् ॥४६॥

सिंहेति ॥ [ **सिंहकेसरसटासु** ] सिंहानां केसराणि स्कन्धरोमाणि तान्येव सटा जटास्तासु । 'सटा जटाकेसरयोः' इति विश्वः । अथ वा सटाशब्देन समूहो लक्ष्यतेऽन्यथा पौनरुक्त्यात् । **पल्लवप्रसविषु** पल्लववत्सु **द्रुमेषु च** तथा **धातुशिखरेषु च भूभृता** अस्ताद्रिणा **आत्मना** स्वयमेव **संविभक्तं इव** स्थितं संध्यायां भवं **सांध्यं आतपं पश्य** । आरुण्यमरुणद्रव्येषु भूयिष्ठमुपलभ्यत इति भावः ॥

पार्ष्णिमुक्तवसुधास्तपस्विनः पावनाम्बुविरचिताञ्जलिक्रियाः ।
ब्रह्म गूढमभिसंध्यमादृताः शुद्धये विधिविदो गृणन्त्यमी ४७

---

१ पदम्. २ धर्मम्. ३ येन पूर्वम्. ४ सांधिवेलया; संध्ययाऽनया. ५ वर्णिकाभिः. ६ मण्डिताः. ७ भूभृताम्. ८ धातुशिखरेषु भानुना; धातुशिखरेषु चात्मनः; चास्तशिखरे विवस्वता ९ अद्रिराजतनये. १० विहिता. ११ सांध्य. १२ सिद्धये.

पार्ष्णीति ॥ [ पार्ष्णिमुक्तवसुधाः ] पार्ष्ण्योः गुल्फाधोभागास्तैर्मुक्तवसुधास्त्यक्तभूतलाः। पादाग्रस्थिता इत्यर्थः। 'गोश्रृङ्गमात्रमुद्धृत्य मुक्तपार्ष्णिः क्षिपेज्जलम्' इति स्मरणात्। [ पावनाम्बुरचिताञ्जलिक्रियाः ] पावनैरम्बुभी रचिताञ्जलिक्रियाः। विहितार्घ्यप्रक्षेपा इत्यर्थः। विधिविदः। शास्त्रज्ञा इत्यर्थः। अमी तपस्विनः आदृताः आदरवन्तः। श्रद्दधाना इत्यर्थः। कर्तरि क्तः। अभिसंध्यं संध्यामभि। 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः। शुद्धये शुद्ध्यर्थं ब्रह्म गायत्रीं गूढं उपांशु गृणन्ति जपन्ति। 'प्रत्यगा तारकोदयात्' इति स्मरणात् ॥

तन्मुहूर्तमनुमन्तुमर्हसि प्रस्तुताय नियमाय मामपि।
त्वां विनोदनिपुणः सखीजनो वल्गुवादिनि विनोदयिष्यति ४८

तदिति ॥ तत् तस्मात्कारणात् मां अपि प्रस्तुताय नियमाय प्रकृतसंध्याविधये मुहूर्तं अनुमन्तुं अर्हसि। हे वल्गुवादिनि मञ्जुभाषिणि, विनोदनिपुणः कालक्षेपचतुरः सखीजनः त्वां विनोदयिष्यति। विनोदशब्दात्तत्करोतीति णिच् ॥

निर्विभुज्य दशनच्छदं ततो वाचि भर्तुरवधीरणापरा।
शैलराजतनया समीपगामाललाप विजयामहेतुकम् ॥ ४९ ॥

निर्विभुज्येति ॥ ततः भर्तुः वाचि वचने अवधीरणापरा अवज्ञापरा शैलराजतनया पार्वती। छाद्यतेऽनेनेति छदः। 'पुंसि संज्ञायां घः प्रायेण' इति घप्रत्ययः। दशनच्छदं निर्विभुज्य कुटिलीकृत्य समीपगां विजयां विजयाख्यां सखीं अहेतुकं निर्निमित्तं आललाप। न तु रोषाद्भर्तुरुत्तरं ददावित्यर्थः ॥

ईश्वरोऽपि दिवसात्ययोचितं मन्त्रपूर्वमनुतस्थिवान्विधिम्।
पार्वतीमवचनामसूयया प्रत्युपेत्य पुनराह सस्मितम् ॥ ५० ॥

ईश्वर इति ॥ ईश्वरः अपि दिवसात्ययोचितं सायंकालोचितं विधिं संध्यावन्दनकृत्यं मन्त्रपूर्वं अनुतस्थिवान् अनुष्ठितवान्। तिष्ठतेः क्वसुप्रत्ययः। असूयया संध्यावन्दनजनितासूयया अवचनां अभाषमाणां पार्वतीं पुनः प्रत्युपेत्य सस्मितं आह ॥

मुञ्च कोपमनिमित्तकोपने संध्यया प्रणमितोऽस्मि नान्यथा।
किं न वेत्सि सहधर्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥ ५१ ॥

मुञ्चेति ॥ हे अनिमित्तकोपने अकारणकोपिनि। नन्द्यादित्वात्कर्तरि ल्युः। कोपं मानं मुञ्च। संध्यया प्रणमितः अस्मि प्रणामं कारितोऽस्मि। अन्यथा प्रकारान्तरं न। धर्माभिसंधायिनं मां कामाभिसंधायिनं मा मन्यस्वेत्यर्थः। आत्मनः तव सह धर्मं चरतीति सहधर्मचारिणं मां [ चक्रवाकसमवृत्तिं ] चक्रवाकेन समवृत्तिं तुल्यव्यवहारं न वेत्सि किम्। अनन्यसङ्गिनं वेत्स्येवेत्यर्थः ॥

---

१ सहेतुकम्. २ अनुतिष्ठवान्. ३ सोऽभ्युपेत्य. ४ प्रणमितः. ५ नान्यथा.

प्रणामकारणमाह—

निर्मितेषु पितृषु स्वयंभुवा या तनुः सुतनु पूर्वमुज्झिता ।
सेयमस्तमुदयं च सेव्यते तेन मानिनि ममात्र गौरवम् ॥ ५२॥

निर्मितेष्विति ॥ हे सुतनु सुगात्रि, पूर्वं [ स्वयंभुवा ] स्वयं भवतीति स्वयंभूश्चतुराननः । 'भुवः संज्ञान्तरयोः' इति क्विप् । मयूरव्यंसकादित्वात्समासः । तेन पितृषु अग्निष्वात्तादिषु निर्मितेषु सत्सु या तनुः उज्झिता सा इयं तनुः अस्तं अस्तमयकाले उदयं उदयकाले । अव्ययमेतत् । सेव्यते पूज्यते च । संध्यारूपेणेति शेषः । हे मानिनि । अविमृश्यकारिणीति भावः । तेन ब्रह्मतनुत्वेन हेतुना मम अत्र संध्यायां गौरवं आदरः । तदेतदुक्तं भविष्यपुराणे—'पितामहः पितॄन्सृष्ट्वा मूर्तिं तामुत्ससर्ज ह । प्रातः सायं समागत्य संध्यारूपेण पूज्यते ॥ एतां संध्यां यतात्मानो ये तु दीर्घामुपासते । दीर्घायुषो भविष्यन्ति नीरुजः पाण्डुनन्दन ॥' इति ॥

इत्थं देव्याः कोपमपनीय धातुसंध्यादिवर्णनं करोति—

तामिमां तिमिरवृत्तिपीडितां भूमिलग्नमिव संप्रति स्थिताम् ।
एकतस्तटतमालमालिनीं पश्य धातुरसनिम्नगामिव ॥ ५३ ॥

तामिति ॥ संप्रति तिमिरवृत्तिपीडितां तमोवृत्त्युपरुद्धामत एव [ भूमिलग्नां ] भूमौ लग्नां इव स्थितां तां इमां संध्यां एकतः एकत्र तटतमालमालिनीं तीरतमालतरुपङ्क्तिमतीम् । व्रीह्यादित्वादिनिः । धातुरसनिम्नगां धातुद्रवनदीं इव पश्य ॥

सांध्यमस्तमितशेषमातपं रक्तलेखमपरा बिभर्ति दिक् ।
संपरायवसुधा सशोणितं मण्डलाग्रमिव तिर्यगुत्थितम् ॥ ५४ ॥

सांध्यमिति ॥ अपरा दिक् प्रतीची । अस्तमिति मकारान्तमव्ययम् । तस्येतशब्देन समासः । अस्तमितशेषं अस्तंगतावशिष्टमत एव [ रक्तलेखं ] रक्तालेखाकृतिर्यस्य तं संध्यायां भवं सांध्यं आतपं संपरायवसुधा युद्धभूमिः । 'समरे संपरायः स्यात्' इति विश्वः । तिर्यगुत्थितं तिर्यक्फलितं सशोणितं मण्डलाग्रं कृपाणं इव बिभर्ति । 'कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्' इत्यमरः ॥

यामिनीदिवससंधिसंभवे तेजसि व्यवहिते सुमेरुणा ।
एतदन्धतमसं निरर्गलं दिक्षु दीर्घनयने विजृम्भते ॥ ५५ ॥

यामिनीति ॥ [ यामिनीदिवससंधिसंभवे ] यामिनीदिवसयोः संधिः संध्या तत्र संभवे तेजसि संध्यारागे सुमेरुणा व्यवहिते सति हे दीर्घनयने एतत् अन्धतमसम् । 'अवसमन्धेभ्यस्तमसः' इति समासान्तः । दिक्षु निरर्गलं विजृम्भते ॥

---

१ उत्थिता. २ सेवते. ३ वृद्धि. ४ शैलराजतनयेऽधुना स्थिताम्. ५ संभ्रतिष्ठिताम्. ६ सांपराय. ७ उज्झितम्. ८ निरङ्कुशम्.

नोर्ध्वमीक्षणगतिर्न चाप्यधो नाभितो न पुरतो न पृष्ठतः ।
लोक एष तिमिरोल्बवेष्टितो गर्भवास इव वर्तते निशि ॥ ५६ ॥

नेति ॥ ऊर्ध्वं उपरि ईक्षणगतिः दृष्टिप्रसारः न अस्ति । अधः अपि च न । अभितः पार्श्वयोश्च न । पुरतः अग्रे च न । पृष्ठतः पश्चादपि न । ईक्षणगतिरिति सर्वत्र संबध्यते । तथापि एषः लोकः निशि [ तिमिरोल्बवेष्टितः ] तिमिरमेवोल्बं जरायुः । ' गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियाम् ' इत्यमरः । तेन वेष्टितः आवृतः सन् । गर्भ एव वासो वसतिस्तत्र गर्भवासे वर्तते । इव इत्युत्प्रेक्षा ॥

शुद्धमाविलमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ ५७ ॥

शुद्धमिति ॥ शुद्धं स्वच्छं आविलं मलिनं अवस्थितं स्थावरं चलं जंगमं वक्रं कुटिलं [ आर्जवगुणान्वितं ] ऋजोर्भाव आर्जवं तदेव गुणस्तेनान्वितं च यत् वस्तुजातम् । तदिति यत्तदोर्नित्यसंबन्धाल्लभ्यते । तत् सर्वं एव तमसा समीकृतं दुर्लक्ष्यविशेषं कृतम् । तथा हि । हतमन्तरं विशेषो येन तत् हतान्तरं असतां असाधूनां महत्त्वं ऋद्धि धिक् । धिक्शब्दयोगाद्द्वितीया । समत्वेन परगतिविशेषतिरस्करणमसतां स्वभाव इति सुप्रसिद्धम् । तमसोऽपि तथा महत्त्वं धिगित्यर्थः ॥

नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि पूर्वदिङ्मुखं कैतकैरिव रजोभिरावृतम् ॥ ५८ ॥

नूनमिति ॥ [ यज्वनां ] यज्वानो विधिनेष्टवन्तः । ' यज्वा तु विधिनेष्टवान् ' इत्यमरः । 'सुयजोर्ङ्वनिप्' इति ङ्वनिप्प्रत्ययः । तेषां पतिः प्रियः । दर्शपूर्णमासादियागप्रवृत्तिहेतुत्वादिति भावः । शार्वरस्य शर्वर्यां भवस्य तमसः निषिद्धये निरासाय नूनं उन्नमति उदेति । कुतः । हे पुण्डरीकमुखि, पूर्वस्या दिशो मुखं पुरोभागः पूर्वदिङ्मुखं [ कैतकैः ] केतक्या इमानि कैतकानि तैः रजोभिः परागैः आवृतं इव । दृश्यत इति शेषः । अतो नूनमुदेति चन्द्र इति संबन्धः ॥

मन्दरान्तरितमूर्तिना निशा लक्ष्यते शशभृता सतारका ।
त्वं मया प्रियसखीसमागता श्रोष्यतेव वचनानि पृष्ठतः ॥ ५९ ॥

मन्दरेति ॥ सतारका निशा मन्दरान्तरितमूर्तिना मन्दराद्रिव्यवहितमण्डलेन शशभृता चन्द्रेण पृष्ठतः पश्चाद्भागे वचनानि श्रोष्यता । श्रोतुं स्थितेनेत्यर्थः । मया प्रियसखीसमागता प्रियसखीभिरावृता त्वं इव लक्ष्यते ॥

---

१ तिमिरौघ. २ हतान्तरम्; अनन्तरम्. ३ उन्नमाति. ४ परग दिङ्मुखम्; दिङ्मुखं यथा. ५ आहतम्.

रुद्धनिर्गमनमा दिनक्षयात्पूर्वदृष्टतनुचन्द्रिकास्मितम् ।
एतदुद्गिरति रात्रिचोदिता दिग्रहस्यमिव चन्द्रमण्डलम्[1] ॥ ६० ॥

रुद्धेति ॥ **दिक्** पूर्वदिक् । नायिका ध्वन्यते । **आ दिनक्षयात्** आ सायं [ **रुद्धनिर्गमनं** ] रुद्धं निर्गमनं निःसरणं यस्य तत्तथोक्तम् । अन्यत्र बहिरप्रकाशितमित्यर्थः । [ **पूर्वदृष्टतनुचन्द्रिकास्मितं** ] तनुचान्द्रिका स्मितमिव तनुचन्द्रिकास्मितं पूर्वदृष्टं यस्मात्तत्तथोक्तम् । **एतत् चन्द्रमण्डलं** कर्म **रहस्यं** गोप्यार्थं **इव रात्रिचोदिता** । रात्र्या सख्येव प्रेरिता सतीत्यर्थः । **उद्गिरति** प्रकाशयति । यथा काचिद्वा सायं मनस्विनी गूहितमभिलाषं प्रदोषे सख्या मह्यं ब्रूहीति निर्बन्धात्पृष्टा सती प्रकटयति तद्वदित्यर्थः ॥

पश्य पक्वफलिनीफलत्विषा बिम्बलाञ्छितवियत्सरोम्भसा ।
विप्रकृष्टविवरं[2] हिमांशुना चक्रवाकमिथुनं विडम्ब्यते ॥ ६१ ॥

पश्येति ॥ **पक्वफलिनीफलत्विषा** उदयरागात [ **बिम्बलाञ्छितवियत्सरोम्भसा** ] बिम्बाभ्यां प्रतिबिम्बाभ्यां लाञ्छिते चिह्निते वियत्सरोम्भश्च येन तथोक्तेन **हिमांशुना** [ **विप्रकृष्टविवरं** ] विप्रकृष्टं विवरमन्तरालं यस्य तत्तथोक्तम् । अतिदूरस्थमित्यर्थः । **चक्रवाकमिथुनं विडम्ब्यते** अनुक्रियते **पश्य** । रात्रौ वियति सरोजले चेन्दोर्बिम्बप्रातिबिम्बौ विरहाद्दूरवर्तिनौ चक्रवाकाविव दृश्येते इत्यर्थः ॥

शक्यमोषधिपतेर्नवोदयाः[3][4][5] कर्णपूररचनाकृते तव ।
अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसंपुटैः कराः[6][7] ॥ ६२ ॥

शक्यमिति ॥ **नवोदयाः** सद्य उत्पादिताः **अप्रगल्भयवसूचिकोमलाः** अकठोरयवाङ्कुरसुकुमाराः **ओषधिपतेः** इन्दोः **कराः तव कर्णपूररचनाकृते** कर्णावतंसनिर्माणक्रियायै । संपदादित्वाद्भावे क्विप् । **अग्रनखसंपुटैः** नखाग्रसंभेदैः **छेत्तुं शक्यम्** । शक्या इत्यर्थः । 'शकिसहोश्च' इति कर्मणि यत्प्रत्ययः । शक्यमिति विपरीतलिङ्गवचनस्यापि सामान्योपक्रमात्कर्माभिधायकत्वम् । पश्चात्कर्मविशेषाकाङ्क्षायां करा इति निर्देशो न विरुध्यते । यथाह वामनः—'शक्यमिति रूपं विलिङ्गवचनस्यापि सामान्योपक्रमात् । अत्र प्रमाणं–शक्यं श्वमांसेनापि क्षुत्प्रतिहन्तुमिति भाष्यकारप्रयोगः' इति ॥

अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ ६३ ॥

अङ्गुलीभिरिति ॥ **शशी** चन्द्रमाः । नायकस्तु प्रतीयते । **अङ्गुलीभिः केशसञ्चयं इव मरीचिभिः तिमिरं संनिगृह्य** गृहीत्वा । [ **कुड्मलीकृतसरोजलो-**

---

१ चन्द्रमण्डलं...मिव रात्रिनोदितम्. २ विप्रकृष्टविधुरम्–विरहम्; विप्रकृष्टविवरम्. ३ शक्यः. ४ नवोदयः. ५ नवः. ६ कोमलः. ७ करः.

स्त्रनं ] सरोजे लोचने इवेत्युपमितसमासोऽङ्गुलीभिरिवेत्युपमायास्तत्साधकत्वात् । कुड्म-लीकृते सरोजलोचने यस्य तत्तथोक्तं [ रजनीमुखं ] रजन्या मुखं प्रारम्भः । वदनं चेति गम्यते । चुम्बति इव । अत्रार्थापत्त्यतिशयोक्तिरलंकार उत्प्रेक्षासंकरश्चेति ॥

**पश्य पार्वति नवेन्दुरश्मिभिः सामिभिन्नतिमिरं नभस्तलम् ।**
**लक्ष्यते द्विरदभोगदूषितं संप्रसीदादिव मानसं सरः ॥ ६४ ॥**

पश्येति ॥ हे पार्वति, नवेन्दुरश्मिभिः सामिभिन्नतिमिरं अर्धनिरस्तध्वान्तं नभस्तलं द्विरदभोगदूषितं गजक्रीडाकलुषितं संप्रसीदत् प्रसादं गच्छत् मानसं मानसाख्यं सरः इव लक्ष्यते पश्य ॥

**रक्तभावमपहाय चन्द्रमा जात एष परिशुद्धमण्डलः ।**
**विक्रिया न खलु कालदोषजा निर्मलप्रकृतिषु स्थिरोदया ॥ ६५ ॥**

रक्तभावमिति ॥ एषः चन्द्रमाः रक्तभावं रक्तत्वमुदयरागं अपहाय परि-शुद्धमण्डलः शुभ्रबिम्बो निष्कण्टको जातः । तथा हि । निर्मलप्रकृतिषु स्वच्छभावेषु शुद्धसचिवसंपन्नेषु च कालदोषेण जाता कालदोषजा विक्रिया विकारः स्थिरोदया स्थायिनी न भवति खलु । चन्द्रोऽपि स्वभावनिर्मल इति । यथा कश्चिद्राजा कुतश्चि-न्निमित्ताद्विरक्तमण्डलः पश्चात्प्रकृतिकृतशुद्ध्या स्वस्थमण्डलो भवति तद्वदिति भावः । तत्र प्रथमार्धे समासोक्तिरलंकारस्तस्यार्थान्तरन्यासेनाङ्गाङ्गिभावेन संकरः ॥

**उन्नतेषु शशिनः प्रभा स्थिता निम्नसंश्रयपरं निशातमः ।**
**नूनमात्मसदृशी प्रकल्पिता वेधसैव गुणदोषयोर्गतिः ॥ ६६ ॥**

उन्नतेष्विति ॥ शशिनः प्रभा चन्द्रिका उन्नतेषु अद्रिशृङ्गादिषु स्थिता । निशातमः तु निम्नसंश्रयपरं गर्तादिनीचस्थानप्रवणम् । तथा हि । वेधसा गुण-दोषयोः आत्मसदृशी स्वभावानुरूपा गतिः प्रवृत्तिः प्रकल्पितैव नूनम् । तेज-स्विन उन्नमन्ति मलिनास्तु नीचन्तीति भावः ॥

**चन्द्रपादजनितप्रवृत्तिभिश्चन्द्रकान्तजलबिन्दुभिर्गिरिः ।**
**मेखलातरुषु निद्रितानमून्बोधयत्यसमये शिखण्डिनः ॥ ६७ ॥**

चन्द्रपादेति ॥ गिरिः हिमाद्रिः [ चन्द्रपादजनितप्रवृत्तिभिः ] चन्द्रपादैरि-न्दुकिरणैर्जनितप्रवृत्तिभिर्जनितप्रसरैः [ चन्द्रकान्तजलबिन्दुभिः ] चन्द्रकान्तमणीनां जलबिन्दुभिः करणैः मेखलातरुषु निद्रितान् संजातनिद्रान् । तारकादित्वादितच् । अमून् शिखण्डिनः मयूरान् असमये अकाले बोधयति । इन्दुकिरणसंपर्कादुप-रिचन्द्रमणिस्पन्देष्वधोवृक्षेशयाः शिखण्डिनो वृष्टिभयाज्जाग्रतीत्यर्थः । शिखण्डिग्रहणमितरशकुन्तानां कुलायनिलयत्वादिति भावः ॥

---

१ भिन्नसान्द्र; भग्नसान्द्र; संविभिन्न. २ सम्प्रसादम्. ३ एव. ४ इष्ट; हि. ५ इमान्.

कल्पवृक्षशिखरेषु संप्रति प्रस्फुरद्भिरविकल्पसुन्दरि[1] ।
हारयष्टिगणनामिवांशुभिः कर्तुमुद्यतकुतूहलः शशी ॥ ६८ ॥

कल्पवृक्षेति ॥ हे अविकल्पेनाविवादेन सुन्दरि अविकल्पसुन्दरि, शशी संप्रति [ कल्पवृक्षशिखरेषु ] कल्पवृक्षाणां शिखरेष्वग्रेषु प्रस्फुरद्भिः अंशुभिः करस्थानीयैरिति भावः । हारयष्टिगणनां कल्पतरुलम्बिहारपरिगणनां कर्तुं उद्यतकुतूहलः इव उत्पन्नकौतुकः किमु । इत्युत्प्रेक्षा ॥

उन्नतावनतभागवत्तया[4] चन्द्रिका सतिमिरा गिरेरियम् ।
भक्तिभिर्बहुविधाभिरर्पिताऽऽभाति[5] भूतिरिव मत्तदन्तिनः[6] ॥६९॥

उन्नतेति ॥ गिरेः उन्नतावनतभागवत्तया निम्नोन्नतप्रदेशवत्त्वेन हेतुना सतिमिरा तिमिरामिश्रा । समोन्नतेषु तमसोऽनवकाशादिति भावः । इयं चन्द्रिका बहुविधाभिः भक्तिभिः रचनाभिः[2] अर्पिता विन्यस्ता मत्तदन्तिनः भूतिः भसितं इव आभाति । 'भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि संपदि' इति विश्वः । तत्र भक्तिसंहितानि गजाङ्गान्येव तिमिरभागोपमानमित्यनुसंधेयम् ॥

एतदुच्छ्वसितपीतमैन्दवं[7] सोढुमक्षममिव[8] प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमा निबन्धनात् ॥ ७० ॥

एतदिति ॥ एतत् कुमुदं कैरवं कर्तृ उच्छ्वसितेन पीतं उच्छ्वसितपीतम् । अतितृष्णयोच्छ्वस्योच्छ्वस्य पीतमित्यर्थः । इन्दोरिमं ऐन्दवं [ प्रभारसं ] प्रभा चन्द्रिका सैव रसो द्रवस्तं सोढुं अक्षमं इव अञ्जसा मुक्तषट्पदविरावं प्रवर्तितभृङ्गनादं यथा तथा निबन्धनात् आ वृन्तात् भिद्यते विकसति । कर्मकर्तरि लट् । यथा लोके कस्यचिदतिपानान्निःसहात्मन उच्चैः क्रोशत उदरं भिद्यते तथैतदिति भावः ॥

पश्य कल्पतरुलम्बि शुद्धया ज्योत्स्नया जनितरूपसंशयम् ।
मारुते चलति चण्डि[9] केवलं व्यज्यते विपरिवृत्तमंशुकम् ॥ ७१ ॥

पश्येति ॥ शुद्धया ज्योत्स्नया [ जनितरूपसंशयं ] जनितो रूपसंशयः अंशुकं ज्योत्स्ना वेति स्वरूपसंदेहो यस्य तत्तथोक्तं कल्पतरुलम्बि अंशुकं हे चण्डि अत्यन्तकोपने । गौरादित्वान्ङीष् । केवलं मारुते चलति सति विपरिवृत्तं चलं सत् व्यज्यते पश्य । ज्योत्स्नासच्छायत्वान्न रूपतो विविच्यते परं तु क्रिययेत्यर्थः ॥

शक्यमङ्गुलिभिरुद्धृतैरधः[10] शाखिनां पतितपुष्पपेशलैः[11] ।
पत्रजर्जरशशिप्रभालवैरेभिरुत्कचयितुं तवालकान्[12] ॥ ७२ ॥

---

१ इव पश्य सुन्दरि; इव शम्भुसुन्दरि. २ रचनाम्. ३ आगत. ४ भावचत्तया. ५ भाति. ६ हस्तिनः. ७ उच्चासितपीतम्. ८ वोढुम्. ९ चाण्डिके बलात्; चण्डिके चलम्. १० उत्थितैः. ११ कोमलैः. १२ अलकम्—अलकाः.

शक्यमिति ॥ अङ्गुलिभिः उद्धृतैः उच्चितैः शाखिनां अधः। [ पतितपुष्पपेशलैः ] पतितपुष्पवत्पेशलैः कोमलैः। तथा भ्रमकरैरित्यर्थः। एभिः [ पत्रजर्जरशशिप्रभालवैः ] पत्रैर्जर्जरा शकलिता शशिप्रभा चन्द्रिका तस्या लवैः खण्डैः। तरुतलेषु पत्रान्तरालक्ष्यज्योत्स्नामण्डलैरित्यर्थः। तव अलकान् उत्कचयितुं बन्द्धुम्। 'कच दीप्तिबन्धनयोः' इति धातोस्तुमुन्प्रत्ययः। शक्यम्। शक्या इत्यर्थः। शक्यमिति विलिङ्गवचनस्य सामान्योपक्रमादित्याद्यनुपदमेवोक्तम् ॥

**एष चारुमुखि योगतारया युज्यते तरलबिम्बया शशी।**
**साध्वसादुपगतप्रकम्पया कन्ययेव नवदीक्षया वरः ॥ ७३ ॥**

एष इति ॥ हे चारुमुखि हे उज्ज्वलानने। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष्। एषः शशी तरलबिम्बया स्फुरन्मण्डलया योगतारया। प्रत्यहं यया युज्यते सा योगतारा। नित्यनक्षत्रेणेत्यर्थः। साध्वसात् नवसंगमभयात् उपगतप्रकम्पया वेपथुमत्या नवदीक्षया नवोद्वाहया कन्यया वरः वोढा इव युज्यते संगच्छते। युजेर्दैवादिकत्वात्कर्तरि लट् ॥

**पाकभिन्नशरकाण्डगौरयोरुल्लसत्प्रतिकृतिप्रदीप्तयोः।**
**रोहतीव तव गण्डलेखयोश्चन्द्रबिम्बनिहिताक्षि चन्द्रिका ॥ ७४ ॥**

पाकेति ॥ हे चन्द्रबिम्बनिहिताक्षि चन्द्रबिम्बनिहितेक्षणे। [ पाकभिन्नशरकाण्डगौरयोः ] पाकभिन्नः पाकविकसितो यः शरकाण्डस्तद्वद्गौरयोः सितयोः। 'अवदातः सितो गौरः' इत्यमरः। [ उल्लसत्प्रतिकृतिप्रदीप्तयोः ] उल्लसन्त्या प्रतिकृत्या चन्द्रिकाप्रतिबिम्बेन प्रदीप्तयोः प्रोज्ज्वलयोः तव गण्डलेखयोः चन्द्रिका रोहति इव। गण्डस्थलप्रतिबिम्बसंक्रमणमूर्छिता चन्द्रिका तयोरेव प्ररूढेति प्रतीयत इत्यर्थः ॥

अत्रान्तरे कांचिदवलोक्याह—

**लोहितार्कमणिभाजनार्पितं कल्पवृक्षमधु बिभ्रती स्वयम्।**
**त्वामियं स्थितिमतीमुपस्थिता गन्धमादनवनाधिदेवता ॥ ७५ ॥**

लोहितेति ॥ [ लोहितार्कमणिभाजनार्पितं ] लोहितेऽरुणेऽर्कमणिभाजने सूर्यकान्तपात्रेऽर्पितं कल्पवृक्षमधु कल्पतरुप्रसूतं मद्यं स्वयं बिभ्रती गन्धमादनवनाधिदेवता स्थितिमतीं अवस्थानवतीम्। इह स्ववने तिष्ठन्तीमित्यर्थः। त्वां इयं प्रत्यक्षा उपस्थिता प्राप्ता। स्वगृहागतां त्वां संभावयितुमागतेत्यर्थः ॥

**आर्द्रकेसरसुगन्धि ते मुखं रक्तमेव नयनं स्वभावतः।**
**अत्र लब्धवसतिर्गुणान्तरं कं विलासिनि मधुः करिष्यति ॥ ७६ ॥**

१ चन्द्रमुखि. २ पश्य तारया; योग्यतारया. ३ पाण्डु. ४ प्रकृतिजप्रसादयोः; प्रतिकृतिप्रसन्नयोः. ५ उपागता; समागता. ६ मत्तरक्तनयनम्; प्रान्तरक्तनयनम्; मत्तमेव नयनम्. ७ किम्. ८ मदः.

आर्द्रेति ॥ हे पार्वति, इदं ते स्वभावतः आर्द्रकेसरसुगन्धि सरसकेसरसुगन्धि । 'गन्धस्येत्–' इत्यादिनेकारः । मुखम् । रक्तं एव नयनम् । हे विलासिनि विलसनशीले, अत्र त्वन्मुखे लब्धवसतिः लब्धानुप्रवेशो मधुः मद्यं कं गुणान्तरं गुणविशेषं करिष्यति । न कंचिदित्यर्थः । केसरसौगन्ध्यादिगुणानां त्वन्मुखे स्वभावसिद्धत्वान्मधुनः फलं न पश्यामीत्यर्थः । 'अर्धर्चाः पुंसि च' इति पुंलिङ्गत्वम् । यदाहुः—'मकरन्दस्य मद्यस्य माक्षिकस्य च वाचकः । अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः' इति ॥

**मान्यभक्तिरथ वा सखीजनः सेव्यतामिदमनङ्गदीपकम् ।**
**इत्युदारमभिधाय शंकरस्तामपाययत पानमम्बिकाम् ॥ ७७ ॥**

मान्यभक्तिरिति ॥ अथ वा सखीजनः [ मान्यभक्तिः ] मान्या भक्तिर्यस्य स तथोक्तः । सखीजनः स्वीकार्य इत्यर्थः । ततः अनङ्गदीपकं इदं वक्ष्यमाणं पानं सेव्यतां इति उदारं चतुरं अभिधाय शंकरः तां अम्बिकां पीयत इति पानं मद्यं अपाययत पाययामास । पिबतेर्ण्यन्ताल्लुङि तङ् । पिबतेः प्रत्यवसानार्थादणि कर्तुः कर्मत्वम् । पिबतेर्निगरणार्थत्वेऽपि 'न पादम्य–' इति परस्मैपदप्रतिषेधः । ननु मान्यभक्तिरित्यत्र कथं पुंवद्भावः । 'अप्रियादिषु' इति निषेधाद्भक्तिशब्दस्य प्रियादिपाठात् । नैष दोषो नपुंसकपूर्वपदत्वात् । यथाह वृत्तिकारः—'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात्सिद्धम्' इति । भोजराजस्तु—'भज्यत इति कर्मसाधनस्यैव प्रियादिपाठतया दृढभक्तिरिति न तु भजनं भक्तिरिति भावसाधनस्य । अतोऽत्रास्त्रीपूर्वपदत्वेऽपि न दोषः' इत्याह ॥

**पार्वती तदुपयोगसंभवां विक्रियामपि सतीं मनोहराम् ।**
**अप्रतर्क्यविधियोगकारितामाम्रतेव सहकारतां ययौ ॥ ७८ ॥**

पार्वतीति ॥ पार्वती [ तदुपयोगसंभवाम् ] तस्य मद्यस्य उपयोगेन पानेन संभवः यस्याः तां विक्रियां अपि सतीं मनोहरां विकारत्वेऽपि रम्यामित्यर्थः । विक्रियां मदविकारं ययौ । अत्र विक्रियाशब्दस्यावृत्तिः । कथमिव । आम्रता चूतत्वं [ अप्रतर्क्यविधियोगकारितां ] अप्रतर्क्येण दुरूहेण विधियोगेन दैवबलेन कारितां सहकारतां इव सौरभाढ्यं अवस्थाविशेषमिव । 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभः' इत्यमरः । यथा चूतत्वलक्षणविकृतिः शोभते तथा तस्या अपि मदविकारोऽशोभतेत्यर्थः ॥

**तत्क्षणं विपरिवर्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः ।**
**सा बभूव वशवर्तिनी द्वयोः शूलिनः सुवदना मदस्य च ॥ ७९ ॥**

---

१ दीपनम्. २ उपभोग. ३ सताम्. ४ निर्मिताम्; निर्मिता. ५ नयना. ६ तत्क्षणे. ७ विपरिवृत्तलज्जयोः. ८ वाञ्छतोः. ९ वशवर्तिका.

तदिति ॥ सा सुवदना पार्वती तत्क्षणं तदैव विपरिवर्तितह्रियोः निवर्तितलज्जयोः शयनं तल्पं नेष्यतोः प्रापयिष्यतोरिद्धः प्रवृद्धो रागोऽनुराग आरुण्यं च ययोः इद्धरागयोः शूलिनः प्रियतमस्य मदस्य च इति द्वयोः वशे वर्तत इति वशवर्तिनी अधीना बभूव ॥

मदपारवश्यं तावदाह—

घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् ।
आननेन न तु तावदीश्वरश्चक्षुषा चिरमुमामुखं पपौ ॥ ८० ॥

घूर्णमानेति ॥ ईश्वरः घूर्णमाननयनं भ्राम्यन्नेत्रं स्खलत्कथं स्खलद्वचनं स्वेदबिन्दुमत् स्वेदयुक्तं अकारणस्मितं आकस्मिकहासयुक्तं उमामुखं तावत् । आतृष्णापगमामित्यर्थः । आननेन मुखेन न पपौ । न चुचुम्बेत्यर्थः । किं तु चिरं चक्षुषा पपौ । तृष्णयाद्राक्षीदित्यर्थः । तस्या मदपारवश्यं दृष्ट्वा मुदं तावदन्वभूदित्यर्थः ॥

संप्रति प्रियवशंवदत्वमाह—

तां विलम्बितपनीयमेखलामुद्वहञ्जघनभारदुर्वहाम् ।
ध्यानसंभृतविभूतिसंभृतं प्राविशन्मणिशिलागृहं हरः ॥ ८१ ॥

तामिति ॥ हरः विलम्बितपनीयमेखलां विस्रंसिहेमरसनां [ जघनभारदुर्वहां ] जघनभारेण दुर्वहां तां पार्वतीं उद्वहन् [ ध्यानसंभृतविभूतिसंभृतं ] ध्यानसंभृतया संकल्पमात्रसिद्धया विभूत्या भोगसाधनेन संभृतं संपूर्णं मणिशिलागृहं प्राविशत् । रिरंसुरिति भावः ॥

तत्र हंसधवलोत्तरच्छदं जाह्नवीपुलिनचारुदर्शनम् ।
अध्यशेत शयनं प्रियासखः शारदाभ्रमिव रोहिणीपतिः ॥ ८२ ॥

तत्रेति ॥ तत्र मणिभवने [ हंसधवलोत्तरच्छदं ] हंसवद्धवल उत्तरच्छदः प्रच्छदपटो यस्य तत्तथोक्तं [ जाह्नवीपुलिनचारुदर्शनं ] जाह्नवीपुलिनमिव चारुदर्शनं शयनं शय्यां रोहिणीपतिः चन्द्रः [ शारदाभ्रं ] शरदि भवं शारदमभ्रं मेघ इव । शरद्ग्रहणं धावल्यार्थम् । प्रियासखः सन् । प्रियया सहेत्यर्थः । अध्यशेत शयितवान् । ' अधिशीङ्स्थासां कर्म ' इति कर्मत्वम् । रोहिणीग्रहणसामर्थ्यादिन्दोरभ्रारोहणे रोहिणीसाहित्यमनुसंधेयम् ॥

क्लिष्टचन्द्रमदयैः कचग्रहैरुत्पथार्पितनखं समत्सरम् ।
तस्य तच्छिदुरमेखलागुणं पार्वतीरतमभूदतृप्तये ॥ ८३ ॥

---

१ स्खलद्वचम्; स्खलत्कथम्. २ संभृततितिविभूतिरीश्वरः; संभृनिविभूतिसंभृतम्; संभृतिविभूति-शोभितं–गोचरम्. ३ रहः. ४ क्लिष्टकेशमवलुप्तचन्दनम्. ५ व्युत्पथार्पितः व्यस्तयार्पित. ६ न तृप्तये.

क्लिष्टेति ॥ अदयैः निर्दयैः कचग्रहैः केशाकर्षणैः क्लिष्टचन्द्रं पीडितहरचन्द्रं [ उत्पथार्पितनखं ] उत्पथमुन्मर्यादमर्पिता नखा यस्मिंस्तत् समत्सरं अन्योन्यविजिगीषापूर्वकं [ छिदुरमेखलागुणं ] छिदुराः स्वयमेव छिद्यमाना मेखलागुणा यस्मिंस्तत्तथोक्तम् । ' विदिभिदिछिदेः कुरच् ' इति कुरच्प्रत्ययः । ' कर्मकर्तरि ' इति काशिका । तत् पार्वतीरतं तस्य ईश्वरस्य अतृप्तये अभूत् । तृप्तये नाभूदिति भावः ॥

केवलं प्रियतमादयालुना ज्योतिषामवनतासु पङ्क्तिषु ।
तेन तत्परिगृहीतवक्षसा नेत्रमीलनकुतूहलं कृतम् ॥ ८४ ॥

केवलमिति ॥ प्रियतमादयालुना केवलम् प्रियतमायां दययैव । तस्येश्वरस्याSसौकुमार्यादनवरतं सुरतसाहिष्णुत्वात् । न तु स्वयं तृप्त्येत्यर्थः । तत्परिगृहीतवक्षसा तया पार्वत्याश्लिष्टवक्षसा तेन ईश्वरेण ज्योतिषां नक्षत्राणां पङ्क्तिषु अवनतासु सतीषु । पश्चिमायामित्यर्थः । नेत्रमीलनकुतूहलं कृतम् । निद्रा स्वीकृतेत्यर्थः ॥

स व्यबुध्यत बुधस्तवोचितः शातकुम्भकमलाकरैः समम् ।
मूर्छनापरिगृहीतकैशिकैः किंनरैरुषसि गीतमङ्गलः ॥ ८५ ॥

स इति ॥ बुधस्तवोचितः विद्वत्स्तोत्रार्हः सः हरः उषसि प्रभाते । [ मूर्छनापरिगृहीतकैशिकैः ] स्वराणामारोहक्रमो मूर्छना । ' क्रमयुक्ताः स्वरास्तत्र मूर्छना परिकीर्तिता ' इति भरतः । तया मूर्छनया परिगृहीतकैशिकैः स्वीकृतरागविशेषैः किंनरैः गीतमङ्गलः सन् । शातकुम्भकमलाकरैः समं कनकपद्माकरैः सह । ' तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम् ' इत्यमरः । व्यबुध्यत विबुद्धवान् । बुध्यतेर्दैवादिकात्कर्तरि लङ् । अत्र बुध्यतेर्जागरविकासयोर्बोधयोः श्लेषनिमित्तकाभेदाध्यवसायमूला सहोक्तिरलंकारः ॥

तौ क्षणं शिथिलितोपगूहनौ दंपती रचितमानसोर्मयः ।
पद्मभेदनिपुणाः सिषेविरे गन्धमादनवनान्तमारुताः ॥ ८६ ॥

ताविति ॥ शिथिलितोपगूहनौ शिथिलितालिङ्गनौ । जाया च पतिश्च दंपती । जायाशब्दस्य दंभावो निपातितः । तौ शिवौ रचितमानसोर्मयः । मानसे सरसि रचिततरङ्गा इत्यर्थः । पद्मभेदनिपुणाः । पद्मभेदपिशुना इति यावत् । विकाससूचका इत्यर्थः । गन्धमादनवनान्तमारुताः क्षणं सिषेविरे ॥

ऊरुमूलनखमार्गराजिभिस्तत्क्षणं हृतविलोचनो हरः ।
वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत् ॥ ८७ ॥

---

१ प्रतिगृहीत. २ तया निशाक्षये. ३ वंशिकैः. ४ समुपगीत. ५ प्रशिथिलोप. ६ चलित. ७ पिशुनाः. ८ पङ्क्तिभिः. ९ संचयम्.

ऊर्वीति ॥ तत्क्षणं मारुतवीजनसमये [ ऊरुमूलनखमार्गराजिभिः ] ऊरुमूले नखमार्गराजिभिर्नखपदपाङ्क्तिभिः । मरुता प्रसारितवस्त्रतया प्रकाशिताभिरित्यर्थः । लुलितविलोचनः आकृष्टदृष्टिः हरः प्रशिथिलस्य वाससः संयमं बन्धनं कुर्वतीं प्रियतमां अवारयत् ॥

स प्रजागरकषायलोचनं गाढदन्तपदताडिताधरम् ।
आकुलालकमरंस्त रागवान्प्रेक्ष्य भिन्नतिलकं प्रियामुखम् ॥ ८८ ॥

स इति ॥ रागवान् रागी सः हरः [ प्रजागरकषायलोचनं ] प्रजागरेण कषायलोचनं रक्तनेत्रं [ गाढदन्तपदताडिताधरं ] गाढैर्दन्तपदैर्दन्तक्षतैस्ताडिताधरं आकुलालकं भिन्नतिलकं प्रियामुखं प्रेक्ष्य अरंस्त अन्वरज्यत । तादृङ्मुखदर्शनमेव तस्योद्दीपकमित्यर्थः ॥

तेन भङ्गिविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम् ।
निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम् ॥ ८९ ॥

तेनेति ॥ तेन हरेण [ भङ्गिविषमोत्तरच्छदं ] भङ्गिभिर्भङ्गैर्विषमो निम्नोन्नतः उत्तरच्छदः प्रच्छदपटो यस्मिंस्तत् । [ मध्यपिण्डितविसूत्रमेखलं ] मध्ये पिण्डिता पुञ्जीकृता विसूत्रमेखला छिन्नरसना यस्मिंस्तत्तथोक्तं [ चरणरागलाञ्छितं ] चरणयोः रागेण लाक्षारागेण लाञ्छितं चिह्नितं शयनं निशात्यये प्रभाते निर्मले अपि । सूर्योदये सत्यपीत्यर्थः । न उज्झितं न त्यक्तम् । अत्र देव्याः सकलसुरतोपचारसंपन्नत्वं पुरुषायितं सूच्यते ॥

स प्रियामुखरसं दिवानिशं हर्षवृद्धिजननं सिषेविषुः ।
दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदितः ॥ ९० ॥

स इति ॥ सः हरः हर्षवृद्धिजननं सुखातिशयकारणं प्रियामुखरसं अधरामृतं दिवा च निशि च दिवानिशम् । द्वन्द्वैकवद्भावः । सिषेविषुः सेवितुमिच्छुः सन् । [ विजयानिवेदितः ] विजयानाम्नी काचिद्देव्याः सखी तया निवेदितः । एतदर्थमागतमिति ज्ञापितोऽपीत्यर्थः । दर्शनप्रणयिनां अदृश्यतां आजगाम । दर्शनं न ददावित्यर्थः ॥

समदिवसनिशीथं सङ्गिनस्तत्र शंभोः
शतमगमदृतूनां सार्धमेका निशेव ।
न स सुरतसुखेभ्यश्छिन्नतृष्णो बभूव
ज्वलन इव समुद्रान्तर्गतस्तज्जलौघैः ॥ ९१ ॥

---

१ परिताडिता. २ अपास्तचित्रकम्. ३ भिन्न. ४ सुख. ५ निवेदनात्. ६ साग्रम्. ७ स; तु. ८ सुखेषु. ९ तज्जलेभ्यः; तज्जलेषु.

समेति ॥ निशीथोऽत्र निशामात्रलक्षकः । **समदिवसनिशीथं** तुल्याहर्निशं यथा तथा **तत्र** तस्यां पार्वत्यां **सङ्गिनः** आसक्तस्य । रात्रिंदिवं रममाणस्येत्यर्थः । **शंभोः** शिवस्य **सार्धं** अर्धेन सहितं **ऋतूनां शतं** पञ्चाशदुत्तरं मानुषमानेन पञ्चविंशतिवर्षाणि । **एका निशेव अगमत्** । **सः** शंभुः **समुद्रान्तर्गतः** समुद्रस्यान्तर्वृत्तिः **ज्वलनः** वडवाग्निरिव **तज्जलौघैः** तस्य समुद्रस्य प्रवाहैः **इव सुरतसुखेभ्यः छिन्नतृष्णः** वृत्ताभिलाषः **न बभूव** । किं तु तत्र तस्य तृष्णा चिरमवर्धतेत्यर्थः ॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितया
संजीविनीसमाख्यया व्याख्यया समेतः श्रीकालिदासकृतौ
कुमारसंभवे महाकाव्ये उमासुरतवर्णनं
नामाष्टमः सर्गः ॥

---

समाप्तं कुमारसंभवम् ।

---

अथ

# कुमारसंभवस्थश्लोकानुक्रमणिका ।

# KUMARASAMBHAVA

## NOTES

———:o:———

### Canto I.

कुमारसंभवम्—कुमारस्य संभव: the birth of Kumâra or Kárttikeya; स एवाभेदोपचारात् कुमारसंभवं ( also ०संभव: ) काव्यं, the same denotes the composition descriptive of it by 'the transference of an epithet.' *Cf.* रघुवंश, रत्नावली &c.; see Sid.-Kau. on Pâṇ. IV. 3. ९7. It is not a good way to take this as कुमारस्य संभवो यस्मिन् ( काव्ये ), a व्यधिकरण बहु० being ungrammatical; also because संभव has to be taken in the sense of संभववर्णन

Sl. 1. अस्ति &c.—A poet may introduce a poem by invoking a blessing ( आशीः ) on his readers or the audience, or by a salutation ( नमस्क्रिया ) to his favourite deity, or by indicating the subject ( वस्तुनिर्देश ) at once, as here. See Malli. The letter अ as representing Vishṇu ( अकारो विष्णुरुद्दिष्टः; see our note on प्रणव Ragh. I. 11 ) is auspicious ( Mângalika ). उत्तरस्यां दिशि—That is the region to the north of Central India ( मध्यदेश ) which is considered as the land of gods and therefore holy *Cf infra* V. 45. देवतात्मा—having a divine being for its presiding or animating deity ( *i. e.* who is a deity himself ) and so having another and a divine form as distinguished from the *Sthâvara* form. The purpose served by this epithet is explained by Malli. ( एतेनास्य...सिद्धि. *i. e.* capacity to discharge the functions of a living being ). हिमालयः—हिमवान्हेमकूटश्च निषधस्तस्य दक्षिणे । नीलश्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ॥ V. P. One Commentator strangely derives this as हि निश्चितं स्फुटं मा लक्ष्मीस्तस्या आलयः । अधिराजः—a Prâdi Tat. comp. Châr. dissolves it as अधिकस्य राजा. तोयनिधिः—तोयानि निधीयन्तेऽस्मिन्। अवगाह्य—According to the grammarian Bhâguri the अ of अव and अपि is dropped; and according to the परिभाषा 'आचार्यग्रहणे च विभाषा वक्तव्या' *i. e.* when a rule is stated mentioning the name of an Âchârya, the rule becomes optional; so पिधान, अपिधान, &c. See H. Gr. p. 220, foot-note. *Cf* पूर्वापरसमुद्रावगाढः सानुमान् Sâk. VII. p. 181; अश्वाः स्यपुर्वेहुमतीमतिरोचमानाः । Sis. V. 4; मन्दारमाला हरिणा पिनद्धा । Sâk. VII 2; वितस्य शार्ङ्गं कवचं पिनह्य । Bhaṭṭi. III. 47. मानदण्डः—The great length of the mountain justifies the *Utprekshâ*. मान—may be taken to mean, as done by Malli.; (1) measure; or (2) the instrument of measuring. Or मानं may

mean the whole measure, according to the Śruti यावन्मात्रा पृथिवी तावन्मात्रो हिमालयः । यावन्मात्रो हिमालयस्तावन्मात्रा पृथिवी ।

Śl. 2. सर्वशैलाः—For the comp. see Malli. and H. Gr. § 227 (*g*). वत्सं—shows the importance of Himálaya as being the chief of them ( ranking only next to Meru ). See the Śl. from B. P. quoted on the next page सर्वे स्वसुरूपवत्सेन &c. मेरौ—According to the Purâṇas, Meru, the home of the gods, forms the central point of the universe, all the planets revolving round it; it is in shape like the cup or seed-vessel of a lotus, the different Dvîpas spreading out from it like leaves. It is formed of gold, having jewels on it, and is 84,000 *Yojanas* in height, 16,000 of which are buried in the earth. The Ganges falls from heaven on its peak and thence flows to the sea. Its summit is the residence of Brahmâ and the meeting-place of the gods, Ṛishis, Gandharvas &c. मेरुर्मध्ये भुवनानां च मतो Kál. P. मेरुस्तु शुशुभे दिव्यो राजवत्समधिष्ठितः । आदित्यतरुणाभासो विधूम इव पावकः ॥ योजनानां सहस्राणि चतुरशीतिरुच्छ्रितः । प्रविष्टः षोडशाधस्तादष्टाविंशतिविंशतिः । विस्तारात्त्रिगुणस्तस्य परिणाहः समन्ततः ॥ Mat. P. The learned author of the A. H. V. shows that Meru is the terrestrial North Pole and quotes the following verses from the Mah. Bhâr. Van. Ch. 163 as describing its Polar charac- teristics—एनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवम् । प्रदक्षिणमुपावृत्य कुरुतः कुरुनन्दन ॥ ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः । परियन्ति महाराज गिरिराजं प्रदक्षिणम् ॥ स्वतेजसा तस्य नगोत्तमस्य महौषधीनां च तथा प्रभावात् । विभक्तभावो न बभूव कश्चिदहर्निशानां पुरुषप्रवीर । बभूव रात्रिर्दिवसश्च तेषां संवत्सरेणैव समानरूपः ॥ See A. H. V. pp. 67, 69. भास्वन्ति—Ekaśesha Dvan.; see com.

पृथूपदिष्टाम्—Pointed out as possessing such-and-such charac- teristics by Pṛithu; *i. e.* as being in the form of a cow; see com. 'Advised to be favourable to the act of milking' (जनानामभीष्टदोहनार्थं त्वयानुकूलया भवितव्यमित्युपदेशमकारः । ) One Calc. Com. interprets this as—पृथुः उपदिष्टः दोहनकर्मणि नियुक्तो यया ताम्. Pṛithu was a mighty king, the son of Vena, son of Aṅga. Vena, by his wicked deeds and blasphemous language towards Vishṇu, offended the sages who killed him with their Huṃkâras ( इति तेऽसत्कृतास्तेन द्विजाः पण्डितमानिना । भग्नायां भव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ॥ हन्यतां हन्यतामेष पापः प्रकृतिदारुणः ॥ इत्थं व्यवसिता हन्तुमृषयो रूढमन्यवः । निजघ्नुर्हुंकृतैर्वेनं हतमच्युतनिन्दया ॥ B. P. IV. 4. 30, 31, 34. ) The sages afterwards rubbed the right arm of the dead king and from it sprang the majestic Pṛithu glowing like Agni. He was immediately declared king. From him the earth received the name Pṛithvî. The subjects of Pṛithu being troubled by a famine applied to the king for the edible fruits and plants which the earth had withheld.

**Pṛithu took up his bow to compel the earth to yield the supply. She, however, fled in the form of a cow, but submitted to the king afterwards and promised to yield the supply if a suitable calf were given to her so as to be able to secrete milk. Pṛithu, thereupon, made Svayambhû Manu the calf, milked the earth, and received the milk thus got in his hand, from which were produced corn, vegetables, fruits &c. For other particulars see Apte's Dic.; B. P. IV. Chs. 15-18. The Earth was also milked in their turns by the sages, mountains &c. *Cf.* इति प्रियं हितं वाक्यं भुव आदाय भूपतिः । वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः ॥ तथा परे च सर्वत्र सारमाददते बुधाः । ततोऽन्ये च यथाकामं दुदुहुः पृथुभाविताम् ॥ ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम । वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं शुचि ॥.........गिरयो हिमवद्वत्सा नाना धातून् स्वसानुषु । सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक् पयः । सर्वकामदुघां पृथ्वीं दुदुहुः पृथुभाविताम् ॥ B. P. IV. 18. 12-20. Also Mat. P. गिरिभिर्वसुधा दुग्धा रत्नानि विविधानि च । औषधानि च दिव्यानि दोग्धा मेरुर्महाबलः ॥ वत्सोऽभूद्धिमवांस्तत्र &c. Śl. quoted in S.-D. as an instance of the fault of the personal pronoun being understood.**

**Śl. 3. सौभाग्य—Der. सुभग+य; Vṛiddhi is substituted for the first vowels of both the members of a comp. ending in हृत्, भग &c. ( see com. ) before a nominal aff. having an indicative ण्, म् or क्. दुदुहुः—According to the commentators दुह् must be here taken in its causative sense, as मेरु was the milker ; दुदुहुरित्यन्तर्भावितण्यर्थत्वं द्रष्टव्यम् । अन्यथा मेरोर्दोग्धृत्वनिर्देशानुपपत्तेः । निमज्जति—merges in, is lost sight of, *i. e.* is not noticed or taken into account. इन्दु—इन्दु is ordinarily derived as उनत्त्यमृतमिति or उनत्ति चन्द्रिकया भुवनमिति, fr. उन्द् to ooze and the Uṇâdi aff. उ. In the Veda, however, it is said to mean a bright or sparkling drop of the Soma juice; *cf.* सुतास इन्दवः । Ṛig. I. 16. 16. It then came to signify a round little body, and finally became a name of the moon, like the word *Soma* itself: एको हि. &c.–*cf.* the humorous retort on this ( said to be composed by Achyutarao Modak, the celebrated rhetorician of Nâsik )—एको हि दोषो गुणसंनिपाते निमज्जतीन्दोरिति यो बभाषे । न तेन दृष्टं कविना यथैको ( नूनं न दृष्टं कविनाऽपि तेन* ) दारिद्र्यदोषो गुणराशि ( कोटि ) नाशी ॥ *Cf.* रहितरत्नचयान्न शिलोच्चयानपलताभवना न दरीभुवः । विपुलिनाम्बुरुहा न सरिद्वधूरकुसुमान् दधतं न महीरुहः ॥ Kir. V. 10.**

**Śl. 4. अप्सरसः—The courtesans of Heaven. अद्भ्यः सरन्तीत्यप्सरसः sprung from water: so called because, according to the**

---

*** It is said that the poet Ghaṭakarpara, being vanquished by Kâlidâsa in his Nalodaya as regards the composition of stanzas containing यमक, had this fling at the latter on this s'loka of the Kumârasambhava. कविनाऽपि तेन may also be read as कपि-नापितेन (a barber).**

Râmâyaṇa, they came out of the churned ocean—अप्सु निर्मथनादेव रसात्तस्माद्वरस्त्रियः। उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्॥ Or because they are supposed to bathe frequently. Although the word is generally used in the plural, it is also found used in the sing. ( as in the Bhâshya on Pâṇ. VIII. 4. 47 ) and dual ( अप्सरसाविति श्रुतिनिर्देशात् ); cf. Vik. अनप्सरेव प्रतिभासि. According to the Mah Bhâr. they are the daughters of Kâśyapa and Pradhá—इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम्। प्रधासूत महाभागा देवदेवर्षितः पुरा॥ For the principal *Apsarasas* see note on III. 17. विभ्रमार्थं मण्डनानि विभ्र०। विभ्रम is used here in the sense of विलास 'amorous sport.' 'Decorations which added grace to their amorous gestures.' *Cf* विलासिनीविभ्रमदन्तपत्रम् Ragh. VI. 17. The second sense given by Malli. following Dak. N., *viz.*, the misplacing of ornaments on the person through hurry and confusion, does not seem to be natural. It has been adversely criticized by the Com. Ar. संपादयित्रीं—The provider of, which supplies. बलाहक—a compound of the पृषोदरादि class. The comp. पृषोदर (पृषतः उदरं) is formed by the dropping of त्; so a comp. of irregular formation is explained by classing it under the head of पृषोदर ( Páṇ. VI. 3. 109 ); here वारि is changed to व and व to ल. ०च्छेदाः—संध्यावायुना विच्छिन्ना मेघाः. cf. दिनान्तसुग्रानिलभिन्नमेघम्। Ragh. XVI. II. अकालसंध्याम्—Twilight out of the proper time. The large mass of red minerals imparted a red hue to the clouds overhanging it, so that to a looker-on from a distance the whole scene, the mineral-covered peaks together with the clouds, presented an aspect of the evening sky. धातुमत्ता—The affix मत् is added प्राशस्त्ये, the excellence here consisting in the plentifulness of the minerals. *Cf.* for a similar description नवविनिद्रजपाकुसुमत्विषां द्युतिमतां निकरेण महाश्मनाम्। विहितसांध्यमयूखमिव क्वचिन्निचितकाञ्चनभित्तिषु सानुषु॥ Kir. V. 8. Śl. quoted in the Kâv.-Pr. VII. as an instance of the fault 'Obsoleteness.' The word मत्ता forming part of the word धातुमत्ता and signifying 'possession' has that meaning overpowered by the sense of 'intoxicated' which it usually has as the feminine of मत्त—अत्र मत्ताशब्दः क्षीबार्थेन निहतार्थः।

Śl. 5. आमेखलं—Here आ indicates limit inceptive ( अभिविधौ ) *i. e.* including the मेखला. मेखला—The middle part of a mountain. Avya. comp.; *cf.* पृथुनितम्बविलम्बिभिरम्बुदैः। Kir. V. 6. छायाम्—छायामिषे *V. l.*=छायां इषे 'in the month of Âśvina'.; but this does not seem to be the original reading. Kâli. is not likely to use such an obscure word. Besides there is no propriety of saying 'in Âśvina'; why not in Bhádrapada also. अधःसा०—Nar. reads ०गताः which seems to be better. आतपवन्ति—Perpetually exposed to the sun, being above

the region of clouds. सिद्धाः—देवयोनिविशेषाः (विश्वावसुप्रभृतयः Arun.) A class of semi-divine beings characterized by great holiness and purity and possessing the eight superhuman faculties or *Siddhis*, *viz.* अणिमा महिमा चैव लघिमा गरिमा तथा। प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः॥ (Sometimes कामावसायिता is mentioned instead of गरिमा ; see Apte's Dic ) They are said to inhabit the region between the earth and the sun. According to some their region is below the world of the moon, while the V. P. makes them occupy the region north of the sun and south of the seven Rishis. The poet, however, seems to refer here probably to those who had partially or fully acquired the eight Siddhis mentioned above by the practice of *Yoga* ( सिद्धिरेषां विद्यते ) and who lived on the mountain.

Śl. 6. धौत—*P. p. p.* of धाव् 1 P. A'. to wash, to run &c.; also धावित. The option is allowed by the अनित्यत्व ( not being absolutely binding ) of the rule यस्य विभाषा Páṇ. VII. 2. 15 (*i. e.* any root which takes इ optionally somewhere does not take इ before त). धूञ्‌ गात्रविक्षेपे इत्यत्र ईदित्करणं यस्य विभाषेत्यस्यानित्यत्वज्ञापनार्थम्। तेन धावितमिभराजधियेत्यादि सिध्यति। Bhaṭṭoji in his Manoramâ. द्विपाः—द्वाभ्यां ( with his trunk and mouth ) पिबतीति द्विपः। Huge elephants are supposed to develop pearls in their heads. See the verse quoted by Malli करीन्द्र &c. According to Nár. who reads द्विपेन्द्र for करीन्द्र this quotation is from अगस्त्य (who has written on रत्नपरीक्षा). These pearls are often described by poets as sticking to the nails of lions splitting open the temples of elephants. विदन्ति—The root विद् occurs in several conjugations; *cf.* सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे। विन्दते विन्दति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्॥ केसरिणां—For Himálaya's being the home of lions, *cf.* Ragh. IV. 72. किराताः—Name of a wild tribe or class of mountaineers like the Bhillas, Pulindas &c. and classed as Mlechchhas—भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः। Amar. The characteristics of a म्लेच्छ are गोमांसभक्षको यस्तु लोकबाह्यं च भाषते। सर्वाचारविहीनोऽसौ म्लेच्छ इत्यभिधीयते॥ This name is thus derived—किरं पर्यन्तभूमिमतन्ति गच्छन्तीति who live on the borders of hills or mountains. *Cf.* पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतम्। Ratn. II. 3. For further particulars see notes on śl. 15.

Śl. 7. कुञ्जरबिन्दु°—See Malli. Elephants when about fifty years old ( पञ्चाशद्वर्षदेशीयाः ) are said to have red spots appearing on their skin. The age of an elephant may be known from these. The characters on the barks resemble the red dots. The comp.

may also be taken as बिन्दुभिः शोणाः बिन्दुशोणाः; कुञ्जरा इव बिन्दुशोणाः. विद्याधरसुन्दरी--विद्याया मन्त्रादेः गुटिकाञ्जनादिविषयिण्याश्च धराः विद्याधराः kinds of demi-gods, thus described by Wilson—"A class of spirits who reside upon the loftiest peaks of the Himâlaya mountains, who possess superhuman longevity and faculties and the knowledge of what is passing beyond their presence. They have in many cases been mortals and are constantly connected with human beings in friendship and enmity, love and hate." Wilson's works Vol. IV. p. 115. The *Vidyádharas*, the *Kiṃnaras*, the *Kiṃpurushas* and the *Gandharvas*, so often mentioned as residing on the peaks of the Himâlayas and the mountain Hemakúṭa, a hill to the North of the Himâlayas, were probably some hardy races who on account of their superior strength, beauty of person, and the knowledge of magic, were at first looked upon with admiration and afterwards magnified into semi-divine beings by the A'ryas. अनङ्गलेख—Epistles expressive of love, often in verse ( मदनावस्थासूचकाः श्लोकगाथाः ).

Śl. 8. कीचक—Bamboos with holes which, as the wind passes through them, produce musical sounds. For a similar idea *cf.* स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम् । Ragh. II. 12: शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः संसक्ताभिस्त्रिपुरविजयो गीयते किंनरीभिः ॥ Megh. I. 58. The bamboos are here compared to flutes or pipes which the mountain fills with his breath in the shape of the wind blown from the mouth-like caves. किंनराः—कुत्सिता नराः केषांचिन्नरमुखाश्वकायत्वादन्येषामश्वमुखनरशरीरत्वात्; A Nitya-samâsa. So called because some have a human figure with the head of a horse, while others have a human head with the form of a horse. See Śiś. IV. 38. They are classed with the Gandharvas and are described as heavenly minstrels. Like the Yakshas, they are the attendants of Kubera and are described as the sons of Pulastya—राक्षसाश्च पुलस्त्यस्य वानराः किंनरास्तथा । यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः ॥ B. P. See Wilson's V. P. Vol. I. pp. 82, 87. तान—A kind of protracted tone giving rise to different tones and on which depend the *Râgas*; see Malli. The full śl. is द्विकत्रिकचतुष्काः स्युर्ज्ञेया वंशगताः स्वराः । अधोधस्तारतो ग्रामास्तानस्त्वंशस्वरो मतः ॥ अंशस्वरलक्षणे भरतः—रागो यस्मिन्निवसति यस्माच्चापि प्रवर्तते । नेता च तारमन्द्राणां योऽत्यर्थं चोपलभ्यते ॥ ग्राहोपन्यासविन्याससंन्यासन्यासगोचरः । अनुवृत्तश्च यश्चेह सोंऽशः स्याद्दशलक्षणः ॥ इति भरतः । *cf.* यथा तानं विना रागः Bv. I. 119. The number of these is said to be 49. विस्तार्यन्ते प्रयोगा ये मूर्च्छनाशेषसंभवाः । तानास्तेऽप्यूनपञ्चाशत्सप्तस्वरसमुद्भवाः ॥ स्थानम॰—*V. l.* wishes to take up the place of the singers, *i. e.* wishes to relieve them by

taking up the chorus &c. 'स्थानमद्रायी पार्श्वस्थगानविच्छेदकारकः ।' इति विश्वः ।

Śl. 9. कपोल॰—See Ragh. II. 37. सरल—देवदारुविशेष । °द्रुमाणां—सरलाश्च ते द्रुमाश्च । A Karm comp. According to some, such a comp. is not desirable. We should say तक्षकः सर्पः, रामो जामदग्न्यः, &c. The भाष्यकार says तर्हि इमौ द्वौ शब्दौ एकस्मिन्नर्थे युगपदवरुध्येते । वृक्षः शिंशपेति । नैतयोरावश्यकः समावेशः । &c. Some say such a comp should be taken as of the शाकपार्थिवादि class; सरलनामानो द्रुमाः सरलद्रुमाः इति कथंचित् शाकपार्थिवादित्वम् । Kaiyaṭa says such a comp. may be allowed to make the sense clear; विशेषणविशेष्ययोः सन्निधकतया अन्यतरोपादानमात्रेणेतराक्षेपसंभवे उभयोपादानं स्पष्टार्थम् । The poets use such compounds and the later grammarians justify them. See further on स देवदारुद्रुमवेदिकायां &c. III. 44. *Cf* अथ जयाय नु मेरुमहीभृतः &c. Kir. V. 1. सुरभीकरोति—न सुरभीणि असुरभीणि तानि सुरभीणि संपद्यमानानि करोति. A च्वि—formation.

Śl. 10. वनितासखानां—Mark the comp. which must be dissolved as Gen. Tat. according to Pâṇ. V. 4. 91. Had it not been for this restriction it would have been readily taken as a Bah. See our note on महिषीसखः Ragh. I. 48. अतैल॰—तैलेन पूर्यन्त इति तैलपूराः न तैल॰ अतैलपूराः । *Cf.* आसन्नोषधयो नेतुर्नक्तमस्नेहदीपिकाः । Ragh. IV. 75. सुरत॰—Malli. takes this as a Loc. Tat.; the authority for it is सप्तमी (a noun may be compounded with another noun in the Loc.) detached from the Sûtra सप्तमी शौण्डैः Pâṇ. II. 1. 40. It may also be taken as a comp. of the शाकपार्थिवादि class. सुरतार्थं सुरतोपयोगिनो वा प्रदीपाः. Quoted in Sar.-K. and S.-D. as an instance of Vibhâvanâ. According to Vámana this is a विशेषोक्ति; Káv. Sû. IV. 5. 23; he also remarks रूपकं चेदं प्रायेण. *Cf.* श्रीमल्लताभवनमोषधयः प्रदीपाः शय्या नवानि हरिचन्दनपल्लवानि । अस्मिन्रतिश्रमनुदश्च सरोजवाताः स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥ Kir. V. 28.

Śl. 11. शिलीभूत—न शिला अशिला; अशिला शिला संपन्नं शिलीभूतं a च्वि formation. इव—इवशब्दोऽयमुत्प्रेक्षाद्योतकः अचेतनेषु भयासंभवात् । हेतूत्प्रेक्षा चेयम् । N. दुर्वह—दुःखेन उह्यते । वोढुं वा शक्यं दुर्वहं; कृच्छ्रार्थे खल्; now see com. आर्ताः—*i.e.* by their weight.; *P. p. p.* of ऋ with आ. भिन्दन्ति—change, or abandon, give up; *i.e.* do not accelerate. अम्बमुख्यः—also ॰मुखाः.

Śl. 12. दिवाकर—*Upapada* Tat. दिवा भीतं—There is a side reference to the owl (दिवाभीत) which also does not venture out during day-time. अपि—though there was cause for making haste. ममत्वं—मम इत्यस्य भावः । Fr. मम (treated as an Avyaya

ममेति विभक्तिरूपो निपातः ) and त्वम्. ( Can it be originally a compound of मम त्वं thou art mine ? ). उच्चैःशिरसां—उच्चैः शिरो येषां ते उच्चैःशिरसः। Who ever seeks their protection— whether a good or a bad man—the noble-minded regard him as their own and extend their protection to him. *Cf.* Bg. V. 18.

This śl is quoted in the K.-Pr. as an instance of असुचितार्थता दोष or the fault in an Arthântaranyâsa called 'groundlessness' which amounts to improper signification. निर्विषयस्य (अर्थान्तरन्यासस्य) अप्युत्प्रेक्षाद्दूषणमनुचितार्थत्वमेव । Kâv.-Pradîpa. अत्र अचेतनस्य तमसो दिवाकरात् त्रास एव न संभवतीति कुत एव तत्प्रयोजितमद्रिणा परित्राणम् ।

Śl. 13. बालव्यजनैः—These are parts of the *insignia* of royalty. See Ragh. III. 16. चमर्यः—The Chamarî is a kind of cow or the Yak of Tartary ( it is a deer according to Amara, ) from the bushy tails of which *Châmaras* are made. The Chamarîs, by waving Châmaras over Himâlaya, showed that he was really a King. *Cf.* व्याधूयन्ते निचुलतरुभिर्मञ्जरीचामराणि । Vik. IV. 4.

Śl. 14. अंशुक—अंशून् सूत्राणि कायति or अंशवः विषयोऽस्य (अंशु + क) a thin garment of fine texture. For अंशुकाक्षेप *cf.* Megh. II. 7. यदृच्छया—या ऋच्छा अभिप्रायः ( wish ) यदृच्छा तया a Tat. of the मयूरव्यंसकादि class; accidentally; hence, without any effort on the part of the women. तिरस्करिण्यः—तिरस्करोतीति ( णिनिः ), तिरस्क्रियतेऽनया ( ल्युट् ) इति वा. There is no Vṛiddhi, by the परिभाषा—संज्ञापूर्वको विधिरनित्यः. The fig. here is परिणाम according to Malli. ; according to K.-P., which does not recognize परि० as a separate figure, it will be रूपक.

Śl. 15. भागीरथी—भगीरथस्येयं; तस्येदमित्यण्; so called because the river was brought down from heaven by Bhagîratha. ०शीकराणां वोढा—This leads to the inference that the breeze was cool. शीकरः—drops of water scattered by the wind; शीकरोऽम्बुकणाः स्मृताः । Amara. According to some सीकर also. अन्विष्टमृगैः किरातैः—The Kirâtas are hillmen living by hunting and clad in a dress made of peacock's feathers. In the Purânas they are mentioned along with the Mlechchhas and are described to be of a dark complexion, dwarfish in stature, with short arms and legs, projecting chin, broad flat nose, red eyes and tawny hair. In some passages they are described as fierce bow-men, clad in hides and living upon fruits and roots. भिन्नशिखण्डिबर्हः—Malli. understands that the wind agitates the peacock's feathers attached by

the Kirátas to their waists; but according to other commentators, the expression refers generally to peacocks in forests. This latter explanation is certainly preferable. The peacocks are particularly mentioned because they have a long plumage which can be easily acted upon by the wind. It also indicates the abundance of peacocks on the mountain and explains why the breeze was gentle. The wind, having met with obstruction from the peacocks' feathers in its passage, lost some of its force and became gentle. We have thus three different epithets to indicate respectively that the breeze was cool, fragrant and gentle. कविसमये वायुस्त्रिविधो वर्ण्यते । शीतो मन्दः सुरभिश्च। भागीरथीस्पर्शाच्छीतः। देवदारुस्पर्शात्सुरभिः । भिन्नशिखण्डिपिच्छत्वान्मन्दः । *cf.* Ragh. I. 38, II. 13; Śák. III. 5 ( शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।... पवनः ॥ ). Malli. says that the hunters wore girdles of peacocks' feathers round their waists to accelerate their motion, and the wind broke through them. How far the feathers could have quickened their motion is a question. Perhaps the Kirátas wore the feathers for the sake of ornamentation. The fig. of speech is स्वभावोक्ति.

Śl. 16. सप्तर्षि०—This is a संज्ञा ( name of a particular class of Ṛishis ) and so the comp. is allowed. The names of the seven Ṛishis generally given are-मरीचिरत्रिः पुलहः पुलस्त्यः क्रतुरङ्गिराः । वसिष्ठश्च महाभागाः सप्तैते ब्रह्मणः सुताः ॥ The Kâliká P. enumerates them thus—कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गोतमः । जमदग्निर्भरद्वाज एते सप्तर्षयो मताः ॥ They are described as चित्रशिखण्डिनः । *Cf* Pratâpamârtaṇḍa—मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्चेति सप्तैते ज्ञेयाश्चित्रशिखण्डिनः ॥ In the Śatapatha Brâh. and elsewhere they are mentioned as कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गोतमः । जमदग्निर्वसिष्ठश्च सप्तैते ऋषयः स्मृताः ॥ In another list Daksha is substituted for Vasishṭha. Astronomically represented the seven Ṛishis form the constellation Ursa Major or the Great Bear. The Ṛishis pluck the flowers for offering worship after they bathe in the Ganges. *Cf.* our note on V. 37. हस्ताव०—केचिद्वचिताविरयत्र पदभङ्गं कुर्वन्ति *i. e.* हस्तावचितो अशेषाणि । तत्र चर्मणि द्वीपिनं हन्तीतिवत् निमित्ते सप्तमी । Châr.; but this is far-fetched. By केचित् he probably refers to Ar. who says अथ वा सप्तर्षिहस्तावचितौ इति निमित्तसप्तमी । on which Nár. says—यत्र सूर्यः सप्तर्षिणामुपयोगार्थं समस्तानि पद्मानि प्रबोधयतीत्यर्थः। " उत्तमान्यरुणः प्रातर्मध्यमानि च भास्करः। प्रबोधयति पद्मानि अधमान्यातपो महान् ॥" From Jin.'s com. as quoted by D. विवस्वान्—विविधं वस्ते ( wearing a varied garment of light or rays ) or विवांसि rays अस्य सन्ति. अधः परिवर्तमानः–Because the course of the sun is below that of the

Saptarshis.* *Cf. infra* अधःप्रस्थापिताश्वेन समावर्जितकेतुना &c. and सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् । VI. 7, 19. The seven Ṛishis pluck the lotuses in the lakes on the highest peaks ( अग्रसरोरुह—otherwise this will lose its propriety ) of the Himâlayas. Therefore the path of the sun must be below the peaks. See B. G. Tilak's A. H. V. p. 147.

Śl. 17. यज्ञाङ्ग—The essential things at a sacrifice, such as the Soma plant, a Khadira post, Paláśa sticks and others. प्रजापति—Brahmâ. The name, however, is commonly applied to the ten patriarchs, the sons of Brahmâ, sprung from the different parts of his body while engaged in meditation, *viz.* मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । भृगुर्वसिष्ठो दक्षश्च दशमस्तत्र नारदः ॥ B. P. III. 2. 22. See Manu. I 32. कल्पितयज्ञभागं—This shows that the mountain was raised to the rank of the gods entitled to a share of the oblations offered at a sacrifice. °भागः—*V. l.* qualifies प्रजा°, who alloted the respective shares of deities. अन्वतिष्ठत्—स्था with अनु is used transitively; *cf.* VII. 1 *infra* and Ragh. VII. 32. Some needlessly take it in the sense of the causal ( अन्तर्भावितण्यर्थः ).

Śl. 18. मेरुसखः—Because one of the three mind-born daughters of the Pitṛis was given in marriage to Meru. मानसीं—The

* The late V. S. Chiplunkar finds fault with Malli.'s explanation and says that the peaks of the Him. need not be supposed to be above the sun's course. According to him the poet describes the sun who is yet below the horizon as touching the lotuses with his slanting rays and so causing them to bloom. ( See Kavi. P. pp. 49, 50 ). But it will be seen, that Malli. gives us the poet's meaning. We in modern times may well be shocked at what might appear to be an extraordinarily high flight of the poet's imagination. But in such cases, before we pronounce our judgment, we must look to the ideas that prevailed when a particular poet lived. In the first place, how can we make the sun below the horizon emit rays that could reach the top of the mountain and not the mountain itself? Secondly, such a description would apply more or less to any other mountain. Thirdly, such descriptions are not rare. In the Van. P. of the Mah. Bhâr. we are told that the mountain Vindhya also, in jealousy of Meru, once rose so high as to obstruct the path of the Sun and other heavenly bodies and the gods had to request Agastya to check the upward progress of the mountain. See our notes on Ragh. VI. 61. Here the poet follows the Purâṇas which confounded the mountain Himâlaya with Meru and transferred their characteristics to either. Thus the Ganges is described as falling on the tops of both; the Gandharvas &c. are said to reside on both ; and so on. See our note on Meru, *supra* I. 2.

idea is something like that of the 'production of Minerva from the brain of Jupiter.' B. K. पितॄणां—The Pitṛis, as divine beings, possessed the power of creating with an effort of the mind alone; originally probably the deified ancestors of men to whom Śráddhas were offered and balls of rice presented. Seven classes of these are mentioned:—अग्निष्वात्ताः सोमपाश्च हविष्मन्तस्तथोष्मपाः । सुकालिनो बर्हिषद् आज्यपाः पितरः स्मृताः ॥ In the Veda पितृ is an epithet of बृहस्पति, वरुण, प्रजापति, and especially of the heaven or sky. See note on पितॄणां, *infra* II. 14. पितॄणां कन्यां—The Pitṛis meant are अग्निष्वात्त and बर्हिषद्; by them स्वधा had two daughters, both well acquainted with theological truth, given to meditation and accomplished in perfect wisdom. Mená became the wife of Himálaya and Dhâriṇî was married to Meru. V. P. स्थितये—Here स्थिति may mean ' stability, perpetuality of the family by begetting progeny ; *cf.* प्रजायै गृहमेधिनां Ragh. I. 7, 69; or the observance of duties proper for a family. स्थितये स्थिरत्वाय न कामार्थमित्यर्थः । अनेनातिसत्त्वोत्तरत्वादस्य शान्तनायकत्वमुक्तम् । Nár. मेनां—मेना, derived from मन्; the other form मेनका ( see com. ) is छान्दस ( used in the Veda ); if used in ordinary language it must be taken as a word of the पृषोदरादि class. छन्दसीति मेनकेत्यपि भाषायां न प्राप्नोति । यदि स्विष्यते पृषोदरादित्वाद्भविष्यति । Kaiyaṭa. मुनीनामपि माननीयां—This shows that Menâ was superior to the Munis by her Yaugic and ascetic practices. It was thus from her mother that Párvatî got the power both physical and mental to practise the kind of hard penance she did to propitiate Śiva. See *infra* V. 28, 29. आत्मानुरूपां—अनुगतं रूपमस्या अनुरूपा; आत्मनोऽनुरूपा आ० ताम्. उपयेमे—यम् with उप is Âtm. in the sense of marrying or accepting in general. See Malli Mark the alliterations in this S'loka. अत्र कामान्यपोहाय कुलस्य स्थितय इत्युक्तमिति परिसंख्यालंकारः । किंचित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते । तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥ इति ॥ Nâr.

Śl. 19. कालक्रमेण—may better be taken with गर्भोऽभवत्. The Instr. is explained by the Várttika प्रकृत्यादिभ्य उपसंख्यानम् on कर्तृकरणयोस्तृतीया । Pâṇ. II. 3. 18. स्वरूप०—स्वरूप or सौन्दर्य includes the idea of bodily make also. The second sense given by Malli. does not seem to be natural. मनोरमं—The Commentator अवचूरि as quoted by D. says—मनोरमाभिधानं यौवनम् । कामं मनोरमं चैव जवरं जापरं तथा । चतुर्धा यौवनं प्रोक्तं कामशास्त्रविशारदैः ॥ यौवनं—*fr.* युवन् + अ ( अण् ) while यौवत means 'a collection', अ (अञ्) being added समूहार्थे. This s'l. is not found in the Triv. S. S. Ed. Probably it is an interpolation.

Sl. 20. नागवधू—The Nâgas, the offspring of Kâśhyapa and Kadru, are described as semi-divine beings having a human face and the tale of a serpent, and living in Pátála. They could also assume a perfect human form at will. Their chief town is called Bhogávatî. The Nága damsels were known for their beauty. °पभोग्यं—*i. e.* who was to have a Nága damsel for his wife. भोग्य *fr.* भुज्+य (ण्यत्); the other form is भोज्य by the rule भोज्यं भक्ष्ये. मैनाकं—The son of Menakâ (मेनकायां भवः । अण्)· said in the Mahábhárata to be situated north of Kailása. According to some it stood in Central India, and according to others between the Southern extremity of the Indian Peninsula and Ceylon. अम्भोनिधि°—When Mainâka saw Indra lopping off the wings of mountains he fled to the sea for protection which the latter readily granted, and so the two became friends. Indra's thunderbolt had no power over the waters of the sea. The reason of mentioning the brother is given by Malli.; *cf.* also Manu. III. 11.

पक्षच्छिदि—In the Kṛitayuga the mountains had wings—according to the Harivaṃśa the demon Hiraṇyâksha endowed them with wings—कदाचित्तु सपक्षास्ते पर्वता धरणीधराः । प्रस्थिता धरणीं त्यक्त्वा नूनं तस्यैव (*i. e* हिरण्याक्षस्य) मायया ॥; according to the Agnipuráṇa, Vishṇu gave them the wings—(see below ततोऽद्रयो &c.). Having got wings the mountains became refractory, moved from place to place and tormented the world and the people in general. On seeing this, Indra clipped their wings with his thunderbolt and fixed them in their proper places. *Cf.* ततोऽद्रयो जातपक्षा विष्णोश्चैव तु मायया । प्रस्थिता मेदिनीं त्यक्त्वा यथापूर्वं निवेशिता ॥ .........धरण्यां तु गिरीन् स्थाप्य स्वेषु स्थानेषु गोपतिः । चिच्छेद पविना पक्षान् सर्वेषां भुवि चारिणाम् ॥ एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः ॥ Agni P.; also Rámá.—पूर्वं कृतयुगे तात पर्वताः पक्षिणोऽभवन् । तेऽपि जग्मुर्दिशः सर्वा गरुडा इव वेगिनः । ततस्तेषु प्रयातेषु देवसंघा महर्षिभिः । भूतानि च भयं जग्मुस्तेषां पतनशङ्कया । ततः क्रुद्धः सहस्राक्षः पर्वतानां शतक्रतुः । पक्षांश्चिच्छेद वज्रेण ततः शतसहस्रशः ॥ See Sundar-Káṇ. I. 115-119. एकः सपक्षो मैनाकः सुरैस्तत्समये कृतः । H. V. । वृत्रशत्रौ—Vṛitra, a mighty demon, the leader of the Káleyas. Endowed with mighty power he discomfited the gods with Indra and drove them out of heaven. The gods, however, instructed by Brahmâ, got a mighty weapon with six sides, called Vajra, prepared out of the bones of Dadhîchi, with which Indra killed Vṛitra. The Vedic conception of Vṛitra (*lit.* the coverer, obstructer) is that of an imaginary malignant influence, the demon of darkness and drought, supposed to take

*Cf.* हन्तारं परसैन्यानां गोप्तारं त्रिदिवौकसाम् । दातारं शक्रलक्ष्म्याश्च महावीर्यपराक्रमम् ॥ Ś. P.

Śl. 53. अवासिते—*p. p. p.* of सो with अव. आत्मभूः—आत्मना स्वयमेव भवतीति; आत्मनो विष्णोर्वा भवतीति । गर्जित॰—Bṛihaspati's speech is compared to thunder on account of its breathing an air of fear and plaintive tone.

Śl. 54. कालः कश्चित् &c.—*i. e.*, a favourable time ; *cf.* तत्र वयं विजेष्यामो यदा कालः प्रदक्षिणः । B. P. X. Ch. 54. 16, as quoted by Nâr. The reason of this is thus given in Ś. P.—तपःफलविपाकस्तु तस्यासीदधुना महान् । Even God, who is bound by his laws, cannot punish any one unless his treasure of religious merit is exhausted. आत्मना—आत्मनः *v. l.* आत्मन इति कर्मणि षष्ठी । आत्मांशेनैवात्मानं न स्रक्ष्यामीत्यर्थः । *Cf.* भविष्यति भवत्कामः सहध्वं सुरपुंगवाः । Ś. P.

Śl. 55. विषवृक्षोऽपि—Nâr. quotes—यस्य स्पर्शनमात्रेण वायुसंस्पर्शनेन वा । म्रियन्ते जन्तवः सर्वे विषवृक्षः स कीर्तितः ॥ As the relation of the object and verb is expressed here by a particle, विषवृक्ष is put in the Nom. case, असांप्रतं being equivalent to अनर्हः ( न युज्यते ); see Malli.; अनभिहिते, कर्मणि द्वितीया ( Pâṇ. II. 3. 1–2 ). When the relation is not expressed, the object is put in the Acc.; but when it is expressed, the Nom. is used; and the relation is expressed by a verb, or a Kṛit or Taddhita aff., or a comp. अभिधानं तु प्रायेण तिङ्कृत्तद्धितसमासैः । तिङ्—हरिः सेव्यते । कृत्—लक्ष्म्या सेवितः । तद्धित—शतेन क्रीतः शत्यः । समास—प्राप्त आनन्दो यं स प्राप्तानन्दः । क्वचिन्निपातेनाभिधानं यथा विषवृक्षोऽपि &c.; सांप्रतमित्यस्य तु युज्यत इत्यर्थः । Sid.-Kau. The meaning of परिगणनं &c. ( in the quotation from Vámana, see com. ) is—the enumeration of the cases by which अभिधान takes place, as mentioned by the Vârtika तिङ्कृत॰, is प्रायिक, *i. e.*, in most cases, and is not exhaustive, hence निपातेनापि &c.; *cf.* मया तस्मै वरो दत्तो न हन्तव्यो ह्यसौ मम । विषवृक्षोऽपि &c. S'. P.

Śl. quoted in the Kávya-Pradîpa to show that in this, the word इदं ( in इतः इतः ) is restricted to the speaker by अपदेश ( the speaker's pointing to himself; अत्रापदेशेनेदंशब्दस्याभिधा वक्तरि नियम्यते ).

Śl. 56. इदं—*viz.*, exemption from death at the hands of anyone except the son of Śiva or a child seven days old. The penance practised by the demon is thus described—एवं कष्टतरं तस्य शृण्वतामपि दुःसहम् । तस्यैव शिरसस्तत्र तेजश्च निसृतं महत् ॥ तेनैव देवलोकास्ते दग्धप्राया बभूविरे । इन्द्रश्च भयमापेदे स्वपदं कर्षयिष्यति ॥ अत्यन्तदुःखमापन्नाः सर्वे देवास्तथा विभो । अकाण्डे चैव ब्रह्माण्डं संहरिष्यति वै प्रभुः ॥ यदि ब्रह्मा वरं ह्यस्य न दास्यति सुदुष्करम् । तथापि सर्वलोकानां नाशश्चैव भविष्यति ॥ as quoted by

Mr. Deshpande. The demon was to die as desired by him at the hands of the son of Śiva only:—त्वया च निर्मिते लोके मत्तुल्यो बलवान्न हि। शिववीर्यसमुत्पन्नः पुत्रः सेनापतिर्यदा। धृत्वा शस्त्रं क्षिपेन्मह्यं तदा मे मरणं भवेत्॥ Ś. P. शमितं—अशमितं v. l. qualifies तपः; तस्य तपः वरेण अशमितं सत् लोकान्दग्धुमलं हि अभविष्यदिति शेषः।

Śl. 57. सांयुगीनं—fr. संयुग a battle and aff. खञ् (इन) in the sense of 'an expert in'; see com; संमुखीनं—V. l. confronting or opposing; fr. संमुख+ईन (खः) by यथामुखसंमुखस्य दर्शनः खः; सर्वस्य मुखस्य दर्शनः संमुखीनः. उद्गद—V. l. with the mace raised. नीललोहितः—See Malli.; नीलं येन ममाङ्गं तु रक्ताक्तं लोहितं त्विषा। नीललोहित इत्येव ततोऽहं परिकीर्तितः॥ युध्यन्तमाहवे तं च महाबलपराक्रमम्। समर्थः को भवेज्जेतुं विना शंभुसुतं सुराः॥ Ś. P.

Śl. 58. देवः—Fr. दिव् to shine; not only this, but he is परं ज्योतिः (the source of all intelligence, knowledge and bliss) and hence तमःपारे. *Cf.* तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्। Bṛih. Up. IV. 4. 16. परिच्छिन्न—what is cut all round; hence, definitely or accurately known. प्रभावर्द्धिः—ऋद्धि excellence, excess; परिच्छिन्ना प्रभावर्द्धिर्यस्य सः. *Cf.* तवैश्वर्यं यत्नाद्यदुपरि विरिंचो हरिरधः परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः &c., *Mahimnastotra.*

Śl. 59. ते—You who wish to have a leader (ये इत्थं सेनानीसर्जनार्थिनः). शंभोः—शं सुखं भवति शंभुः; he who proves to be a source of happiness. The word is very appropriate here. Their labour will not be ill-spent. लोहवत्—A grammatical inaccuracy; here वत् is simply used in the sense of इव (लोहमिव); here उमारूप corresponds to अयस्कान्त and शंभोर्मनः to लोह. It is difficult to get the affix वत् in the sense intended here, as Malli. remarks; for according to the Sûtra quoted by Malli., there ought to be तुल्यक्रियत्व of the subject and its उपमान as in ब्राह्मणवदधीते; and so the meaning will be 'as iron would attract,' which is absurd. *Cf.* उमा श्रयति गौरीशं तत्परिग्रहणेच्छया। ततस्तत्र प्रयत्नं च कुरुध्वं विबुधेश्वराः॥ Ś. P.

Śl. 60. वा—अवधारणे Châr.; *cf. infra* III. 16, मूर्तिजल०—*cf.* अप एव ससर्जादौ तासु बीजमवासृजत्। Manu. I. 8. मम—प्रसंगात्स्वाश्रयचीतनायात्मनोऽभिधानम्। Châr.

Śl. 61. आत्मा—see com.; and आत्मा वै पुत्र उत्पन्न इति वेदानुशासनं; B. P. X. Ch. 78, 36. शितिº—शितिः कालः कण्ठः यस्य। It was the effect of the Hâlâhala poison which Śiva swallowed at the time of the churning of the milky ocean. एवमामन्त्र्य भगवान्भवानीं विश्वभावनः। तद्विषं जग्धुमारेभे प्रभावज्ञान्वमोदत॥ ततः करतलीकृत्य व्यापि हालाहलं विषम्। अभक्षयन्महादेवः कृपया भूतभावनः॥ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः।

यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ B. P. VIII. 7. 41-43. He is also called श्रीकण्ठ for this reason; धृतं कण्ठे विषं घोरं ततः श्रीकण्ठतामगात् । According to another account, Śiva's neck turned black on account of a stroke given by Indra with his thunderbolt—दत्तः प्रहारः कुलिशेन पूर्वं तवेशान सुरराज्ञातिवीर्यः । कण्ठे नैलं तेन ते यत्प्रवृत्तं तस्मात्ख्यातस्त्वं नीलकण्ठेति कल्प्यः ॥ While according to a third account the black colour of the neck was due to its being seized by Nârâyaṇa in a duel: ततः प्रसममाप्लुत्य रुद्रं विष्णुः सनातनः । जग्राह कण्ठे भगवान्नीलकण्ठस्ततोऽभवत् ॥ *Cf.* अद्यप्रभृति श्रीवत्सः शूलाङ्को मे भवत्वयम् । मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥ मोक्ष्यते—will liberate, set free; for the locks that were once braided were never let loose as the celestial ladies were in bondage. Probably their braids were roughly seized by the demon; *cf.* स्वर्गस्त्रैणकचग्रहं रचयितुं निःशङ्कमुद्युञ्जते । Pâr. P. II. 2; Ragh. X. 47.

Śl. 62. तिरोदधे—*cf.* कृष्णमेघस्तिरोदधे । Ragh. X. 48. आहित—Firmly laid, determined or fixed in mind. इत्युदाहृत्य तान्देवान् ग्रहाजः प्राविशत्प्रभुः । देवास्ते कृतकृत्यास्तु नमस्कृत्य ययुर्दिवम् ॥ S. P.

Śl. 63. तत्र—May mean (1) in Indra's heaven, *i. e.*, in the council of gods; or (2) to execute the business, as Malli. takes it. कंदर्पः—कं सुखं तत्र तेन वा दृप्यति । पचाद्यच् । पाकशासनः—पाकान् बालान् शास्तीति; it originally meant—the instructor or discipliner of the ignorant or illiterate, Indra being the god of infinite wisdom. In the Purâṇas Indra is described as the killer of the demon Pâka, brother of Bali. ( See B. P. VIII. 11 ) पाकं जघान तीक्ष्णाग्रैर्मार्गणैः कङ्कवाससैः । तत्र नाम विभुर्लेभे शासनत्वाच्छरैर्दृढैः । पाकशासनतां शक्रः सर्वामरपतिर्विभुः ॥ Vâm. P. कार्य०—कार्यसिद्धिविषये या त्वरा &c. *Cf.* तस्मिन्कार्ये विनिश्चित्य कंदर्पं सिद्धिदायकम् । मघवांस्तमुवाचेदं पुष्पबाणधनुर्धरम् ॥ S. P.

Śl. 64. सललित—Châr. reads सुललित and translates सुललिता विलसन्ती &c. शृङ्ग—Point or end. अनेन चापविशेषणेनास्मत्कार्यमसौ साधयिष्यत्येवेति शतमखस्य बुद्धिर्व्यन्यते । Nâr. पद—the marks left on the neck by. चूताङ्कु०—See III. 27. अनेन सहायसंपत्तिः सहायस्य स्वाधीनता च दर्शिता । Nâr. शतमख—The god of hundred sacrifices ( *i. e.* who owes his position to the performance of a hundred Aśvamedha sacrifices ). मख is a syn. of क्रतु which originally meant 'counsel, wisdom'; and Indra was the god of hundred wisdoms; *i. e.*, infinitely wise. क्रतु, however, came to mean 'a sacrifice' in post-Vedic times and the position of Indra was made dependent on the performance of a hundred Aś. sacrifices. See our note on शतक्रतु Ragh. III. 38. उपतस्थे—The Âtm. by उपाद्

देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम्। Vârttika on I. 3, 25; *i. e.*, in the senses of worshipping a deity, uniting or joining &c.; See com. *Cf.* मुखरमधुपमालाचारुमौर्वीसनाथं त्रिभुवनजययोग्यं चापमंसे दधानः। मुखमुदितविलासं वीक्षमाणः प्रियायाः सहमधुरिह मन्दं मन्दमायाति कामः॥ Pâr. P. II. 8.

---

## CANTO III.

Śl 1. मघवन्—An epithet of Indra. Originally this was a word of regular formation, fr. मघ a gift, present or wealth and वत् or वन्; one possessing riches or distributing gifts; the whole then signifying—'the munificent Indra *i.e.* the sun, the bestower of plentiful rain and thereby of wealth.' In post-Vedic times the term came to be applied to Indra and explained as मह्यते पूज्यते इति, irregularly derived by the Uṇâ. Sû. श्वन्नुक्षन्&c., from मह् to adore and the aff. अन् ( कनिन् ) with the augment न्.

त्रिदशाः—The gods. जन्मसत्ताविनाशाख्यास्तिस्रो दशा येषां or तृतीया यौवनाख्या दशा येषाम्; or the gods taken collectively; see Malli.; thirty standing for 33. According to the Śat. B. the gods are 33—"कतमे ते त्रयस्त्रिंशदिति अष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशदिति।" त्रिदशान्विहायेत्युक्त्या त्रिदशगतं गौरवमेकीभूतं कामगतमिति दर्शितम्। Ar. प्रयोजना &c.—प्रयोजनमपेक्षते इति प्रयोजनापेक्षि ( गौरवं ) तस्य भावस्तत्ता तया; or प्रयोजनमपेक्षितुं शीलमेषामिति प्रयोजनापेक्षिणस्तेषां भावस्तत्ता तया।

Śl. 2. आसन॰—Used adverbially. Malli. remarks शेषषष्ठया &c. The meaning of Śesha is कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिसंबन्धः। Sid.-Kau.; संनिकृष्टमासनं आसनसंनिकृष्टम्। आहिताग्न्यादिषु पाठात्साधुत्वम्। Ar. तद्यथा भवति तथा विसृष्ट॰. मिथः—अनेन मन्त्रगुप्तिर्दर्शिता। Nâr. प्राक्रमत—क्रम् with प्र and उप is Âtm. in the sense of 'beginning'; see com. समर्थौ तुल्यार्थौ प्रारम्भेऽनयोस्तुल्यार्थता। Sid.-Kau.; but प्रक्रामति goes, उपक्रामति comes. समर्थ means तुल्यार्थ; when the root क्रम् with प्र or उप has the same meaning, *viz.* आरम्भ, it takes तङ् ( is Âtm ).

Śl. 3. ज्ञातविशेष—He who knows the special merit of a person. ज्ञातविशेष इत्यनेनात्मन इतरेभ्य उत्कर्षो द्योतितः। (Châr.). By using this epithet Kâma compliments Indra on his readiness to appreciate merit and to show respect to those who deserve it. He says आज्ञापय as he knows that Indra could not have thought of him unless he had in view some business requiring his special service. *Cf.* पुरुषान्तरविदो महेन्द्रस्य Vik. I. Here ॰विशेष should not have been compounded, as पुंसां is left out; or the whole should have been compounded as ज्ञातपुंविशेष; but as the connexion can be plainly seen

the comp. may be allowed; and hence Malli.'s remark सापेक्षत्वे &c. लोकेषु—by this Káma shows that he has power over the three worlds. अनुमहं—Kâma feels particularly flattered, as he, of all the gods, was specially remembered by his chief. His speech is quite in keeping with court language. संवर्धितं—Malli notices the reading संवर्धितुं and remarks that if it is admitted an effort should be made to explain it by attaching a causal sense to the root without the termination; for if णिच् be added the form will be संवर्धयितुम्. आज्ञया—by getting a command from you; this is a polite way of saying 'what command of yours shall I execute.'

Śl. 4. पदकाङ्क्षिणा—Having been often employed in similar duties, this is Káma's first thought. He thinks that his master has some rival practising penance to wrest his post from him and asks the question accordingly. Indra is often represented as being alarmed whenever a mortal practises unusual austerities, lest he might aim at his post. *Cf.* अस्त्येतदन्यसमाधिभीरुत्वं देवानां Śák.; चरतः किल दुश्चरं तपस्तृणबिन्दोः परिशङ्कितः पुरा। प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्॥ Ragh. VIII. 79; also XIII. 39, 42. यावत्—Malli. takes this in the sense of यतः, but without stating authority; it may be taken in the sense of 'साकल्ये'—'will fully be' (भवति); or better with भवति giving it a future sense, by the rule यावत्पुरानिपातयोर्लट्। कार्मुकं—कर्मणे प्रभवति इति (कर्मन्+उक).

Śl. 5. असंमतः &c.—Now he says—Even if a man does not seek your post, but merely aims at *Moksha* and has not your approval, him I will fetter down to the world. मुक्तिमार्गं प्रपन्नः—seeking ब्रह्मविद्या, having renounced the world. See *supra* II. 51. *Cf.* तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्। Muṇḍ. I. 2. 12; ब्रह्मविदाप्नोति परं Tait. II. 1. 1; न जायते म्रियते वा विपश्चित्। Kâṭh. II. 18. &c. आरेचित—रेचन is the graceful raising of one eyebrow; Ar. quotes रेचितं पुनरेकस्या ललितोत्क्षेपणं भ्रुवः। Saṃgîta-Śâstra; or रेचिताभिः नर्तिताभिः sportively moved; आरेचितं नर्तितं स्यादिति भोजः। कटाक्षैः—विलासैः *v. l.* blandishments; amorous gestures *Cf.* D.-K. रेचितभ्रूलतैरपाङ्गवीक्षितैः &c. चतुर—beautiful, engaging, charming. *Cf.* I. 47; V. 49. असंमतः कस्तवेन्द्र मुक्तिमार्गमपेक्षते। तं सुन्दरीकटाक्षैस्तु बध्नाम्याज्ञापयस्व मे॥ Ś. P.

Śl. 6. This question refers to a future enemy (अनागतापत्प्रतीकारविषयः). उशनस्—Śukrâchârya, son of Bhṛigu and preceptor of the demons. In the Vedic as well as post-Vedic literature the epithet Kâvya 'the wise' is applied to him. He is also known as a writer on civil and religious law and is one of the authorities cited on civil polity. उशनसापि—न कश्चिन्नापनयते

पुमानन्यत्र भार्गवात् । इति दर्शनात् । Ar. नीति—Nîti is used here in a wider sense—that which gives rules for the conduct of human affairs or regulates the daily life of individuals enabling them to secure अर्थ and काम without infringement of religious law. राग—Love for carnal pleasures (clouding reason). अर्थधर्मौ—also धर्मार्थौ by the Várttika (on Páṇ. II. 2. 31) धर्मादिष्वनियमः। Sole attention to Kâma would destroy the other two. These are the three of the four objects of human pursuit, the forth being मोक्ष. पीडयामि—obstruct, overpower, *i. e.* whom shall I make a helpless sensualist? कस्य शत्रोरपि हरे धर्मार्थौ पीडयाम्यहम् । Ś. P.

Śl. 7. Next Kâma thinks that his master might have set his heart on a woman beyond his reach but whose love he seeks through his means; and hence this question. दुःखशीलां—दुःखं दुर्धर्षं शीलं स्वभावो यस्याः whose disposition is difficult to be challenged, who cannot be made to move from her vow; or habitually suffering the misery or hardships of; *cf.* दुःखशीले तपस्विजने Śák. VI. Or दुःख may mean दुःखकरं (शीलं यस्याः) giving pain to others on account of. स्वयंग्राह॰—This should be स्वयंग्रह; *cf.* स्वयंग्रहाश्लेषसुखेन निष्क्रयम् । Śiś. I. 50. Malli.'s view seems to be—In the sense of an alligator we have ग्राह alone; but in the sense of 'seizing &c.' we may have ग्रह or ग्राह. But this does not seem to be supported by the leading grammarians. By the rule विभाषा ग्रहः, ण (अ) is added to ग्रह् in the sense of 'an alligator' only, as the optionality is fixed, as remarked by Vâmana—व्यवस्थितविभाषा चेयम् । जलचरे नित्यं ग्राहः । ज्योतिषि नेष्यते तत्र ग्रह एव । This view is held by Haradatta and Bhaṭṭoji also. Some say—निरङ्कुशाः कवयः । others derive ग्राह by affixing घञ् or अच् to ग्रह् cau. in the primitive sense (स्वार्थण्यन्ताद्) स्वयं ग्रहो यस्याः सा स्वयंग्राहा; ग्रहे ग्राहः Amara.; or ग्रह् in the causal sense; ग्राह्यते असौ, घञ् being added कर्मणि; स्वयं ग्राहा स्वयंग्राहा सुप्सुपेति समासः; now see com. विषक्त—*V. l.* closely cast, or entwined. Malli. refers here to Indra's seduction of Ahalyâ.

Śl. 8. Now he forms a different conjecture and asks accordingly. कामिन्—भूयान् कामोऽस्त्यस्य; इन् shows excess; see Gr. मतुप् aff.; foot-note, भूमनिन्दाप्रशंसासु &c. सुरता॰—सुरते अपराधस्तस्मात् । सहसा॰—*V. l.* thoughtlessly. कोपना—कुप्यति तच्छीला । दृढानुतापं—Repentance for having slighted the prostration. प्रवालशय्या—one of the usual appliances for allaying the torment caused by love-affection.

Śl. 9. Lastly Kâma thinks that Indra might have got some demon to cope with and expresses his readiness to reduce him

to a helpless condition through the agency of the fair nymphs of heaven, his followers. वीर—He purposely uses this, lest Indra might feel offended at his telling him to cast off his Vajra. मोघीकृत°—न मोघममोघं अमोघं मोघं संपद्यमानं कृतं मोघीकृतं वाह्वोर्वीर्यं यस्य सः. *Cf.* वज्रं तव सुराधीश यत्कार्यं न करिष्यति । तत्करिष्यामि पुष्पास्त्रः सर्वासुरविमोहनम् ॥ Ś.–P.

Śl. 10. तव प्रसादात्—He pays his master a compliment, as is usual with subordinates; *cf.* सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः संभावनागुणमवेहि तमीश्वराणाम् । Śák. VII. 4. पिनाकपाणेः—And hence the more formidable; see com.; mark the contrast between this and कुसुमायुधोऽपि. पाति इति पिनाकः the bow of S'iva; according to some the trident or three-pronged spear of Śiva. धन्विनः—fr. धन्व + इन्; (अत इनि ठनौ इति इनिः); or धन्वन् + इन् (व्रीह्यादिभ्यादिनिः). Śl. referred to in the S.–D. to show that the epithet पिना° is fitly used here and not redundant; (अत्र तु विशेषप्रतिपत्त्यर्थमुपात्तत्वाद्युक्तमेव ।); and quoted in Kuv. as an instance of परिकर. *Cf.* Ś.–P. धैर्यच्युतिं करिष्येऽहं भवस्यापि तवाज्ञया । अन्येषां चैव देवानामसुराणां च का कथा ॥ and दनुजो वा मनुजो वा मुनिरपि वा मुग्धचन्द्रचूडो वा । सुरलोकसुन्दरीणां स भवतु बद्धः कटाक्षशृङ्खलया ॥ Pâr. P. II. 12.

Śl. 11. ऊरुदेशात्—the use of the word देश indicates the expanse of the thigh. संभावित—'honoured;' it was an honour to the foot-stool that Indra placed his foot on it. Some read संमानित. आखण्डलः—आखण्डयति परबलानि, the slayer of the enemy's armies; or अखण्डमैश्वर्यं ज्ञानं वा लाति इति अखण्डलः; अखण्डल एव आखण्डलः । 'अन्येषामपि दृश्यते' इति दीर्घः ।

Śl. 12. सर्वं—all that is contained in s'ls. 4–10. सखे—Mark how Indra flatters him by calling him a friend. *Cf.* III. 1. उपपन्नं—is proved to exist in; or proper in. कुलिशं—कुलौ in the hand शेते or कुलिनः पर्वतान् श्यति reduces the bulk of इति. कुण्ठं—कुण्ठो मन्दः क्रियासु यः Amara.; what is unable to perform its function; fr. कुण्ठ् 1. P. to be blunted. सर्वत्रोगामि—and hence superior to Kuliśa; qualifies °अस्त्रं. By this Indra indicates that he accepts Kâma's declaration of his power (as in प्रसीद विश्राम्यतु वीर वज्रं) as a statement of facts and not a mere vaunting on his part.

Śl. 13. अवैमि ते सारं—*Cf.* अवैमि तेऽनङ्ग वीर्यं हरधैर्यहरं परम् । Ś.–P. आत्मसमं–आत्मना समं my equal. भूधरतां—Sesha's supporting the earth is often referred to by Sanskrit poets; *cf. infra* ततः भुजङ्गाधिपतेः फणाग्रैः &c. III. 50; धर्त्री धरित्र्याः फणिना ततोऽधः । Śiś. VI. 25; किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत् । Mud. II.; Ragh. XV. 83 &c. कृष्णेन—by Vishṇu (in his divine form which is of immense

proportion ). *Cf.* Ragh. X. 7. शेष:—king of the Nâgas, see Vâsuki; *supra* II. 38. He has a thousand hoods. He is regarded as the emblem or personification of eternity and hence is called Ananta ( the infinite ). Vishṇu is represented as sleeping on him during the intervals of creation; *cf.* योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते । आस्तीर्य शेषमभजत्कल्पान्ते भगवान्प्रभुः ॥ Mârk.-P. See Ragh. X. 7; also during the four months beginning with the 11th of A'shâḍha to the 11th of Kártika S'uddha.

Śl. 14. आशंसता—Here शंस् with आ must be taken in the sense of 'declaring.' See Malli. who criticizes Nâtha's comment as wrong. शंस् with आ in the sense of इच्छा or soliciting or hoping is A'tm., while the meaning याच्ञा or 'seeking' is without authority. अनयोरभावादयोगाच्च means—these two meannings do not exist and do not suit in कुर्यां हरस्यापि &c. Ar. takes it as आ ईषत् शंसता । ईषद्वचनमत्र तदेव देवकार्यमिति निश्चयाभावात् । गति— The effective fall on; power to hit. निबोध—We have this again in V. 52. यज्ञांशभुजां—The word is significant: the gods specially suffered because their sacrificial portions were obstructed from reaching them by Târaka; see *supra* II. 46. उच्चैस्तरामि॰—*v. l.* see *foot-note*; the highest object of the gods rests herein, *i.e.*, in Śiva's being induced to marry.

Śl. 15. उशन्ति—The root वश् is a छान्दस root ( *i.e.* used in the Veda ); but it is sometimes used in ordinary language also; Kâli. has again used it in S'âk. VII. 20 ( भवनेषु रसाधिकेषु पूर्वं क्षितिरक्षार्थमुशन्ति ये निवासम् । ); *cf.* वष्टिभागुरिरल्लोपं &c. Sid.-Kau. निःस्वो वष्टि शतं &c. Śântiśataka. ब्रह्माङ्गभूः—It is difficult to know what this exactly means. Different commentators have given different interpretations. The meaning that would readily suggest itself to the mind is—'born of Brahmâ' ( and some commentators have taken it in that sense ब्रह्मणः अङ्गभूः, ब्रह्मणोऽङ्गाद्भूरुत्पत्तिर्यस्य *i. e.* रुद्र ); see our note on रुद्रः II. 26; and *cf.* स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान्महेश्वरः । Atharvaśira upanishad. Or, the source of the Vedas and their Upâṅgas; ( ब्रह्मवेदः अङ्गानि च तेषां भूः ). Châr. says—ब्रह्मा अङ्गभूः पुत्रो यस्य; which the poet may have intended, see *infra* V. 81. *Cf.* for the two meanings :—'भ्रुकुटीकुटिलात्तस्य ललाटात्परमेष्ठिनः ( ब्रह्मणः ) । समुद्भूतो महादेवः कुमारो नीललोहितः' ॥ and Śiva's words to Brahman—'त्वमात्मज्योतिः पुरुषो मम देहसमुद्भवः' । Kûrma Purâṇa. Malli. understands by this–Who is the repository of the Mantras सद्योजात and others, by having made the Nyâsa, *i. e.*, touching the six parts of the body हृदय and others and assigning deities to

them by repeating the proper Mantras; *cf.* अथ वा ब्रह्मणोऽङ्गानि पञ्च शैवसिद्धान्ते प्रोक्ता मन्त्रविशेषास्तेषामुत्पत्तिस्थानम्। आयात-ईशान-वामदेव--तत्पुरुष-सद्योजात-लक्षणानि पञ्चाङ्गानि। Sukhâvabodhaṭîkâ, as quoted by Mr. Deshpande. सद्योजात &c. ( *i.e.* their deities ) are simply शिवमूर्तिभेद्s. One Calcutta commentator suggests an optional interpretetion of the last two lines as—यद्वा स सेनानीः त्वदेकेषुनिपातेन साध्यः उत्पादनीयः। कीदृशः। ब्रह्मणा नियोजितः आत्मा यत्नो यस्मै सः। यतः स्वं ब्रह्माङ्गभूः। ब्रह्मणोङ्गाद्भरुत्पत्तिर्यस्य तथा।

ब्रह्मणि—ब्रह्मन्, the one supreme Ens, is, according to the Vedântins, the material and efficient cause of the universe. It is नित्य 'ever-lasting', शुद्ध 'pure', बुद्ध intelligent', and मुक्त 'unfettered by any conditions' (अस्ति तावन्नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्तिसमन्वितं ब्रह्म। Śâr.–Bhâ.). The two great texts (Mahâvâkyas) setting forth the nature of Brahman are सत्यं ज्ञानमनन्तं ब्रह्म (Tait.) and सत्यं विज्ञानमानन्दं ब्रह्म (Bṛih.). The word is derived from बृह् to be great,–what has become great, all-pervading. Or ब्रह्मणि may mean 'in the heart'. योजितात्मा–indicates his तपोवीर्यमहत्त्वं (śl. 13); hence त्वदेकेषु etc. *Cf.* तत्कुरुष्वामराणां च स्थितये त्रिदिवस्य च। हिमवच्छिखरं गत्वा यत्रास्ते भगवान्हरः। उमा गिरिसुता चैव तं च तस्यां नियोजय॥ S. P.

Śl. 16. प्रयतां—Self-restrained, pure; the adj. shows that Pârvatî is the proper person to win over Śiva who is यतात्मा, and Kâma's effort in that direction will not be vain. *Cf.* क्रिया हि वस्तूपहिता प्रसीदति. सैषक्षमेति—see II. 60.

Śl. 17. And these are favourable circumstances for our attempt; for, गुरोः &c. स्थाणु—Śiva. नित्यमव्यय एव तिष्ठतीति; from स्था+नु. He who exists for ever without change, the eternal one; or one who stands like a tree; *cf.* वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः। Śve.; also ततः प्रभृति विश्वात्मा न प्रसूते शुभाः प्रजाः। स्थाणुवन्निश्चलो यस्मात्तस्मात्स्थाणुरिति श्रुतः॥ अधित्यका—पर्वतस्यारूढं स्थलमाधि०; उपाधिभ्यां &c. (see com.), Pâṇ. V. 2. 34. त्यक is added to उप and अधि in these technical senses. These are instances of nouns formed from prepositions. अन्वास्ते—waits on; *cf.* अन्वासितमरुन्धत्या Ragh. I. 56 where Malli. explains अन्वासित by पश्चादुपवेशनेनोपसेवितम्. अप्सरसां–See notes on I. 4 *supra*. The Apsarases are generally mentioned as 12 in number; the principal of them are–घृताची मेनका रम्भा उर्वशी च तिलोत्तमा। सुकेशी मञ्जुघोषाद्याः कथ्यन्तेऽप्सरसो बुधैः॥ प्रणिधिः—प्रकर्षेण निधीयते ज्ञेयमत्र; *lit.* one to whom information to be culled is entrusted, and hence who can be trusted.

Śl. 18. अर्थोऽयं–Malli. seems to take अर्थ as referring to स्थाणुवशीकरण; it rather refers to देवकार्य *i. e.*, the gods' getting a leader,

by the birth of a son to Śiva (see śl. 16), while अर्थान्तर would mean Śiva's espousing Pârvatî; सिद्ध्यै indicating success in Kâma's inducing Śiva to love Pârvatî (रोचयितुं यतस्व). Chár. also says— सेनानीजन्मलक्षणोऽर्थः । Some read अर्थोत्तर for अर्थान्तर and take it as हे अर्थोत्तर धर्मार्थाभ्यामुत्तर काम । प्रत्यय—Ultimate cause; for this sense, *cf.* Ragh. X. 3. ( अतिष्ठत्प्रत्ययापेक्षसंततिः स चिरं नृपः । ) Śl. quoted in K. P. with the reading प्रत्ययमङ्गलक्ष्ये for प्र॰ मुत्तमं त्वां as an instance of the fault 'harshness of sound (cacophony)'. In this śloka which contains a solicitation, sweet words only should appropriately be used, but they are not. The conjunct consonants द्ध्यै (in सिद्ध्यै) and क्ष्ये (in लक्ष्ये) sound harsh to the ear. अङ्गलक्ष्ये *v. l.*–आत्मोत्पत्तये for its production.

Śl. 19. नाम—Malli. takes this संभावनायां; you only can be well expected to direct your weapon successfully. We may also take it प्राकाश्ये. 'It is well known;' it is acknowledged on all hands. For Indra is speaking here assertively (*cf. supra* स च त्वदेकेषु॰ śl. 15, also 12) to please Káma. नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने । Amara. अप्रसिद्धं—insignificant. Its अनन्यसाधारणत्व (requiring the employment of one's special talent) is the cause of glory.

Śl. 20. सुराः—The gods, themselves the granters of boons, now solicit you. विष्टप—विशन्त्यस्मिन्सुकृतिनः इति विष्टपं; from विश् and the Uṇádi. aff. अप before which त् is inserted; the श् is changed to ष्. Páṇ. VIII. 2. 36. न चातिहिंस्रं—हिनस्ति इति हिंस्रं. *Cf.* यतः प्रयोक्तुर्न चारिहिंसा विजयश्च हस्ते । Ragh. V. 57. अहो—expresses wonder; बत—joy or satisfaction (संतोष.)

Śl. 21. मन्मथ—मत् चेतना; मथतीति मथः ( *fr.* मथ् 1. P. to shake off ); मतो मथः । The epithet is aptly used here. *cf.* D.-K. मन्मथो मां मथ्नन् निजनाम सान्वयं करोति । सहायः—*Cf.* the root-meaning सह अयते (goes) इति; अय्+अ (अच्). समीरणः &c.—Poets describe the following as natural friends:—मेघपर्वतयोरब्जसूर्ययोरब्धिचन्द्रयोः । शिखिजीमूतयोर्मैत्री वाताग्न्योश्च स्वभावतः ॥ According to Nâr. there is a fusion of the figures पर्यायोक्त and प्रतिवस्तूपमा in this śl.; भङ्ग्योक्तिभङ्ग्या वसन्तस्य नियोग एवोक्त इति पर्यायोक्तमलंकारः । तेन च प्रतिवस्तूपमायाः संसृष्टिः ।

Śl. 22. शेषा—A garland or wreath, such as is taken from an idol, or from his body by a holy personage, and given as a mark of favour or a token of good wishes. इव—Malli. has this discussion on this–What is the force of इव here? If शेषा was actually given, इव stands for यथा and the fig. is उपमा; if it was not given, it indicates उत्प्रेक्षा ( as if it were ); and as there is no

proof for or against the actual gift of शेषा ( साधकबाधकप्रमाणाभावात् ) the fig. is संदेहसंकर of उपमा and उत्प्रेक्षा; see com. मूर्ध्ना—*Cf.* तस्याज्ञां...दधुः शिरोभिर्भूपालाः &c. Ragh. XVII. 79; and गुणानुरागेण शिरोभिरुह्यते नराधिपैर्माल्यमिवास्य शासनम् ॥ Kir. I. 21. कर्कशेन—indicates Indra's habit of constantly stroking his elephant. *Cf.* सुरद्विपास्फालनकर्कशाङ्गुलौ । Ragh. III. 55; see also Ragh. VI. 73. This does not seem to be intended to convey any hidden meaning, although Chár. remarks—कर्कशशब्दं प्रयुञ्जानेन कविना भावि मरणं मन्मथस्य सूचितम् । पस्पर्श—This ( moving the hand along the body ) is the highest token of affection and regard.

Śl. 23. साशङ्कं—Fearing some mishap to her husband as she knew with whom he had to deal, for अतिस्नेहः पापशङ्की. अनुप्रयातः—For as a पतिव्रता she could not leave him in the hour of trial. अङ्गव्यय—For he too knew that the attempt might cost him his body even. प्रार्थित—Sought in right earnest. हैमवतम्—हिमवत् + अण् (अ); तत्र भव इत्यण् । *Cf.* इत्युक्तस्तेन कंदर्पः स जगाम हिमालयम् । नियोजयितुकामस्तु उमायां चन्द्रशेखरम् । पुष्पबाणधनुर्बाहुरेकया सह वै स्त्रिया ॥ Ś.–P.

Śl. 24. मुनीनां—is put in to imply that the advent of the spring would have adverse influence on the ascetic practices of ordinary sages only, but would not affect Śiva in any way. Otherwise he would have simply said तपःस० and not मुनीनां &c. तपःसमाधेः—practice of penance with a concentrated mind or undisturbed attention. अभिमानभूतं—as indicated in सहायमेकं मधुमेव लब्ध्वा । Ar. quotes—संकल्पप्रभवं कामं रतिं प्रीत्यभिमानिनीम् । अभिमानात्मकं तस्य मधुं मदनविग्रहम् । आराधयेयुः क्षितिपाः सस्त्रीका रूपकांक्षिणः ॥ *Cf.* तस्मिन्वने संयमिनां मुनीनामूर्ध्वरेतसाम् । समाधेः प्रतिकूलस्तु कामो विजयते मुने ॥ तस्मिन् शरदि कालेऽपि सर्वसंभारसंवृतः । बभूव कामसंसर्गाद्वसन्तो देहवानिव ॥ S. P. वाचालयन्नथ कुलानि वनप्रियाणामङ्कूरयन्मलयमारुतकन्दलानि । सख्युः प्रसूनविशिखस्य भुजावलेपं संवर्धयन्मधुरजृम्भत काननेषु ॥ Pár. P. III. 2.

Śl. 25. This verse has a side-meaning, *viz.* "A certain kind-hearted damsel heaved out a sigh of pain from her mouth, when her lover, an adventurous gallant, started to go to another woman, kept by some deformed person, having broken the engagement with her." The Sun is here represented as a साहसिक नायक ( bold or unscrupulous lover ), the Southern Quarter as a खण्डिता नायिका ( ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता । D.–R. II. 25 ) or a lady offended at her lover's infidelity, and the North as a प्रतिनायिका or a rival-mistress ( being the wife of Kubera ).

कुबेरगुप्तां दिशं—The North; for Kubera, see II. 21. समय—(1) दक्षिणायन; when the sun in its apparent annual revolution begins

to proceed to the north of the equator (about the 23rd of December, after the winter solstice takes place), spring sets in. Here although it was दक्षिणायन (winter), yet the sun changed its course at once and began to travel towards the north. (2) The fixed time of meeting or union. *Cf.* Ragh. जिगमिषुर्धनदाध्युषितां दिशं XI. 25. उष्णरश्मि—(1) the sun; (2) an adventurous lover. दक्षिणा–(1) the southern quarter; (2) a lady acting according to the wishes of her husband or lover. गन्धवहं—Mark the comp.; if we add अण् (कर्मणि) the form will be गन्धवाहः; words like पच (as in श्वपच), धर (चापधर &c.), वह &c. are derived by means of अच् under Pâṇ. III. 1. 134; and वाह, धार (दण्डधार), by अण् (Pâṇ. III. 2. 1). As soon as summer sets in, southerly breezes from the Malaya mountain begin to blow. व्यलीक—offence, wrong; or pain, grief. The southerly breeze is fancied as the sigh of the Southern quarter lamenting the separation of the sun. *Cf.* क्षिप्त्वा गुहासु तिमिरं विहितव्यलीकाः । Vik.-Ch. XI. 89; सुतनु हृदयात्प्रत्यादेशव्यलीकमपैतु ते । Śâk. VII. 24; एवं प्रत्यक्षदृष्टव्यलीकः किं ब्रवीमि । Rat. III., and III. 15. For the idea, *cf.* Ragh. IX. 25, and आधूय चन्दनतरूद्गतमनयास्तरङ्गमालिङ्ग्य । आदाय कमलसौरभमङ्कुरितो मलयशैलपवमानः ॥ Pâr.-P. III. 4.

Śl. 26. From here are described the effects of the influence of Madhu. The description here and in some other places is according to poetic convention (कविसंकेत). The poets think that the Aśoka requires to be struck by females with their feet adorned with anklets, so that it is able to put forth flowers. *Cf.* नूपुरान्वितपादेन तरुण्या ताडितो भृशम् । अशोकः केसरो वक्रसीधुसिक्तश्च फुल्लति ॥ Prayogaratnâvalî. See Malli.; also स्त्रीणां स्पर्शात्प्रियंगुर्विकसति बकुलः सीधुगण्डूषसेकात्पादाघातादशोकस्तिलककुरबकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात्पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरोनर्तनात्कर्णिकारः ॥ *Cf.* आकर्ण्याशोकपादाहतिषु च रणतां निर्भरं नूपुराणां । Rat. I. 18; कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति । Ragh. VIII. 62. नापैक्षत—did not wait for, did not stand in need of. For, Vasanta himself exerted such an influence. वसन्तकालस्य बलवत्तरत्वात्तदपेक्षा नासीत् । Châr. *Cf.* रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य । एकः सख्यास्तव सह मया वामपादाभिलाषी काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः । Megh. II. 18. चूताः कोरकिता विनापि सुदृशां हस्ताम्बुजास्पर्शनात्तत्पादाम्बुजताडनैरपि विना कङ्केलयः पुष्पिताः । तत्संवीतकमन्तरेण हसिता रम्याः पियालद्रुमा मुक्त्वा तद्वदनासवं मुकुलिता गन्धोत्तराः केसराः ॥ Pâr. P. III. 6. Śl. quoted in D.-R. as marking the beginning of the spring season which acts as an incentive to शृङ्गार (love).

Śl. 27. सद्यः—'the moment the arrow was finished' goes with निवेशयामास. Some take it with नीते,-the arrow being at once (and not gradually as ordinarily) fully equipped. सख्युः—*v. l.* goes with मनोभवस्य. चूत०—the mango blossom is one of the arrows of Cupid. See Notes on IV. 14. *Cf.* Śâk. VI. 8 (धनुषि चूतशरश्च निवेशितः). द्विरेफान्—A word said to be based on the word भ्रमर which contains two *refas*. *Cf.* Vâmana—लक्षणाशब्दाश्चातिप्रयुक्ताः प्रयोक्तव्याः। यथा द्विरेफरथचरणशब्दौ भ्रमरचक्रवाकार्थौ लक्षणापरौ। अनतिप्रयुक्ताश्च न प्रयोक्तव्या यथा द्विकः काक इति। See also Malli. further, on Śl. 36. नामाक्षर०—It was usual with great warriors to have their names inscribed on their arrows. See Vik. V. 7; बाणाक्षरैरेव परस्परस्य नामोर्जितं चापभृत शशंसुः। Ragh. VII. 38.

Śl. 28. कर्णिकार—has flowers of a bright red colour or of a golden hue but without smell; see III. 53. सामग्र्यविधौ-सामग्र्यस्य विधिस्तस्मिन्; सामग्र्य *fr.* समग्र+य (ष्यञ्); also सामग्री by adding ई. *Cf.* शशिनि खलु कलङ्कः कण्टकाः पद्मनाले युवतिकुचनिपातः पक्वता केशजाले। जलधिजलमपेयं पण्डिते निर्धनत्वं वयसि धनविवेको निर्विवेको विधाता॥ चन्द्रे कलङ्कः सुजने दरिद्रता सुखाप्रसादः सधनेषु सर्वदा। विकाशलक्ष्मीः कमलेषु चञ्चला यशो विधातुः कथयन्ति खण्डितम्॥ यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना। यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि॥ Subh.

Śl. 29. In this Śloka Vasanta is represented as a lover inflicting nail-wounds on the persons of the forest-sites. अविकासभावात्—owing to the state of not being full blown. *Cf.* उपहितं शिशिरापगमश्रिया मुकुलजालमशोभत किंशुके। प्रणयिनीव नखक्षतमण्डनं प्रमदया मदयापितलज्जया॥ Ragh. IX. 31. Śl. quoted in Kuv. as an instance of स्वरूपोत्प्रेक्षा.

Śl. 30. भक्ति—a beautiful arrangement of little dots making up the *tilaka* or ornamental mark on the fore-head. *cf.* अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः (तिलकः) Ragh. IX. 41. तिलके—The *tilaka* flower with bees perched on it is here figured as the ornamental mark on the forehead of Spring-Beauty while the young sun is the red paint for her with which to adorn her lip, the tender mango-leaf. ०चित्रे—read by Ar. and Nâr. is not a good reading; for it then becomes an epithet of मुखे, which is absurd, as the whole face is not dotted with collyrium राग—(1) red colour; (2) the same serving as लाक्षाराग Fig एकदेशविवर्तिरूपकम्.

Śl 31. प्रियाल—*Chironjia Sapida* M.-W. विघ्नित—विघ्न एषां संजातः ते विघ्निताः; now see com. मदोद्धताः—exhilarated with passion. मर्मर—is the sound of dry leaves falling; मर्मरः शुष्कपर्णानाम् इति यादवः। अयं च शुक्लादिशब्दवद्गुणिन्यपि वर्तते प्रयुज्यते च-'मर्मरैरगुरुधूपगन्धिभिः' इति। Malli. on Ragh. IV. 73.

Śl. 32. कषाय॰—may also be taken in the sense of सुरभित (*i. e.*, the throat; as is done by Jag. on केसरकषायकण्ठ &c. Mâl-Mâdh. VII. p. 153) and hence capable of uttering sweet sounds; सुस्वरकण्ठ इत्यर्थः। Nár. पुंस्कोकिलः—कोकिलासैन्यसंयुक्तो हिमाद्रिं प्रययौ स्मरः॥ Brah. P. मनस्विनी—High-minded ladies; ladies having a proper sense of their honour. मान॰—स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासंगिनि प्रिये; or मानश्चित्तसमुन्नतिः Amara. वचनं स्मरस्य–*viz.*, 'त्यजत मानमलं बत विग्रहैर्न पुनरेति गतं चतुरं वयः'। परभृताभिरितीव निवेदिते स्मरमते रमते स्म वधूजनः॥ Ragh. IX 47. *Cf.* प्रियसखीसदृशं प्रतिबोधिताः किमपि काम्यगिरा परपुष्टया। प्रियतमाय वपुर्गुरुमत्सराच्छिदुरयाऽदुरयाचितमङ्गनाः॥ Śiś. VI. 8; दत्तं प्रियाभिर्बहुमानपूर्वमासाद्य चूतासवमन्यपुष्टाः। आमोदिभिः पञ्चमरागभेदैः प्राबोधयन्पञ्चशरावलेपम्॥ Pa'r. P. III. 3.

Śl. 33. विशद॰—Being no longer smeared with wax-salve. Women are described as applying a kind of wax-salve to their lips to protect them from the effects of the winter cold. *Cf.* मणगुरुप्रमदाधरदुःसहं &c. Ragh. IX. 32. पत्रविशेषक—Ornamental paintings drawn by young women generally on their cheeks and bosoms with cosmetics. (Probably the custom arose originally out of the necessity to keep the upper half of the body uncovered in the hottest days of the sultry season, the paintings being devised as a substitute for the upper garment.) *Cf.* कस्तूरीमकरीः पयोधरयुगे गल्लद्वये च श्रियाः। Pras. घर्माम्भोविसरान्विवर्तनैरिदानीं मुग्धाक्ष्याः परिजनवारसुन्दरीणाम्। तत्पानविहितविचित्रपत्रलेखानैद्रग्ध्यं जहति कपोलकुङ्कुमानि॥ Mâl.-Mâdh. I. 37.

Śl. 34. आकालिकी—समानकालावाद्यन्तौ यस्याः; (the word आकाल is substituted for समानकाल by Páṇ. V. 1. 114 quoted in the com.); (पूर्वेद्युर्मध्याह्नादारभ्य दिनान्तरे तत्रैव नश्वर इति वा Sid.-Kau.); here it means–unseasonable, untimely; and may be derived from अकाल; see com. विक्रिया—a change or alteration in a particular condition or state; hence (1) perturbation, agitation as here; *cf.* IV. 41; (2) see *infra* Śl. 47 (भ्रूविक्रिया); (3) any sudden change; V. 10; (4) any undesirable or unwelcome change, evil; VI. 29.

Śl. 35. काष्ठा—प्रकर्ष excess, from काश् to shine. स्नेह–love linking together two hearts. रस—रस्यते इति what is enjoyed and which thus produces a lasting sensation of pleasure, pain &c. Here it is the sentiment of love which completely pervaded all nature. द्वंद्वानि—couples of both the vegetable and the animal kingdom. भावं—Malli. understands by this रत्याख्यशृङ्गारभाव. Rati is the Sthâyî bhâva (lasting or permanent feeling) of Śṛiṅgára 'the Erotic sentiment.' विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। आनीयमानः

स्वाद्यत्वं स्थायी भावो रसः स्मृतः ॥ Sthâyîbhâva is that which is rendered capable of being enjoyed or felt by means of Vibhâvas &c. For the meanings of these see Sâh.–Dar. or D.–R. Here we are concerned with अनुभाव which is defined as अनुभावो विकारस्तु भावसंसूचनात्मकः—Any outward effect indicating the internal state of mind or feeling, such as कटाक्षक्षेपण &c. in the case of रति. अनुभावो भावबोधकः Amara. भावस्य सूचको गुणक्रियादिः; अनुभावयतीत्यनुभावः। S.–D. defines रति as—रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितं III. 176. Its आलम्बनकारण is नायकनायिका, and उद्दीपन (excitant) अभिमतदेशकालादि. क्रियया—by their actions *i. e.* gestures &c. as described in the following slokas. *Cf.* आदाय चापमधिरोपितषट्पदज्यं तस्मिन्हिमाचलभुवेयुषि पञ्चबाणे। वेलातिलम्बि किमपि प्रणयातिरेकाद् द्वन्द्वानि लौल्यमभजन्त विमोहितानि। Pâr. P. III. 5.

Śl. 36. Now the poet proceeds to particularize the general statement made in the preceding śloka. द्विरेफः—*Lit.* a word having two *refas* in it, *i. e.* भ्रमर; and then by उपचार it signifies 'a bee.' See Malli. अनुवर्तमानः—'following his mate' (Malli.); but it seems better to take it in the sense of 'acting agreeably to, or ministering to the wishes of; pleasing, serving.' The two drank the honey together out of the same flower-bell. पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं समन्तादापानोत्सवमनुभवन्तीह मधुपाः। Nâg. III. 8. *Cf.* प्रभुचित्तमेव हि जनोऽनुवर्तते। Śis. XV 41. The Com. of S.–D. too says सेवमानः. Śl. quoted in D.–R. as an instance of कालविभाव or season serving as an excitant (inflamer of passion). विभाव is defined as ज्ञायमानतया तत्र विभावो भावपोषकृत्। Vibhâva is that, which being perceived or enjoyed, nourishes the main sentiment (नायकादिरभिमतदेशकालादिर्वा D.–R.); also in S.–D. as an instance of रसाभास or semblance of Rasa, as it is manifested by lower animals (which is regarded as real when located in mankind; अत्र हि संभोगशृङ्गारस्य तिर्यग्विषयत्वाद्रसाभासः).

Śl. 37. रसात्—through love, the reading सरःपङ्कज॰ has no propriety. *Cf.* for a similar act, Vik. IV. 23. Mark the alliterations. अर्धोपभुक्तेन—a comp. सुप्सुपा. संभावयामास–honoured, pleased. रथाङ्गनामा—Chakravâka is also called Chakra. Śl. quoted in Sar.–K. as an instance of रसाभास in beasts and birds. चिरविरचितचाटुश्चन्द्ररेखायमाणः प्रथमरसबिसाग्रग्रासलीलार्पणेन। इह रमयति हंसीं राजहंसो रिरंसुः पुलकयति च चञ्चुकोटिकण्डूयनेन ॥

Śl. 38. समुच्छ्वासित—Loosened (by being wet) and made to puff up. पुष्पासव—wine prepared from flowers (the Madhûka flowers) called माध्वी; गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा. ॰आघूर्णित—*cf.* मधु नयनयोर्विभ्रमादेशदक्षम्। Megh. II. 12; and *infra*

IV. 2. चुचुम्ब—The reading found in the printed editions is चुचुम्बे; but the reading चुचुम्ब is preferred as the root चुम्ब् is Paras. Had Malli. read चुचुम्बे he would have made some remark on the Âtm. use of the root. One Calc. commentator says—चुचुम्बे इति चुबि वक्त्रसंयोगे इत्यस्य परस्मैपदित्वेऽपि कर्मव्यतीहारे आत्मनेपदम्। But कर्मव्यतिहार ( mutual kissing ) is not meant here, as clearly shown by the words प्रियामुखं किंपुरुषः ( and not किंपुरुषौ ). Śl. quoted in Sar.-K. as an instance of किंनरेषु रसाभास.

Śl. 39. पर्याप्त—Large ( fully developed ); स्तबक a cluster of flowers.—०स्तनीभ्यः also, ई being optionally added. प्रवालोष्ठ—We have already had this comparison in śl. 30.

Śl. 40. श्रुताप्सर०—We already know that the nymphs were in attendance on Śiva ( see *supra* 17 ); their songs were particularly attractive at this times ( अस्मिन्क्षणे ) of the spring reason. प्रसंख्यान—*Lit.* Proper enumeration; right knowledge; hence thought; and lastly, deep meditation, abstract contemplation, the mind being withdrawn from external objects and fixed on the inward soul. See Yog. S. Those who hold that ख्या is used in the conjugational tenses only, derive प्रसंख्यान fr. चक्ष् with प्र and सम् ( ख्या being substituted for it ). The न्यासकार remarks संपूर्वस्य ख्यातेः प्रयोगो नास्ति. समाधि—concentration or resting the mind on one object. भेद—disturbance of. Śl. quoted in D.-R. as an instance of सत्त्व ( विकारहेतौ सत्यप्यविकारकं सत्त्वं that quality of the mind which does not allow its equilibrium to be disturbed even in the presence of causes of disturbance ), and in S.-D. as one of धैर्य or firmness ( व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ).

Śl. 41. लतागृह—लता एव लतामयं वा गृहं लतागृहं &c. नन्दी—one of the principal Gaṇas and the door-keeper of Śiva. He is a part-manifestation of Śiva and the son of Śâlaṅkâyana ( also called Śaláka; see Śiv. P. Sa. Saṃ. Ch. 44 ). *Cf.* ( महेश्वरः ) सुन्दरं तु परं रूपं धृत्वा हृदिसुखावहम् । शालङ्कायनपुत्रत्वं योगमायामुपाश्रितः ॥ In another Kalpa he was the son of शिलादमुनि. Sometimes three Nandis are mentioned—आद्यः कनकनन्दी च गिरिकाख्यो द्वितीयकः । सोमनन्दी तृतीयस्तु विज्ञेया नन्दिनस्त्रयः ॥ ०वेत्रः—वेत्र a cane-staff, the badge of a warder or door-keeper.

Śl. 42. निष्कम्पवृक्षं—On this Malli. remarks—इदमुद्भिज्जोपलक्षणं *i. e.* an indirect indication of all उद्भिज्ज ( the vegetable kingdom ). The four classes of generation are—नृगवाद्या जरायुजाः ( viviparous ); स्वेदजाः ( born from moisture ) कृमिदंशाद्याः पक्षिसर्पादयोऽण्डजाः ( oviparous—born of eggs ); उद्भिदस्तरुगुल्माद्याः ।

Amara. निभृत—still, silent. चित्रार्पितारम्भं—आरभ्यत इति आरम्भः action; रभ्+अ (घञ् कर्मणि); *cf.* Ragh. II. 31. It appears that at Nandî's command all creatures and things just stood in the condition they were in, so that their actions were transferred to a painting, as it were. Before Nandî gave the command, the trees were shaken by the Malaya breeze, the bees were astir, moving from flower to flower, the birds being impassioned were singing and the excited deer were moving about ( *supra* Śl. 31 ).

Śl. 43. दृष्टिप्रपातं—प्रपत्यतेऽस्मिन्निति प्रपातः; पत्+घञ् (अ) अधिकरणे; दृष्टेः प्रपातः दृष्टिप्रपातः the place where the eye would fall; hence the range of the eye. ०प्रतीपं—*V. l.* the opposite part or front of. पुरःशुक्रं—may also mean the planet Venus shining in the front ( पुरः संमुखे स्थितं शुक्रम् ). Nár. quotes मुहूर्तशास्त्र—आग्नेयाद्यास्तारकाः साभिजित्काः प्रागाद्याशाः संस्थिताः सप्त सप्त। यस्यां तिष्ठेद्भार्गवो दिश्यमुष्यां यात्रा पुंसां प्राणमानार्थहन्त्री ॥ प्रान्तेषु—All the sides of the place where Śiva was sitting. Nameru trees had formed an arbour there, their branches forming a canopy. This shows that it was a good place for Káma to hide himself from Śiva.

Śl. 44. देवदारुद्रुम०—देवदारुः द्रुमः तस्य वेदिका ( a dais or raised ground near the root ) शिलादिभिर्बद्धे मूलप्रदेशे इत्यर्थः। Nâr. देवदारुद्रुमाणामधोभागविरचितस्थण्डिले Châr. त्रियम्बकं—for त्र्यम्बकं to meet the exigencies of the metre, by poetical licence ( or through inadvertence ); the form त्रियम्बक is considered छान्दस; *cf.* Patañjali on the Vârttika इयङादिप्रकरणे तन्वादीनां छन्दसि बहुलम्—तन्वं पुषेम, तनुवं पुषेम; विष्वं पश्य, विषुवं पश्य; स्वर्गं लोकं, सुवर्गं लोकं; त्र्यम्बकं यजामहे, त्रियम्बकं यजामहे ॥ Such a deviation from grammar is excusable in the case of great sages and authors. Such instances are not very rare in Kâli.; see our note on तं पातयां प्रथममास Ragh. IX. 61. The use of some such epithet as त्र्यम्बकं is necessary after ०शरीरपातः to account for it. One Calc. commentator reads तं त्र्यम्बकं, but तं has no propriety here. Malli. must have been quite sure of his reading as the genuine one and hence his remark केचित्साहसिकाः &c. The following six Ślokas are to be taken with this, the seven ślokas thus forming what is called a *Kulaka*; द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकम्। कलापकं चतुर्भिः स्यात्तदूर्ध्वं कुलकं स्मृतम् ॥

Śl. 45. पर्यङ्कबन्ध—पर्यङ्कस्य बन्धः; now see com.; पर्यङ्क also called Vîrâsana or the heroic posture, is one of the postures assumed by ascetics when practising contemplation. See Malli. Śiva sat in that posture, with the upper half of his

body drawn straight up and motionless, the shoulders a little depressed owing to the lotus-like palms with their concave surfaces turned upwards being placed on the lap. The palms were placed one over the other. Some take पर्यङ्क in the sense of उत्तरासङ्ग, an upper garment or a piece of cloth worn round the loins (परिकर). *Cf.* वैकक्ष्यमुत्तरासङ्गः प्रोक्ता बृहतिका तथा । पर्यस्तिका परिकरः पर्यङ्कश्चेति कथ्यते ॥ इति हलायुधः । Some say पर्यङ्कस्य योगपट्टस्य बन्धः योगपट्टेन पृष्ठजानुजङ्घाबन्धनम् । The Com. Ava. reads ऋज्वायतांसं० and explains ऋजू सरलौ आयतौ दीर्घौ, आ ईषत्संनमितौ उभौ अंसौ यस्य । समकायं सुखासीनं समाधिस्थं महेश्वरम् । Bra. P. *Cf.* पर्यङ्कग्रन्थिबद्धद्विगुणितभुजगाश्लेषसंवीतजानोरन्तःप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य । आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्ट्या शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥ Mṛ. ch. I. 1.

Śl. 46. भुजङ्गम—भुजं वक्रं गच्छतीति, भुज+गम्+खच् (अ); see *supra* II. 38. भुजङ्गमेन वासुकिना Châr. द्विगुणा०—द्वौ गुणौ परिवृत्ती यस्य तद् द्विगुणं ; कर्णे (on the right ear) अवसक्तं द्विगुणमक्षसूत्रं यस्य. अक्षसूत्रं—Madhyamapadalopî comp. अक्ष is a seed of which rosaries are made (also called रुद्राक्ष). प्रभासङ्ग०—प्रभाभ्यङ्ग *v. l.* कण्ठप्रभाया अभ्यङ्गेन व्याप्त्या by being covered with; here अभ्यङ्ग has no propriety and it has to be taken in its secondary sense. ग्रन्थिमतीं—Having knots (which held it round the neck).

Śl. 47. किंचित्प्रकाश—Because the eyes were only slightly opened. विरत०—On account of the absence of all emotions. प्रसङ्ग—effort, intentness or operation. लक्ष्यी०—See Malli.; also समं कायशिरोग्रीवं धारयन्नचलं स्थिरः । संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ Bg. VI. 13. *Cf.* ददर्श तत्र चेशानं नासाग्रकृतलोचनम् । Brah. P.

Śl. 48. अवृष्टि०—वृष्ट्यां संरम्भः (an impetuous effort) वृष्टिसं०, न विद्यते वृष्टिसंरम्भो यस्य not going to pour down rain; this shows that the प्राणवायु was restrained in its sphere and not allowed to go down; see Malli. अपामिव &c.—*Cf.* सुप्तमीन इव ह्रदः Ragh. I. 73. This shows that *apâna* was restrained in its place. see Malli. Some *yogins* do this; see the quotation from Bg. मरुतां—These are five in number, *viz.*—हृदि प्राणो गुदेऽपानः समानो नाभिसंस्थितः । उदानः कण्ठदेशस्थो व्यानः सर्वशरीरगः ॥ निरोधात्—The restraining of. *Cf.* अपाने जुह्वति प्राणं प्राणेऽपानं तथा परे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः । अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति । Bg. IV. 29, 30. निवात &c.—*cf.* यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता । योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ Bg. VI. 19.

Śl. 49. कपालनेत्र—escaping through the hole of the eye of the skull of Brahman worn by Śiva on his head; see *infra*, VII. 32.

शिरस्तः—*i. e.* from the ब्रह्मरन्ध्र or an aperture on the crown of the head which is said to be extremely brilliant and which is connected with the Sushumṇá. Yogins, with breath restrained, kindle the fiery energy in them, make it pass through the Kuṇḍalinî, then through the central vein, Sushumṇâ, and then carrying it successively through the navel region, the heart and the middle of the eye-brows, finally cause it to issue out of the Brahmarandhra. See Pát. Yog. S. III. 32 and com. on it.

Śl. 50. नवद्वार°—The nine gates (openings in the body) through which the mind has communication with the external world. These are—द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके च मुखमेकमिति शीर्षस्थानि सप्त द्वे पायूपस्थे अधःस्थे इति नव छिद्ररूपाणि द्वाराणि देहे सन्ति । 'नयनश्रवणे द्वे द्वे नासिके वदनं तथा । पायूपस्थौ च देहेऽस्मिन्नवद्वाराणि देहिनाम्' ॥ The mind must be made अन्तर्मुख (*i. e.* turned inward from external objects). हृदि—The abode and resting place of the mind; see com. अक्षर—*Lit.* not decaying, immutable, the Supreme Soul or कूटस्थ ब्रह्म. *Cf.* अक्षरं ब्रह्म परमम् Bg. VIII. 3; द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ *Ibid.* XV. 16. क्षेत्रविदः—Those who know the body, *i. e.* its real nature and functions; hence, men learned in the Brahma-lore, also called शारीरकशास्त्र. *Cf.* इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ तत्क्षेत्रं यच्च यादृक् च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ Bg. XIII. 1, 3, 5, 6.

Śl. 51. तथाभूतं—*i. e.* sitting in an awe-inspiring posture as described above. अधृष्यं—Not to be assailed even in thought; *cf.* सा दुष्प्रधर्षा मनसापि हिंस्रैः Ragh. II. 27. सन्न—With its nervous power lost, drooping, utterly unnerved.

Śl. 52. निर्वाण°—Conspicuous or great by its extinction, *i. e.* greatly, almost destroyed; Malli. We may also take the comp. as निर्वाणं भूयिष्ठं यस्य on the analogy of अभिरूपभूयिष्ठा Śák. or उदितभूयिष्ठः Mál.-Mádh. I., the comp. being reckoned as one of the आहिताग्नि class, where we have अग्न्याहित also. Mark the *p. p. p.* of वा with निर् which is निर्वाण when 'wind' is not the subject, निर्वाणोऽग्निर्मुनिश्च । वाते तु निर्वातो वातः । Sid.-Kau. संधुक्षयन्ती—stirring up, reviving; the word is appropriate as Kâma's वीर्य is compared to fire, as suggested by the use of the word निर्वाण. वपुर्गुण—the excellence (charms or grace) of her person. वनदेवताभ्यां—These were her friends, already referred to in I. 58.

